ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं वीतरागा श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं विहायसी श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं महोत्कटा श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं मन्युकरी श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं मनुरूपा श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं मनोजवा श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं मेदस्विनी श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं मद्यरता श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं मधुपा श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं मङ्गला श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं अमरा श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं माया श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं माता श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं मृडानी श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं महिला श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं मृती श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं महादेवी श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं मोहहरी श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं धरिणी श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं धारिणी श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं धेनुर्धी श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं धानवी श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं ध्यानपरा श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं धनधान्यधराप्रदा श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं समृद्धा श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं सुभुजा श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं रौद्री श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं राधा श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं राका श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं रतिप्रिया श्री पादुकां पूजयामि तर्पयामि नमः।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं रक्षिणी श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं रञ्जिनी श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं रणपण्डिता श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं सहस्राक्षा श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं प्रतर्दना श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं सर्वज्ञा श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं शाङ्करी श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं सौरभी श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं सर्वसिद्धिप्रदा श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ऐं श्री महावाराही श्री पादुकां पूजयामि तर्पयामि नमः।**

परमहंस परिव्राजक श्री श्री श्रीज्ञानानन्देन्द्रसरस्वती विरचित महावाराही अष्टोत्तशत श्री पादुकार्चन नामवली: समाप्त।

## ४. श्री वाराही नित्याह्निक खण्डः

### *आदिवाराही नित्याह्निकम्*

तत्रादौ रजनीतुरीययामे साधको विशुद्ध्य हस्तौ पादौ प्रक्षालयेत्। तत आचमनम्। धौतवाससी परिधाय, स्वासने प्रविश्य, वराभयकरं स्वशक्त्यङ्कितवामाङ्गं निजगुरुं स्मरेत्। तद्यथा—सहस्रदलपुष्करे तुहिनरश्मिबिम्बोदरे स्वराक्षरकथादिभिः।

**प्रकर्षेण सहस्रदलकमलान्तरे वराभयकरं गुरुं धृतसुगन्धमाल्याम्बरं स्मरेच्छिरसि भास्करं तुहिनरक्तशक्त्यकुलम्।।** इति ध्यात्वा।

### *श्री गुरूपादुका स्मृति स्तोत्रम्*

**आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजबोधयुक्तम्।**
**योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं तन्तु सदा भजामि।।**

इत्युक्त्वा तत्पादुकामन्त्रं जप्त्वा पादुकास्तोत्रं जपेत्। तद्यथा—

**हेरम्बं क्षेत्रपालं च योगीशं बटुकं तथा।**
**श्रीगुरुं नाथमानन्दभैरवं भैरवीपरम्।।**

प्रणम्य संविन्मार्गस्य नागेमज्ञानहागुरून्।
प्रायश्चित्तं प्रवक्ष्यामि सर्वतन्त्राविरोधतः।
साधकानां च पुत्राणां दीक्षितानां कुलागमे।।१।।
योगिनीवीरमालाये प्रमादः सुलभः खलु।
मनसश्चञ्चलत्वाच्च सत्त्वहीनात्तथापि च।।
कामिनीनां च संसर्गात् सत्त्वहीनाच्चकार सः।
प्रायश्चित्तविहीनस्य फलं भोगाय केवलम्।।
सर्वसाक्षी महादेवो नरकानसृजत्प्रभुः।
तस्मात् सर्वप्रयत्नेन प्रायश्चित्तमिहैव तु।।
कृतस्य कर्मणः कुर्य्यादनुतापो भवेद्यदि।
प्राग्जन्मादिमहादोषप्रविलापनकारणम्।।
प्रायश्चित्तं परं सत्यं श्रीगुरोः पादुकास्मृतिः।
यस्य श्रीपादरजसा रञ्जते मस्तके शिवः।।
रमते सह पार्वत्या तस्य श्रीपादुकास्मृतिः।
यो मोहतमसाक्रान्तमुद्धरत्यन्धकूपतः।
किं बालं कृपया नाथ तस्यं श्रीपादुकास्मृतिः।।
यस्य त्रैलोद्यमखिलं सच्चिदानन्दलक्षणम्।
पूयते स्वगुणैः शक्त्या तस्य श्रीपादुकास्मृतिः।।
यस्य त्रैलोक्यमखिलं वशे तिष्ठत्यशेषतः।
स्वदृष्टिपातमात्रेण तस्य श्रीपादुकास्मृतिः।।
यस्मिन् सर्वस्वमात्मानमप्येकीकृत्य भक्तितः।
समर्पयन्ति तच्छिष्या तस्य श्रीपादुकास्मृतिः।।
यस्मिन् सृष्टिस्थितिध्वंसविग्रहानुग्रहात्मकम्।
प्रकाशकं पञ्चकृत्येयं तस्य श्रीपादुकास्मृतिः।।
मूले हृदि ललाटे च द्वादश्यान्ते चरेत् शिवः।
यस्याज्ञां पादुकाहस्ते तस्य श्रीपादुकास्मृतिः।।

अत्यन्तदृढभेद्यस्य पशुपाशविमोचनम्।
यमाहुः शाम्भवीवाचः तस्य श्रीर्यस्य पादुकाम्।।
यः सिन्धुः पादयोः कूल-पर्वतद्रुमयोरपि।
गुल्फे नक्षत्रवृन्दानि तस्य श्रीमत्पदाम्बुजे।।
वनस्पतीस्तथा रोम्णि शतरुद्राश्च जंघयोः।
जान्वोश्च क्षेत्रसन्दोहा तस्य श्रीपादुकास्मृतिः।।
इडापिङ्गलयोरन्तपादद्वन्दं च मस्तके।
गंगा च यमुना चैव मध्ये तस्य सरस्वती।।
शुक्लाक्षपदद्वन्दं मस्तके यस्य राजते।
शाम्भवं च तयोर्मध्ये तस्य श्रीपादुकास्मृतिः।।
गुरुः शिवो गुरुर्विष्णुर्गुरुर्ब्रह्मा गुरुः परः।
गुरुरग्निर्गुरुर्मन्त्रो भानुरिन्द्रस्तथैव च।।
अन्यत्सर्वं सप्रपञ्चं निष्प्रपञ्चागुरोः स्मृतिः।
तस्माच्छ्रीपादुकाध्यानं सर्वपापनिकृन्तनम्।
पालनाद् दुरितच्छेदात्कामितार्थप्रपूरणात्।।१।।
पादुकामन्त्रशब्दार्थविमर्दान्मूर्ध्नि पूजयेत्।
इति शास्त्रार्थसंकेत-रहस्यं कुलशासने।।२।।
शतपुल्लासवशादुक्तमस्माभिर्गुर्वनुग्रहात्।
श्री गुरोः पादुकास्तोत्रं प्रातरुत्थाय यः पठेत्।
नश्यन्ति सर्वपापानि वह्निना तूलराशिवत्।।
पठितव्यं प्रयत्नेन स्तोतव्यं भक्तिशालिभिः।
भोगमोक्षार्थिभिस्तस्मात्सद्भिरागमपारगैः।।
काशीक्षेत्रं निवासस्तव चरणजलं जाह्नवी श्रीगुरोर्नः
साक्षाद्विश्वेश्वरस्त्वं तव च सुनतया तारकब्रह्मबोधः।
त्वच्छ्रीपादांकिताभूरिहभवति गया त्वत्प्रसंगः प्रयागः
त्वत्तोन्यत्तीर्थदेवं क्वचिदपि च परं न प्रतीमः पृथिव्याम्।।

इति श्रीगुरुस्तोत्रम्।।

## प्रातः कृत्यम्

अथ पूजाविधि वक्ष्ये सर्वसौभाग्यदायिनम्। ब्राह्मे मुहूर्ते उत्थाय स्वशिरसि प्रातः शिरसेत्यादिना गुरुं ध्यात्वा मानसोपचारैराराध्य '**श्रीगुरुभ्यो नमः**' इति नमस्कृत्य देवीं ध्यायेत्। कुण्डलिनीं सुषुम्णां वर्तमानां षट्चक्रभेदक्रमेण परमशिवे ऐक्यं विभाव्य, मनसा आराध्य मूलादिब्रह्मरन्ध्रान्तं विसृज्य, यथाशक्तया गायत्रीं जपेत्। वाराह्यै विद्महे रत्नेश्वर्यै धीमहि तन्नो देवी प्रचोदयात् ततः सुवर्णादि पीठेन रक्तचन्दनकुंकुमादिना यन्त्रं लिखित्वा, अग्रे पीठोपरि स्थापयेत्। यथा— चतुर्वारं भूपुरवृत्तं अष्टदलपद्मं विलिख्य, तन्मध्ये भानुमण्डलं सत्त्वरजस्तमोपहं रेखायुतं त्रिकोणं विलिख्य, त्रिकोण-रेखासु त्रिद्वारयुक्तं योनिमण्डलं विलिख्य, त्रिकोणमध्ये हुं हुं फट्कारं च लिखेत्।। इति यंत्रम्।। यंत्रं लिखित्वा यथोक्तपीठे संस्थाप्य। वामे **गुरुभ्यो नमः**। दक्षिणे **गणेशाय नमः**। मध्ये **वाराहीति नमः। इति नमस्कृत्य, वाराही पूजोक्तप्रकारेण भूतशुद्धिं कुर्यात्।** इति श्लोकं पठेत्।

**ससुद्रमेखले देवि पर्वतस्तनमस्तके।**
**विष्णुपत्नि नमस्तुभ्यं त्राहि मां परमेश्वरि।।**

भूमिं संप्रार्थ्यमैत्रादिकं कर्म विधाय स्नानं कुर्यात्।

ततः परं ब्रह्मरन्ध्रं प्राणायामं भूतशुद्धिं प्राणप्रतिष्ठामात्रिकादिन्यासं कलात्मिकान्यासं च कुर्यात्।

**ॐ अस्य श्रीक्रोडवाराहीमन्त्रस्य श्रीशिव ऋषिः, जगतीच्छन्दः, क्रोडवाराही देवता, अभीष्टसिद्ध्यर्थे जपे विनियोगः।** (शिरसि) **शिवऋषये नमः।** (मुखे) **जगतीछंदसे नमः।** (हृदि) **क्रोडवाराह्यै नमः।** (सर्वङ्गे) **अभीष्टसिद्ध्यर्ते जपे विनियोगाय नमः।** अथ ऋष्यादिन्यासं कुर्यात्। यथा—

**मम शत्रूण |नाशय सीर्ध्यथे**

**ॐ ऐं ग्लौं ऐं आं खड्ग हृदयाय नमः,** कनिष्ठ्योः।

**ॐ ऐं ग्लौं ऐं इं सुखाय नमः, शिरसे स्वाहा,** अनामिकयोः।

**ॐ ऐं ग्लौं ऐं उं वज्राय नमः शिवायै वषट्,** मध्यमयोः।

**ॐ ऐं ग्लौं ऐं ऐं पाशाय नमः, कवचाय हुम्,** तर्जन्योः।

**ॐ ऐं ग्लौं ऐं ऊं अंकुशाय नमः, ऐं नेत्रेभ्यो** वौषट।

**ॐ ऐं ग्लौं ऐं ॐ अंगुष्ठयोः।**

**ॐ ऐं ग्लौं ऐं अः सरक्षाय नमः** अस्त्राय फट्।

**ॐ ऐं ग्लौं ऐं अन्यच्च वाराही अंगुष्ठाभ्यां नमः।**

**ॐ ऐं ग्लौं ऐं आदाय तर्जनीभ्यां नमः।**

ॐ ऐं ग्लौं ऐं वाराहमुखी मध्यमाभ्यां नमः।

ॐ ऐं ग्लौं ऐं अन्धे अन्धिनि अनामिकाभ्यां नमः।

ॐ ऐं ग्लौं ऐं रुन्धे रुन्धिनि कनिष्ठिकाभ्यां नमः।

ॐ ऐं ग्लौं ऐं जृंभे जृंभिणि करतलकर पृष्ठाभ्यां नमः। इति करन्यासः। **एवं हृदयादिन्यासः।**

ॐ ऐं ग्लौं ऐं क्रोडाय हृदयाय नमः।

ॐ ऐं ग्लौं ऐं वाराही शिरसे स्वाहा।

ॐ ऐं ग्लौं ऐं वाराहमुखी शिखायै वषट्।

ॐ ऐं ग्लौं ऐं अन्धे अन्धिनि कवचाय हुम्।

ॐ ऐं ग्लौं ऐं रुन्धे रुन्धि नेत्रत्रयाय वौषट।

ॐ ऐं ग्लौं ऐं जृंभे जृंभिणि अस्त्राय फट्। एवं षडंग विन्यस्य ध्यायेद् देवीं हृदम्बुजे। अथ ध्यानम्। देविध्यानं प्रवक्ष्यामि सर्वकामार्थसिद्धिदम्।

इडा च पिंगला चैव सुषुम्ना च विशेषतः।
त्रिनाडी सहिता देवी त्रिविधायास्तथा भुवि।।

रक्ताढ्यै कर्णिकांतः स्थित-शवहृदये संस्थितां क्रोडवक्त्रां
हस्ताम्भोजैर्दधानां हलमुशलवराभीतयस्त्रीक्षणाब्जे।
शक्रोस्मद्योतिविद्योजिततनुरुचिरां मुण्डमालां वहन्तीं
वार्तालीरक्तवस्त्रां स्तनभरनमितां नौमि देवीं वराहीम्।।

मध्ये चैव महादेवीं सूर्यकोटिसमप्रभाम्।
देवि त्वं च करे वामे धारयन्ती समस्तकम्।।
प्रसरितां मुखे भीमां ललितानतजिह्विकाम्।
प्रसरद्दोस्तु विस्तारां निजकण्ठं समुद्गताम्।।

विकीर्णकेशनिलयां नानाभरणभूषिताम्।
दिगम्बरां महाघोरां प्रत्यालीढप्रदक्षिणाम्।।
रतिकामोपवष्टां तां के चिद्ध्यायन्ति योगिनः।
विपरीतरतस्थां च ध्याये हृदि मनोहराम्।।

वर्णिनी-डाकिनीयुक्तां वामदक्षिणपार्श्वयोः।
दक्षिणे वर्णनीं ध्याये डाकिनीं वामके तथा।।

वर्णिनीं लोहितां सौभ्यां मुक्तकेशीं दिगम्बराम्।
कपालकर्तृकाहस्तां वामदक्षिणयोगतः।।
देवीं गलेच्छलद्रक्तधारपानं च कुर्वतीम्।
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम्।।
डाकिनी वामपार्श्वे तु कल्पांतज्वलनोपमाम्।
विद्युच्छटाभनयनां दन्तपङ्क्तिवलाकिनीम्।।
दंष्ट्राकरालवदनां पीनोन्नतपयोधराम्।
महादेवीं महाघोरां मुक्तकेशीं दिगम्बराम्।।
लेलिहानमहाजिह्वां मुंडमालाविभूषिताम्।
करस्थेन कपालेन भीषणेनातिभीषणाम्।।
आद्यां निलयतां ध्यायेत् देवीं साधकसत्तमः। इति ध्यात्वा,

## *श्रीमहावाराही लघु आवरण सपर्या*

मानसोपचारैः संपूज्य, नमस्कृत्य,अर्घ्यपात्रं स्थापयेत्पूर्ववत् क्रमात्।

ॐ ऐं ग्लौं ऐं आधारशक्ती श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ग्लौं ऐं कुर्माय श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ग्लौं ऐं अनंताय श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ग्लौं ऐं पृथिव्यै श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ग्लौं ऐं सुरासमुद्राय श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ग्लौं ऐं रत्नदीपाय श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ग्लौं ऐं कल्पतरूद्यानाय श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ग्लौं ऐं स्वर्णवेदिकाय श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ग्लौं ऐं कल्पवृक्षाय श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ग्लौं ऐं रत्नमण्डलाय श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ग्लौं ऐं रत्नसिंहासनाय श्री पादुकां पूजयामि तर्पयामि नमः।
ॐ ऐं ग्लौं ऐं आनन्दकन्दाय श्री पादुकां पूजयामि तर्पयामि नमः।

**ॐ ऐं ग्लौं ऐं संविलासाय श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं सर्वत्त्वात्मकाय श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं प्रकृतियन्त्रेभ्यो श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं विकारमयकेशरेभ्यो श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं पंचाशद्वर्णबीजायकर्णिकाय श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं अं अर्कमण्डलाय द्वादशकलात्मने श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं सं तत्त्वात्मने श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं रं रजसे श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं सों मण्डलाय श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं रं वह्निमण्डलाय श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं तं तमसे श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं ॐ आत्मने श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं अं अन्तरात्मने श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं पं परमात्मने श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं ह्रीं ज्ञानात्मने श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं ॐ सरस्वती श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं क्लीं कामाय श्री पादुकां पूजयामि तर्पयामि नमः।**
**ॐ ऐं ग्लौं ऐं (मूलं) क्रोडवाराही श्री पादुकां पूजयामि तर्पयामि नमः।** इति पूजयेत्।

सर्वकुसुमाञ्जलीयम ततः यन्त्रोपरि स्थापयेत् आवाहयेदनेन मंत्रेण

**ॐ ऐं ग्लौं ऐं** (मूलं) **सर्वसिद्धिप्रदे देवि सर्वभौभाग्यदायिनि क्रोडवाराहि तिष्ठ तिष्ठ ह्रीं ह्रीं स्वाहा**

—इति पठेत

**ततो यन्त्रोपरि प्राणप्रतिष्ठां कुर्यात्**

**ॐ ऐं ग्लौं ऐं आवाह्य ॐ ऐं ग्लौं ऐं** (मूल) **भगवति क्रोडवाराहि इहागच्छ इह तिष्ठ तिष्ठ।**
**ॐ ऐं ग्लौं ऐं** (मूल) **आवाहिता भव।** **ॐ ऐं ग्लौं ऐं सन्निरुद्धा भव।**
**ॐ ऐं ग्लौं ऐं** (मूल) **संस्थापिता भव।** **ॐ ऐं ग्लौं ऐं** (मूल) **सुमुखी भव।**
**ॐ ऐं ग्लौं ऐं** (मूल) **सन्निधापिता भव।** **ॐ ऐं ग्लौं ऐं** (मूल) **अवकुण्ठिता भव।**

इति मन्त्रैरावाहनादि षणमुद्रा प्रदर्शय। वन्दन धेनु, मुसल, स्तम्भन आकर्षण, हलायुध-योनिमुद्राश्च प्रदर्शयेत्।

देव्याः षडङ्गानि विन्यस्य, पुष्पं गृहीत्वा, पुनर्देवीं ध्यात्वा, षोडशोपचारैः पूजयेत्। मूलमन्त्रेण पाद्यादिकं दद्यात् यथा—मूलमुच्चार्य। इदं पाद्यं वाराहि **क्रोडमुखि देवतायै कल्पयामि नमः। एषोऽर्घः वाराहमुख्यायै नमः स्वाहा।** इदमाचमनीयम्। वस्त्रं आभरणानि गंधं पुष्पं धूपं दीपं च दत्त्वा। नैवेद्यं पुरतः समानीय। अर्घ्यजलेनाभ्युक्ष्यास्त्रेण संरक्ष्य, कवचेनावगुण्ठ्य, अमृतीकृत्य, तदुपरि मुलमष्टधा जप्त्वा, इदं नैवेद्यं **वाराहै कल्पयामि नमः**। इत्युत्सृज्य, अमृतोपस्तरणमसि स्वहेति जलं दत्त्वा, **प्राणाय स्वाहा। अपानाय स्वाहा। समानाय स्वाहा। उदानाय स्वाहा। व्यानाय स्वाहा।** पञ्च प्राणाहुतिं दत्त्वा। तस्या स्वीकारं विभाव्य। **अमृतापिधामसि स्वाहा।** पुनरपीशानमाचमनीयम्। **वाराही कल्पयामि नमः।** आचमनीयं दत्त्वा। एतानि तांबूलानि **वाराही कल्पयामि नमः**। पुष्पाञ्जलिं वाराहीति नमः। अं अंजलित्रयं समभ्यर्च्य, **मूलं वाराही नमः स्वाहा। इति देवीं वारत्रयं संतर्प्य। ततो देवीदक्षिणवामक्रमेण चतुष्टये चतुर्दिक्षु षडंगेनाभ्यर्च्य आवरणं पूजयेत्।**

यथा—

**ॐ ऐं ग्लौं ऐं गं गणेशाय नमः** (वायव्यां)
**ॐ ऐं ग्लौं ऐं गुं गुरुभ्यो नमः** (ऐशान्याम्)
**ॐ ऐं ग्लौं ऐं पं परमगुरुभ्यो नमः** (आग्नेयाम्)
**ॐ ऐं ग्लौं ऐं क्षं क्षेत्रपालाय नमः** (नैर्ऋत्यां)
**ॐ ऐं ग्लौं ऐं कराय नमः** (पूर्व)
**ॐ ऐं ग्लौं ऐं अति करालाय नमः**(दक्षिणे)
**ॐ ऐं ग्लौं ऐं विकलाय नमः** (पश्चिमे)
**ॐ ऐं ग्लौं ऐं महाकालाय नमः** (उत्तरे)
**ॐ ऐं ग्लौं ऐं आधारशक्तये नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं कूर्माय नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं अनन्ताय नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं पृथिव्यै नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं आनन्दकन्दाय नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं संविन्नालाय नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं पद्मासनाय नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं कर्णिकायै नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं आदित्यमण्डलाय नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं सं सत्त्वाय नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं रं रजसे नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं तं तमसे नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं ॐ सरस्वत्यै नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं ॐ कामाय नमः** (मध्ये)

इति संपूज्य।

**ॐ ऐं ग्लौं ऐं ॐ ह्रीं एकलिङ्गायै नमः**
**ॐ ऐं ग्लौं ऐं ॐ ह्रीं योगिन्यै नमः**
**ॐ ऐं ग्लौं ऐं ॐ ह्रीं डाकिन्यै नमः**
**ॐ ऐं ग्लौं ऐं ॐ ह्रीं भैरव्यै नमः**
**ॐ ऐं ग्लौं ऐं ॐ ह्रीं इन्द्राक्ष्यै नमः**
**ॐ ऐं ग्लौं ऐं ॐ ह्रीं असितायै नमः**
**ॐ ऐं ग्लौं ऐं ॐ ह्रीं रंहारायै नमः**
**ॐ ऐं ग्लौं ऐं देवीसिंहासनाय नमः** (मध्ये)
**ॐ ऐं ग्लौं ऐं ॐ ह्रीं प्रकृतिवर्णिन्यै नमः** (देवीदक्षिणे)
**ॐ ऐं ग्लौं ऐं प्रकृतिडाकिन्यै नमः** (वामे)

इति संपूज्य,

पुनरपि गंधादिभिर्देवीं संपूज्य, पुष्पाञ्जलित्रयेणाभ्यर्च्य, मे (मा) षादिबलि दद्यात्। बलिमन्त्रो यथा—

**ॐ सर्वसिद्धिप्रदे वर्णिनीये सर्वसिद्धिप्रदे डाकिनीये वाराहि एह्येहि बलिं गृहण गृहण सर्वसिद्धि देहि हूँ हूँ फट् स्वाहा। इति बलिं दत्त्वा।**

मूलमष्टोत्तरशतं सहस्रं वा जपेत्। अथ गायत्री मन्त्रः। "**ह्रीं विद्महे तन्नो देवि प्रचोदयात्**"— इति जप्त्या,

**मूलं जपेत्। जपं समर्प्य, प्राणायामं कृत्वा, पुष्पं गृहीत्वा, इति मंत्रेण प्रार्थयेत्। तत्र मन्त्रः—**

**उत्तरे शिखरेजाता भूम्यां पर्वतवाशिनी।**
**ब्रह्मयोनिसमुत्पन्ने गच्छ देवि ममान्तरे।।**

इति पठेत्। देवीमन्तर्नीत्वा हृत्पद्मे संस्थाप्यात्मानं तद्रूपं विभाव्य, निर्माल्यं शिरसि धृत्वा, चरणामृतं पीत्वा, यथासुखं विहरेत्।।

।।इति रुद्रयामले तंत्रे उमामहेश्वरसंवादे आदिवाराही-लघु आवरण सपरर्या पद्धतिः समाप्ता।।

## *आदिवाराहीकवचम्*

**ॐ अस्य ॐ ऐं ग्लौ श्री वाराहीकवचमन्त्रस्य, त्रिलोचनऋृषिः।**
**ॐ ऐं ग्लौं अनुष्टुपदन्दः।**
**ॐ ऐं ग्लौं श्रीआदिवाराहीदेवता।**
**ॐ ऐं ग्लौं बीजम्। ॐ ऐं ग्लौं स्वाहा शक्तिः।**
**ॐ ऐं ग्लौं ऐं कीलकम्। अभीष्टसिध्यानमर्थे जंपे विनियोगः।।**

**ध्यत्वेन्द्रनीलवर्णाभां चन्द्रसूर्याग्निलोचनाम्। विधिविष्णुसुरेन्द्रादिमातृभैरवसेविताम्।।१।।**
**हारनूपुरकेयूरवलयेरुपशोभिताम्। ज्वलन्मणिगणप्रोतमुकुटोज्ज्वलसोभिताम्।।२।।**
**शस्त्राण्यस्त्राणि सर्वाणि स्वकार्य्यकरणानि च। करैः समस्तैर्विविधैर्बिभ्रतीं मुशलं हलम्।३।।**
**वाराहीदेविकवचं भुक्तिमुक्तिफलप्रदम्। पठेत्रिसन्ध्यं रक्षार्थं रोगशत्रनिकृन्तये।।४।।**
**मेधश्यामरुचिं मनोहरकुचां नेत्रत्रयोद्भासितां कोलास्यां शशिशेखरामचलितैः दंष्ट्रातलैः शोभिताम्।**
**बिभ्राणां स्वकराम्बुजैरसिलतां चर्मासिपाशंमणिं वाराहीमनुचिन्तये ध्रु ववरारूढां शुभालंकृतिम्।।५।।**
**ॐ वर्ताली मे शिरः पातु वाराही भालमुत्तमम्। नेत्रे वराहवदना पातु कर्णौ तथान्धिनी।।६।।**
**रुन्धिनी नासिका पातु मुखं पातु सुजंभिनी। पातु मे मोहिनी जिह्वां स्तम्भिनी कण्ठमादरात्।।७।।**
**स्कन्धौ तु पञ्चमी पातु भ्रवौ महिषराहिनी। सिंहारूढा करौ पातु कुक्षौ कृष्णमुखी सदा।।८।।**

हलायुधं च वक्षश्च मध्यमे मुशली मम। नाभिं तु शंखिनी पातु पृष्ठदेशे तु चक्रिणी।।९।।
खड्गिनी पातु कट्यां तु मेढ्रयोः पातु खेटकी। गुदं च क्रोडिनी पातु जघनं स्तम्भिनी तथा।।१०।।
चण्डोच्चण्डा च ऊरू च जानुनी शत्रुमर्दिनी। जंघाद्वयोर्भद्रकाली चामुण्डा गुल्फयोर्द्वयोः।।११।।
पादौ त्वङ्ग लीश्चैव पातु चोन्मत्तभैरवी। सर्वाङ्ग सततं पातु कालसंदीपनी मम।।१२।।
वाराहीकवचं दिव्यं सर्वसिद्धिप्रदायकम्। सर्वशत्रुक्षयकरं सर्वकार्यकरं शुभम्।।१३।।

इति श्रीरूद्रयामले तन्त्रे उमामहेश्वर संवादे आदिवाराहे कवचं समाप्तम्।

## ५. वाराही स्तोत्र खण्डः

### *वाराहीस्तोत्रम्*

यथा—

कुवलयनिभा कौशेयार्धोरुका मकुटोज्ज्वला हलमुसलिनी सद्भक्तेभ्यो वराभयदायिनी।
कपिलनयना मध्ये क्षामा कठोरघनस्तनी जयति जगतां मातः सा ते वराहमुखी तनुः।।१।।
तरति विपदो घोरा दूरात्परिह्रियते भयस्खलितमतिभिर्भूतप्रेतैः स्वयं व्रियते श्रिया।
क्षपयति रिपूनीष्टे वाचां रणे लभते जयं वशयति जगत्सर्वं वाराहि यस्त्वयि भक्तिमान्।।२।।
स्तिमितगतयस्सीदद्वाचः परिच्युतहेतयः क्षुभितहृदयास्सद्यो नश्यद्दृशो गळितौजसः ।
भयपरवशा भग्नोत्साहाः पराहतपौरुषाः भगवति पुरस्त्वद्भक्तानां भवन्ति विरोधिनः ।।३।।
किसलयमृदुर्हस्तः क्लिश्येत कन्तुकलीलया भगवति महाभारः क्रीडासरोरुहमेव ते ।
तदपि मुसलं धत्से [1]हस्ते हलं समयद्रुहां हरसि च तदाघातैः प्राणानहो तव साहसम् ।।४।।
जननि नियतस्थाने त्वद्वामदक्षिणपार्श्वयोः मृदुभुजलतामन्दाक्षेपप्रपर्तितचामरे ।
सततमुदिते गुह्याचारद्रुहां रुधिरासवैरुपशमयतां शत्रून् सर्वानुभे मम दैवते ।।५।।
हरतु दुरितं क्षेत्राधीशः स्वशासनविद्विषां रुधिरमदिरामत्तः प्राणोपहारबलिप्रियः ।
अविरतचटत्कुर्वद्दंष्ट्रास्थिकोटिरटन्मुखो भगवति स ते चण्डोच्चण्डः सदा पुरतः स्थितः।।६।।
क्षुभितमकरैर्वीचीहस्तोपरुद्धपरस्परैश्चतुरुदधिभिः क्रान्ता कल्पान्तदुर्ललितोदकैः ।
जननि कथमुत्तिष्ठेत् पातालसर्पबिलादिला तव तु कुटिले दंष्ट्राकोटी न चेदवलम्बनम् ।।७।।
तमसि बहुळे शून्याटव्यां पिशाचनिशाचरप्रमथकलहे चोरव्याघ्रोरगद्विपसङ्कटे ।
क्षुभितमनसः क्षुद्रस्यैकाकिनोऽपि कुतो भयं सकृदपि मुखे मातस्त्वन्नाम सन्निहितं यदि।।८।।
विदितविभवं हृद्यैः पद्यैर्वराहमुखीस्तवं सकफलदं पूर्णं मन्त्राक्षरैरिममेव यः ।
पठति स पटुः प्राप्नोत्यायुश्चिरं कवितां प्रियां सुतसुखधनारोग्यं कीर्तिं श्रियं जयमुर्वराम्।।९।।

पुनरपि गंधादिभिर्देवीं संपूज्य, पुष्पाञ्जलित्रयेणाभ्यर्च्य, मे (मा) षादिबलि दद्यात्। बलिमन्त्रो यथा—

**ॐ सर्वसिद्धिप्रदे वर्णिनीये सर्वसिद्धिप्रदे डाकिनीये वाराहि एह्येहि बलिं गृहण गृहण सर्वसिद्धि देहि हूँ हूँ फट् स्वाहा। इति बलिं दत्त्वा।**

मूलमष्टोत्तरशतं सहस्रं वा जपेत्। अथ गायत्री मन्त्रः। **''ह्रीं विद्महे तन्नो देवि प्रचोदयात्''**— इति जप्त्वा,

**मूलं जपेत्। जपं समर्प्य, प्राणायामं कृत्वा, पुष्पं गृहीत्वा, इति मंत्रेण प्रार्थयेत्। तत्र मन्त्रः—**

**उत्तरे शिखरेजाता भूम्यां पर्वतवाशिनी।**
**ब्रह्मयोनिसमुत्पन्ने गच्छ देवि ममान्तरे।।**

इति पठेत्। देवीमन्तर्नीत्वा हृत्पद्मे संस्थाप्यात्मानं तद्रूपं विभाव्य, निर्माल्यं शिरसि धृत्वा, चरणामृतं पीत्वा, यथासुखं विहरेत्।।

।।इति रुद्रयामले तंत्रे उमामहेश्वरसंवादे आदिवाराही-लघु आवरण सपरर्या पद्धतिः समाप्ता।।

## आदिवाराहीकवचम्

**ॐ अस्य ॐ ऐं ग्लौ श्री वाराहीकवचमन्त्रस्य, त्रिलोचनऋषिः।**
**ॐ ऐं ग्लौं अनुष्टुपछन्दः।**
**ॐ ऐं ग्लौं श्रीआदिवाराहीदेवता।**
**ॐ ऐं ग्लौं बीजम्। ॐ ऐं ग्लौं स्वाहा शक्तिः।**
**ॐ ऐं ग्लौं ऐं कीलकम्। अभीष्टसिध्यानमूर्थे जंपे विनियोगः।।**

**ध्यत्वेन्द्रनीलवर्णाभां चन्द्रसूर्याग्निलोचनाम्। विधिविष्णुसुरेन्द्रादिमातृभैरवसेविताम्।।१।।**
**हारनूपुरकेयूरवलयेरुपशोभिताम्। ज्वलन्मणिगणप्रोतमुकुटोज्ज्वलसोभिताम्।।२।।**
**शस्त्राण्यस्त्राणि सर्वाणि स्वकार्य्यकरणानि च। करैः समस्तैर्विविधैर्बिभ्रतीं मुशलं हलम्।३।।**
**वाराहीदेविकवचं भुक्तिमुक्तिफलप्रदम्। पठेत्त्रिसन्ध्यं रक्षार्थं रोगशत्रनिकृन्तये।।४।।**
**मेधश्यामरुचिं मनोहरकुचां नेत्रत्रयोद्भासितां कोलास्यां शशिशेखरामचलितैः दंष्ट्रातलैः शोभिताम्।**
**बिभ्राणां स्वकराम्बुजैरसिलतां चर्मासिपाशंमणिं वाराहीमनुचिन्तये ध्रु ववरारूढां शुभालंकृतिम्।।५।।**
**ॐ वर्ताली मे शिरः पातु वाराही भालमुत्तमम्। नेत्रे वराहवदना पातु कर्णौ तथान्धिनी।।६।।**
**रुन्धिनी नासिका पातु मुखं पातु सुजंभिनी। पातु मे मोहिनी जिह्वां स्तम्भिनी कण्ठमादरात्।।७।।**
**स्कन्धौ तु पञ्चमी पातु भ्रवौ महिषराहिनी। सिंहारूढा करौ पातु कुक्षौ कृष्णमुखी सदा।।८।।**

हलायुधं च वक्षश्च मध्यमे मुशली मम। नाभिं तु शंखिनी पातु पृष्ठदेशे तु चक्रिणी।।९।।
खङ्गिनी पातु कट्यां तु मेढ्रयोः पातु खेटकी। गुदं च क्रोडिनी पातु जघनं स्तम्भिनी तथा।।१०।।
चण्डोच्चण्डा च ऊरू च जानुनी शत्रुमर्दिनी। जंघाद्वयोर्भद्रकाली चामुण्डा गुल्फयोर्द्वयोः।।११।।
पादौ त्वङ्ग लीश्चैव पातु चोन्मत्तभैरवी। सर्वाङ्ग सततं पातु कालसंदीपनी मम।।१२।।
वाराहीकवचं दिव्यं सर्वसिद्धिप्रदायकम्। सर्वशत्रुक्षयकरं सर्वकार्यकरं शुभम्।।१३।।

इति श्रीरूद्रयामले तन्त्रे उमामहेश्वर संवादे आदिवाराहे कवचं समाप्तम्।

## ५. वाराही स्तोत्र खण्डः

### *वाराहीस्तोत्रम्*

यथा—

कुवलयनिभा कौशेयार्धोरुका मकुटोज्ज्वला हलमुसलिनी सद्भक्तेभ्यो वराभयदायिनी।
कपिलनयना मध्ये क्षामा कठोरघनस्तनी जयति जगतां मातः सा ते वराहमुखी तनुः।।१।।
तरति विपदो घोरा दूरात्परिह्रियते भयस्खलितमतिभिर्भूतप्रेतैः स्वयं व्रियते श्रिया।
क्षपयति रिपूनीष्टे वाचां रणे लभते जयं वशयति जगत्सर्वं वाराहि यस्त्वयि भक्तिमान्।।२।।
स्तिमितगतयस्सीदद्वाचः परिच्युतहेतयः क्षुभितहृदयास्सद्यो नश्यद्दृशो गळितौजसः ।
भयपरवशा भग्नोत्साहाः पराहतपौरुषाः भगवति पुरस्त्वद्भक्तानां भवन्ति विरोधिनः ।।३।।
किसलयमृदुर्हस्तः क्लिश्येत कन्तुकलीलया भगवति महाभारः क्रीडासरोरुहमेव ते ।
तदपि मुसलं धत्से [1]हस्ते हलं समयद्रुहां हरसि च तदाघातैः प्राणानहो तव साहसम् ।।४।।
जननि नियतस्थाने त्वद्वामदक्षिणपार्श्वयोः मृदुभुजलतामन्दाक्षेपप्रवर्तितचामरे ।
सततमुदिते गुह्याचारद्रुहां रुधिरासवैरुपशमयतां शक्रून् सर्वानुभे मम दैवते ।।५।।
हरतु दुरितं क्षेत्राधीशः स्वशासनविद्विषां रुधिरमदिरामत्तः प्राणोपहारबलिप्रियः ।
अविरतचटत्कुर्वद्दंष्ट्रास्थिकोटिरटन्मुखो भगवति स ते चण्डोच्चण्डः सदा पुरतः स्थितः।।६।।
क्षुभितमकरैर्वीचीहस्तोपरुद्धपरस्परैश्चतुरुदधिभिः क्रान्ता कल्पान्तदुर्ललितोदकैः ।
जननि कथमुत्तिष्ठेत् पातालसर्पबिलादिला तव तु कुटिले दंष्ट्राकोटी न चेदवलम्बनम् ।।७।।
तमसि बहुळे शून्याटव्यां पिशाचनिशाचरप्रमथकलहे चोरव्याघ्रोरगद्विपसङ्कटे ।
क्षुभितमनसः क्षुद्रस्यैकाकिनोऽपि कुतो भयं सकृदपि मुखे मातस्त्वन्नाम सन्निहितं यदि।।८।।
विदितविभवं हृद्यैः पद्यैर्वराहमुखीस्तवं सकफलदं पूर्णं मन्त्राक्षरैरिममेव यः ।
पठति स पटुः प्राप्नोत्यायुश्चिरं कवितां प्रियां सुतसुखधनारोग्यं कीर्तिं श्रियं जयमुर्वराम्।।९।।

## इत्यनुग्रहष्टकम्

देवि क्रोडमुखि त्वदङ्घ्रिकमलद्वन्द्वानुषक्तात्मने मह्यं द्रुह्यति यो महेशि मनसा कायेन वाचा नरः।
[1]तस्याद्य त्वदयोऽग्रनिष्ठुरहलाघातप्रभूतव्यथापर्यस्यन्मनसो भवन्तु वपुषः प्राणाः प्रयाणोन्मुखाः।।१।।
देवि त्वत्पदपद्मभक्तिविभवप्रक्षीणदुष्कर्मणि प्रादुर्भूतनृशंसभावमलिनां वृत्तिं विधत्ते मयि।
यो देही भुवने तदीयहृदयान्निर्गतवैरैर्लोहितैः सद्यः पूरयसे कराब्जचषकं वाञ्छाफलैममिपि।।२।।
चण्डोच्चण्डमखण्डदुष्टहृदयप्रोक्षिप्तरक्तच्छटाहालापानमदाट्टहासजनिताटोप[2]प्रतापोत्कटम्।
मातर्मत्परिपन्थिनामपहृतैः प्राणैस्तवदङ्घ्रिद्वयध्यानो[3] ड्डामरवैर्भवोदयवशात् सतन्तर्पयामि क्षणात्।।३।।
वाराहि व्यथमानमानसगळत्संज्ञं त्वदाज्ञाबलात् सीदद्धैर्यमपाकृताध्यवसितं प्राप्ताखिलार्थाहतिम्।
क्रन्दद्बन्धुजनं कळङ्कितकुलं कण्ठे व्रणोद्यत्कृमिं पश्यामि प्रतिपक्षमाशु सततं श्रान्तं लुठन्तं पुनः।।४।।
वाराहि त्वमशेषजन्तुषु पुनः प्राणात्मिका स्पन्दसे शक्तिव्याप्तचराचरामिह खलु त्वामेतद भ्यर्थये।
त्वत्पादाम्बुजसङ्गिनो मम सकृत् पापं चिकीर्षन्ति ये तेषां मा कुरु शङ्करप्रियतमे देहान्तरावस्थितिम्।।५।।
विश्वाधीश्वरवल्लभे विजयसे या त्वं नियत्यात्मिके भूतानां पुरुषायुषावदिकरी पाकप्रदा कर्मणाम्।
तां याचे भवथीं किमप्यवितथं योऽस्मद्विरोधी जनस्तस्यायुर्मम वाञ्छितावधि भरेन्मातस्तवैवाज्ञया।।६।।
मातस्सम्यगुपासितं जडमतिस्त्वां नाद्य शक्नोम्यहं यद्यप्यञ्चितदेशिकाङ्घ्रिकमलानुक्रोशपात्रस्य में।
जन्तुः कश्चन चिन्तयत्यकुशलं यस्तस्य तद्वैशसं भूयाद्देवि विरोधिनो मम [4]च ते श्रेयः पदासङ्गिनः।।७।।
श्यामां तामसारूणत्रिनेत्राम् सोमार्ध चूडाम् जगत्त्राणव्‍ग्रहलामुदग्रसुलामत्रस्तमुद्रावतीम्।
ये त्वां स्क्तकपोलिना शिववरारोड वराहाननाम् भावे सन्दधते कथं क्षणमपि प्राणन्ति तेषां द्विषः।।८।।

इति निग्रहाष्टकम्

श्रीगणएशाय नमः।

## अदिवाराहीस्तोत्रम्

देव्युवाच।।

नमोऽस्तु देवी वाराही जयैकारश्वरूपिणी। जपित्वा भूमिरूपेण नमो भगवती प्रिये।।१।।
जयक्रोडास्तु वाराही देवी त्वां च नमाम्यहम्। जय वाराहि विश्वेशी मुख्यवाराहि ते नमः।।२।।

---

१. सकद्यत्त्वत्पदा—भ, ब२, ब३, अ,   २. तस्याशु—श्री, अ१.
३. स्फुरद्रक्षसमव२, ब३, अ, ध,   ४. ड्डामरवैभ—ब१, ब२, अ.

मुख्यवाराहि वन्दे त्वां अन्धेअंधिनि ते नमः। सर्वदुष्टप्रदुष्टानां वाकस्तम्भनकारी नमः।।३।।
नमः स्तम्भिनि स्तम्भे त्वां जृम्भे जृम्भिणि ते नमः। रुन्धे रुन्धिनि वन्दे त्वां नमो देवी तु मोहिनी।।४।।
स्वभक्तानां हि सर्वेषां सर्वकामप्रदे नमः। बाह्वोः स्तम्भकरी वन्दे त्वां जिह्वास्तम्भनकारिणी।।६।।
स्तम्भनं कुरु शत्रूणां कुरु मे शत्रुनाशनम्। शीघ्रं वश्यं च कुरुते योऽग्नौ वाचात्मके नमः।।७।।
टचतुष्टयरूपे त्वां शरणं सर्वदा भजे। होमात्मके फट्रूपेण जय आद्यानने शिवे।।८।।
देहि मे सकलान्कामान् वाराही जगदीश्वरी। नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमोनमः।।९।।
इदमाद्यानना स्तोत्रं सर्वपापविनाशनम्। पठेद्यः सर्वदा भक्त्या पातकैर्मुच्यते तथा।।१०।।
लभन्ते शत्रवो नाशं दुःखरोगापमृत्यवः। महदायुष्यमाप्नोति अलक्ष्मीर्नाशमाप्नुयात्।।११।।

## आदिवाराहीसहस्रनाम:

श्रीदेव्युवाच।

श्रीकण्ठ करुणासिन्धो दीनबन्धो जगत्पते। भूतिभूषितसर्वाङ्ग परात्परतर प्रभो।।१।।
कृताञ्जलिपुटा भूत्वा पृच्छाम्येकं दयानिधे। आद्या या चचित्रवरूपा या निविकारा निरञ्जना।।२।।
बोधातीता ज्ञानगम्या कूटस्थाऽऽनन्दविग्रहा। अग्राह्याऽतीन्द्रिया शुद्धा निरीहा स्वापभासिका।।३।।
गुणातीता निष्प्रपञ्चा ह्यवाङ्मनसगोचरा। प्रकृतिर्जगदुत्पत्तिस्थितिसंहारकारिणी।।४।।
रक्षार्थे जगतां देवकार्यार्थं वा सुरद्विषाम्। नाशाय धत्ते सा देहं तत्तत्कार्यैकसाधनम्।।५।।
तत्र भूधरणार्थाय यज्ञविस्तारहेतवे। विद्युत्क्लेशहिरण्याक्षवलाकादिवधाय च ।।६।।
आविर्बभूवया शक्तर्घोरा भूदाररूपिणी। वाराही विकटाकारा दानवासुरनाशिनी।।७।।
सद्यःसिद्धिकरी देवी घोरा घोरतरा शिवा। सस्याः सहस्रनामाख्यं स्तोत्रं मे समुदीरय।।८।।
कृपालेशोऽस्ति मयि चेद्भाग्यं मे यदि वा भवेत्। अनुग्राह्या यद्यहं स्यां तदा वद दयानिधे।।९।।

ईश्वरोवाच।

साधु साधु वरारोहे धन्या बहुमतासि मे। शुश्रूषादिसमुत्पन्ना भक्तिश्रद्धान्विता तव।।१०।।
सहस्रनामि वाराह्याः सर्वसिद्धविधायि च। तव चेन्न प्रवक्ष्यामि प्रिये कस्य वदाम्यहम्।।११।।
किन्तु गोप्यं प्रयत्नेन संरक्ष्यं प्राणतोऽपि च। विशेषतः कलियुगे न देयं यस्य कस्यचित्।।१२।।
सर्वेऽन्यथा सिद्धिभाजो भविष्यन्ति वरानने।

ॐ अस्य श्रीवाराहीसहस्रनामस्तोत्रस्य महादेव ऋषिः। अनुष्टुछन्दः। वाराही देवता। ऐं बीजम्। क्रों शक्तिः। हूँ कीलकम्। मम सर्वार्थसिध्यर्थे जपे विनियोगः।

ॐ वाराही वामनी वामा बगला वासवी वसुः। वैदेही वीरसूर्बाला वरदा विष्णुबल्लभा।।१३।।
वन्दिता वसुदा वश्या व्यात्तास्या वञ्चिनी बला। वसुन्धरा वीतिहोत्रा वीतरागा विहायसी।।१४।।
सर्वा खनिप्रिया काम्या कमला काञ्चनी रमा। धूम्रा कपालिनी वामा कुरुकुल्या कलावती।।१५।।
याम्याऽऽग्नेयी धरा धन्या धर्मिणी ध्यानिनी ध्रुवा। धृतिर्लक्ष्मीर्जया तुष्टिः शक्तिर्मेधा तपस्विनी।।१६।।
वेधा जया कृतिः कान्तिः स्वाहा शान्तिर्दमा रतिः। लज्जा मतिः स्मृतिर्निद्रा तन्द्रा गौरी शिवा स्वधा।।१७।।
चण्डी दुर्गाऽभया भीमा भाषा भामा भयानका। भूदारा भयहा भीरुभैरवी भङ्गरा भटी।।१८।।
घुर्घुरा घोषणा घोरा घोषिणी घोणसंयुता। घनाघना घर्घरा च घोणयुक्ताऽघनाशिनी।।१९।।
पूर्वाग्नेयी पातु याम्या वायव्युत्तरवारुणी। ऐशान्यूर्द्ध्वाधःस्थिता च पृष्ठं दक्षाग्रवामगा।।२०।।
हृन्नाभिब्रह्मरन्ध्रार्कस्वर्ग्गपातालभूमिगा। ऐं श्रीः ह्रीः क्लीं तीर्थगतिः प्रीतिर्धीर्गीः कलाऽव्यया।।२१।।
ऋग्यजुःसामरूपा च परा या त्रीण्युदुम्बरा। गदासिशक्तिचापेषुशूलचक्रर्ष्टिधारिणी।।२२।।
जरती युवती बाला चतुरङ्गबलोत्कटा। सत्याक्षरा चाधिभेत्री धात्री पात्री परा पटुः।।२३।।
क्षेत्रज्ञा कंपिनी ज्येष्ठा दुराधर्षा धुरन्धरा। मालिनी मानिनी माता माननीया मनस्विनी।।२४।।
महोत्कटा मन्युकरी मनुरूपा मनोजवा। मेदस्विनी मद्यरता मधुपा मङ्गलाऽमरा।।२५।।
माया माताऽऽमयहरी मृडानी महीला मृतिः। महादेवी मोहहरी मञ्जुमृत्युञ्जयाऽमला।।२६।।
मांसला मानवा मूला महारात्रिर्महालसा। मृगाङ्कमीनकारी स्यान्महिषघ्नी मदन्तिका।।२७।।
मूर्च्छामोहमृषामोघामदमृत्युममलापहा। सिंहर्क्षमहिषव्याघ्रमृगक्रोडानना धुनी।।२८।।
धरिणी धारिणी धेनुर्धरित्री धावनी धवा। धर्मध्वना ध्यानपरा धनदान्यधराप्रदा।।२९।।
पापदोषरिपुव्याधिनाशिनी सिद्धिदायिनी। कलाकाष्ठापापक्षाऽहस्त्रुटिश्वासरूपिणी।।३०।।
समृद्धा सुभुजा रौद्री राधा राका रमाऽरणिः। रामा रतिप्रिया रुष्टा रक्षिणी रविमध्यगा।।३१।।
रजनी रमणी रेवा रङ्किनी रञ्जिनी रमा। रोषा रोषवती रूक्षा करिराज्यप्रदा रता।।३२।।
रूक्षा रूपवती रास्या रुद्राणी रणपण्डिता। गङ्गा च यमुना चैव सरस्वतिस्वसूर्मधूः।।३३।।
गण्डकी तुङ्गभद्रा च कावेरी कौशिकी पटुः। खट्वोरगवती चारा सहस्राक्षा प्रतर्दना।।३४।।
सर्वज्ञा शाङ्करी शास्त्री जटाधारिण्ययोरदा। यावनी सौरभी कुब्जा वक्रतुण्डा वधोद्यता।।३५।।
चन्द्रापीडा वेदवेद्या शंखिनी नीललोहिता। ध्यानातीता परिच्छेद्या मृत्युरूपा त्रिवर्गदा।।३६।।
अरूपा बहुरूपा च नानारूपा नतानना। वृषाकपिर्वृषारूढा वृषेशी वृषवाहना।।३७।।
वृषप्रिया वृषावर्ता वृषपर्वा वृषाकृतिः। कोदण्डिनी नागचूडा चक्षुष्या परमार्थिका।।३८।।
दुर्वासा दुर्गहा देवी दुरावासा दुरारिहा। दुर्गा राधा दुर्गहंत्री दुराराध्या दवीयसी।।३९।।

दुरावासा दुःप्रहस्ता दुःप्रकम्पा दुरूहिणी। सुवेणी श्रमणी श्यामा मृगव्याधार्कतापिनी।।४०।।
दुर्गा तार्क्ष्यी पाशुपती कौणपी कुणपाशना। कपर्दिनी कामकामा कमनीया कलोज्ज्वला।।४१।।
कासावहृत्कारकानी कम्बुकण्ठी कृतागमा। कर्कशा कारणा कान्ता कल्पाकल्या कटङ्कटा।।४२।।
श्मशाननिलया भिन्नी गजारूढा गजापहा। तत्प्रिया तत्परा राया स्वर्भानुः कालवंचिनी।।४३।।
शाखा विशिका गोशाखा सुशाखा शेखशाखिनी। व्यङ्गा सुभाङ्गा वामाङ्गा नीलाङ्गाऽनङ्गरूपिणी।।४४।।
साङ्गोपाङ्गा च शारङ्गा सुभाङ्गा रङ्गरूपिणी। भद्रा सुभद्रा भद्राक्षी सिंहिका विनताऽदितिः।।४५।।
हृद्यावद्या सुपद्या च गद्यपद्यप्रियाप्रसूः। चर्चिका भोगवत्यम्बा सारसी सवरी नटी।।४६।।
योगिनी पुष्कलाऽनन्ता परासांख्या शची सती। निम्नगा निम्ननाभिश्च सहिष्णुर्जाग्रती लिपिः।।४४।।
दमयन्ती दमी दण्डोद्दण्डिनी दारदायिका। दीपिनी दाविनी दात्री दक्षकन्या दरीद्रत्।।४८।।
दाहिनी द्राविणी दर्वी दण्डिनी दण्डनायिका। दानप्रिया दोषहन्त्री दुःखदारिद्र्यनाशिनी।।४९।।
दोषदा दोषकृद्द्रोग्ध्री दोहदी देविकाऽदना। दर्वीकरी दुर्वलिता दुर्युगाऽद्वयवादिनी।।५०।।
चराचरानन्तवृष्टिरुन्मत्ता कमलालसा। तारिणी तारकान्तारा परमात्मा कुब्जलोचना।।५१।।
इन्दुर्हिरण्यकवचा व्यवस्था व्यवसायिका। ईशनन्दा नदी नागी यक्षिणी सर्पिणी वरी।।५२।।
सुधा सुरा विश्वसहा सुवर्णाङ्गदधारिणी। जननी प्रीतिपाकेरुः साम्राज्ञी संविदुत्तमा।।५३।।
अमेयाऽरिष्टदमनी पिङ्गला लिङ्गधारिणी। चामुण्डा प्लाविनी हाला बृहज्ज्योतिरुरुक्रमा।।५४।।
सुप्रतीका च सुग्रीवा हव्यवाहा प्रलापिनी। नभस्या माधवी ज्येष्ठा शिशिरा ज्वालिनी रुचिः।।५५।।
शुक्ला शुक्रा शुचा शोका शुकी भेकी पिकी बकी। पृषदश्वा नभोयोनिः सुप्रतीका विभावरी।।५६।।
गर्विता गुर्विणी गण्या गुरुर्गुरुतरी गया। गन्धर्वी गणिका गुन्द्रा गारुडी गोपिकाऽग्रगा।।५७।।
गणेशी गामिनी गन्ता गोपतिर्गन्धिनी गवी। गर्जिता गावैननी गोना गोरक्षा गोविदां गतिः।।५८।।
ग्राथिकी ग्रथिकृद्गोष्ठी गर्भरूपा गुणैषिणी। पारस्करी पाञ्चनदा बहुरूपा विरूपिका।।५९।।
उहा बूहा दुरूहा च सम्मोहा मोहहारिणी। यज्ञविग्रहिणी यज्ञा याजयूका य़शश्विनी।।६०।।
अग्निष्टोमोऽत्यग्निष्टोमो वाजपेयश्च षोडशी। पुण्डरीकोऽश्वमेधश्च राजसूयश्च नाभसः।।६१।।
स्विष्टकृद्बहुसौवर्णो गोसवश्च महाव्रतः। विश्वजिद्ब्रह्मयज्ञश्च प्राजापत्यः शिलायवः।।६२।।
अश्वक्रान्तो रथक्रान्तो विष्णुक्रान्तो विभावसुः। सूर्यक्रान्तो गजक्रान्तो बलिभिन्नागयज्ञकः।।६३।।
सावित्री चार्द्धसावित्री सर्वतोभद्रवारुणः। आदित्याम यगोदोहगवामयमृगामयाः।।६४।।
सर्पमयः कालपिञ्जः कौडिण्योपनकाहलः। अग्निविद्द्वादशाहस्वो पांशुः सोमविधोहनः।।६५।।

अश्वप्रतिग्रहो बर्हिरथोऽभ्यचुदयऋद्धिराट्। सर्वस्वदक्षिणो दीक्षा सोमाख्या: समिदाह्वयः।।६६।।
कठायनश्च गोदोहः स्वाहाकारस्तनूनपात्। दण्डापुरुषमेधश्च श्येनो वज्रइषुर्यमः।।६७।।
अङ्गिराः कङ्कभेरुण्डा चन्द्रायणपरायणः। ज्योतिष्टोमः कुतो दर्शो नन्द्याख्यः पौर्णमासिकः।।६८।।
गजप्रतिग्रहो रात्रिः सौरभः शाङ्कलायनः। सौभाग्यकृच्चकारीषो बैदलायनरामठा।।६९।।
शोचिष्कारी नाचिकेतः सान्तिकृत्पुष्टिकृत्तथा। वैनतेयोच्चाटनौ च वशीकरणमारणे।।७०।।
त्रैलोक्यमोहनी वीरः कन्दर्पबलशातनः। शङ्खचूडो गजच्छायो रौद्राख्यो विष्णुविक्रमः।।७१।।
भैरवः कवहाख्यश्चावभृथोऽष्टाकपालकः। श्रौषट् वौषट् वषट् कारः पाकसंस्था परिश्रुती।।७२।।
चमनो नरमेधश्च कारीरी रत्नदानिका। सौत्रामणी च भारुन्दा बार्हस्पत्यो बलङ्गमः।।७३।।
प्रचेताः सर्वसत्रश्च गजमेधः करम्भकः। हविसंस्था सोमसंस्था पाकसंस्था गरुत्मती।।७४।।
सत्यसूर्यश्चमसस्त्रक् स्रुवोलूखलमेक्षणी। चफलो मन्थनी मेढी यूपः प्राग्वंशकुंचिका।।७५।।
रश्मिरंशुश्च दोभ्यश्च वारुणोदधि पविः कुथा। आप्तोर्यामो द्रोणकलशो मैत्रावरुण आश्विनः।।७६।।
पात्नीवतश्च मन्थी च हारियोजन एव च। प्रतिप्रस्तानशुक्रौ च सामिधेनी समित्समा।।७७।।
होताऽध्वर्य्युस्तथोद्गाता नेता त्वष्टा च योत्रिका। आग्नीध्रो छवागष्टावग्नावस्तुत्प्रतर्दकः।।७८।।
सुब्रह्मण्यो ब्राह्मणश्च मैत्रावरुणवारुणः। प्रस्तोता प्रतिप्रस्थासा यजमानो ध्रुवंत्रिका।।७९।।
आमिक्षामीषदाज्यं च हव्यं कव्यं चरुः पयः। जुहूदध्रुणोभृत् ब्रह्मा च त्रयी त्रेता तरश्विनी।।८०।।
पुरोडाशः पशूकर्षः प्रोक्षणी ब्रह्मयज्ञिनी। अग्निजिह्वा दर्भरोमा ब्रह्मशीर्षा महोदरी।।८१।।
अमृतप्राशिका नारायणी नग्ना दिगम्बरा। ॐ कारिणी चतुर्वेदरूपा श्रुतिरनुल्वणा।।८२।।
अष्टादशभुजा रम्भा सत्या गगनचारिणी। भीमवक्त्रा महावक्त्रा कीर्तिराकृष्णपिङ्गला।।८३।।
कृष्णमूर्द्धा महामूर्द्धा घोरमूर्द्धा भयानना। घोरानना घोरजिह्वा घोररावा महाव्रता।।८४।।
दीप्तास्या दीप्तनेत्रा च चण्डप्रहरणा जटी। सुरभी सौनभी वीची छाया सन्ध्या च मांसला।।८५।।
कृष्णा कृष्णाम्बरा कृष्णशाङ्गिणी कृष्णवल्लभा। त्रासिनी मोहिनी द्वेष्या भृत्युरूपा भयावहा।।८६।।
भीषणा दानवेन्द्रघ्नी कल्पकर्त्री क्षयंकरी। अभया पृथिवी साध्वी केशिनी व्याधिजन्महा।।८७।।
अक्षोभ्याह्लादिनी कन्या पवित्रा रोपिणी शुभा। कन्यादेवी सुरादेवी भीमादेवी मदन्तिका।।८८।।
शाकम्भरी महाश्वेता धूम्रा धूम्रेश्वरीश्वरी। वीरभद्रा महाभद्रा महादेवी महासुरी।।८९।।
श्मशानवासिनी दीप्ता चितिसंस्था चितिप्रिया। कपालहस्ता खट्वाङ्गी खड्गिनी
शूलिनी हलो।।९०।।
कान्तारिणी महायोगी योगमार्गा युगग्रहा। धूम्रकेतुर्महास्यायुर्युगानां परिवर्तिनी।।९१।।

अंगारिण्यंकुशकरा घण्टावर्णा च चक्रिणी। वेताली ब्रह्मवेताली महावेतालिका तथा।।९२।।
विद्याराज्ञी मोहराज्ञी महाराज्ञी महोदरी। भूतं भव्यं भविष्यं च सांख्यं योगस्तपो दमः।।९३।।
अध्यात्मं चाधिदैवं चाधिभूतांश एव च। घण्टारवविरूपाक्षी शिखिचिच्छ्रीचयप्रिया।।९४।।
खड्गशूलगदाहस्ता महिषासुरमर्द्दिनी। मातंगी मत्तमातंगी कौशिकी ब्रह्मवादिनी।।९५।।
उग्रतेजा सिद्धसेना जृम्भिणी मोहिनी तथा। जया च विजया चैव विनता कद्रुरेव च।।९६।।
धात्री विधात्री विक्रांता ध्वस्ता मूर्च्छा च मूर्च्छनी। दमनी दामिनी दम्या छेदिनी तापिनी तपी।।९७।।
बन्धिनी बाधिनी बन्ध्या बोदातीता बुधप्रिया। हरिणी हारिणी हन्त्री धरिणी धारिणी धरा।।९८।।
विसाधिनी सःधिनी च सन्ध्या संधोपनी प्रिया। रेवती कालकर्णी च सिद्धिर्लक्ष्मीररुन्धती।।९९।।
धर्मप्रिया धर्मरती धर्मिष्ठा धर्मचारिणी। व्युष्टिः ख्यातिः सिनीवाली कुहूः ऋतुमती मृतिः।।१००।।
त्वाष्ट्री वैरोचनी मैत्री नीरजा कैदभेश्वरी। भ्रमणी भ्रामिणी भ्रामा भ्रमरी भ्रामरी भ्रमा।।१०१।।
निष्कला कलहा नीता कौलाकारा कलेवरा। विद्युज्जिह्वा वर्षिणी च हिरण्याक्षनिपातिनी।।१०२।।
जितकामा कामृगया कोला कल्यांगिनी कला। प्रधाना तारका तारा हितात्मा हितभेदिनी।।१०३।।
दुरक्षरा परंब्रह्म महाताना महाहवा। वारुणी व्यरुणी वाणी वीणा वेणी विहंगमा।।१०४।।
मोदप्रिया मोदकिनी प्लवनप्लाविनी प्लुतिः। अजरा लोहिता लाक्षा प्रतप्ता विश्वभोजिनी।।१०५।।
मनो बुद्धिरहङ्कारः क्षेत्रज्ञा क्षेत्रपालिका। चतुर्व्वेदा चतुर्भारा चतुरन्ता चरुप्रिया।।१०६।।
चर्विणी चोरिणी चारी चांगरी चर्मबेरवी। निर्लेपा निष्पङ्का च प्रशान्ता नित्यविग्रहा।।१०७।।
स्तव्या स्तवप्रिया व्याला गुरुराश्रितवत्सला। निष्कलंका निरालम्बा निर्द्वन्द्वा निष्परिग्रहा।।१०८।।
निर्गुणा निर्भला नित्या निरीहा निरघा नवा। निरिन्द्रिया निराभासा निर्मोहा नीतिनायिका।।१०९।।
निरिन्धना निष्कला च लीलाकारा निरामया। मुण्डा विरूपा विकृता पिङ्गलाक्षी गुणोत्तरा।।११०।।
पद्मगर्भा महागर्भा विश्वगर्मा विलक्षणा। परमात्मा परेशानी परा पारा परन्तपा।।१११।।
संसारसेतुः क्रूराक्षी मूर्च्छा मग्न मनुप्रिया। विस्मया दुर्जया दक्षा दनुहन्त्री दयालया।।११२।।
परब्रह्माऽऽनन्दरूपा सर्वसिद्धिविधायिनी। ॐ एवमुड्डामरतन्त्रान्मयोद्धृत्य परकाशितम्।।११३।।
गोपनीयं प्रयत्नेने नाख्येयं यस्य कस्यापात्। यदीच्छसि द्रुतं सिद्धिमैश्वर्यं चिरजीविताम्।।११४।।
आरोग्यं नृपसम्मानं तदा नामानि कीर्तयेत्। नाम्नां सहस्रं वाराह्याः मया ते समुदीरितम्।।११५।।
यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते। अश्वमेधसहस्रस्य वाजपेयशतस्य च।।११६।।
पुण्डरीकायुतस्यापि फलं पाठात् प्रजायते। पठतः सर्वभावेन सर्वाः स्युः सिद्धयः करे।।११७।।
जायते महदैश्वर्य्यं सर्वेषां दयितो भवेत्। घनसारायते वह्निरगाधोऽब्धिः कणायते।।११८।।
सिद्धयश्च तृणायन्ते विषमप्यमृतायते। हारायन्ते महासर्पाः सिंहः क्रीडामृगायते।।११९।।

दासायन्ते महीपाला जगन्मित्रायतेऽखिलम्। तस्मान्नाम्नां सहस्त्रेण स्तुता सा जगदम्बिका।।१२०।।
प्रयच्छत्यखिलान् कामान् देहान्ते परमां गतिम्। इदं पूर्वमधीयानो दौष्यन्तिर्भरतः प्रिये।।१२१।।
जिगाया पृथिवीं सर्वां रथेनैकेन षट्दिनात्। आजहाराश्वमेधानां सहस्त्रद्वितयं नृपः।।१२२।।
एकैकस्मिन् स्थिते यागे गुनरे दक्षिणआकृते। सहस्त्रं यत्र यज्ञानां कण्वाय मरतो ददौ।।१२३।।
पञ्चलक्षाणि वर्षाणां बुभुजे मेदिनीं पुरा। पञ्चाशीतिसहस्त्राणि मार्याणां तस्य चाभवन्।।१२४।।
मान्धातृप्रमुखाश्चान्ये नृपाः सिद्धिं प्रपेदिरे। उद्दालकप्रभृतयो मुनयश्च वरानने।।१२५।।
गुरौ किन्तु प्रकर्तव्या भक्तिरव्यभिचारिणी। गुरुभक्तिमृते नैव सिध्यतीति तरोदितम्।।१२६।।
यथा देवे तथा मन्त्रे यथा मन्त्रे तथा गुरौ। भक्तिः कार्या निष्कपटा सद्यः सिद्धिमभीप्सता।।१२७।।
एतत्समशेषेण समासात्कथितं तव। गोप्य प्रयत्नतस्तत्र प्रमाणं वचनं मम।।१२८।।
ध्येया पूज्या च वाराही पाठ्यं नाम सहस्त्रकम्। सर्पसिद्धिः करे कार्या सत्यं सत्यं तरोदितम्।।१२९।।

इति श्रीउड्डामरतन्त्रे देवदेवीसंवादे
आदिवाराहीसहस्त्रनामस्तोत्रं परिपूर्णम्

## ५. बलिदान खण्डः

### *देवीपुनः पूजाऽऽदि बलिदानान्तम्*

इत्यं षडावरणीमभ्यर्च्य पुनर्देवीं त्रिवारं सन्र्तत्य पुनः षोऽशभिउपचौर उपचार्यः होमं तदन्ते बलिदानं च कुर्यात।

होमाकरण पक्षे— देव्याः पुरतो वामभागे हस्तमात्रं सामान्योदलेनोपलिप्य, त्रिकोण वृत्तचतुरश्रात्मकं मण्डलं परिकल्पय, रूधिरात्रहरिद्रान्नमाहिषद्वितयसक्तुशर्वराहेतुफलत्रय माक्षिकमुद्गत्रयमाषचूर्णदधिक्षीरधृतैः शुद्धोदन संमर्द्य, कुक्कुटाण्ड प्रमाणान् दशं पिण्डान् कपित्फलमान च एकं पिण्डम् विधाय तत्र निधाय तत्समीपे सादिम सद्वितीय तृतीयं चषकं च निक्षिप्य।

### *श्री क्षेत्रपाल भैरवबलिदानम्*

१. ॐ ऐं ग्लौं ऐं क्षौं हेतुकभैरवक्षेत्रपालाय नमः हेतुकभैरवश्रीपादुकां पूजयामि तर्पयामि नमः।।
ॐ ऐं ग्लौं ऐं क्षौं सर्वविघ्नकृद्भ्ये हेतुकादिभ्ये सर्व भूतेभ्ये हुं फट् स्वाहा। (पूर्व दिशा) इति मन्त्रं त्रिःपठित्वा दक्षकरार्पितं वामकरतत्त्वमुद्रस्पृष्टं सलिलं बल्युपरि दत्वा वामपार्ष्णिघातकरास्फोटौ कुर्वाणः समुदञ्चितवक्त्रो वाणमुद्रया बलिं भूतैर्ग्रासितं विभाव्य योनिमुद्रया प्रणमेत्।

**ॐ नमो भगवते हेतुक क्षेत्रपालभैखाय सांगाय सपरिवाराय सायुधाय सशत्त्किकाय सवाहनाय नमः। भो भो हेतुकक्षेत्रपालभैरव इमं पायसादि बलि भुंक्ष्व** (अस्ययजमानस्य) **मम सपत्नी पुत्रपरिवारस्य गृहे रक्ष रक्ष स्वकुटुंव रक्ष-रक्ष मम बन्धून् रक्ष-रक्ष, मम कार्यालयं रक्ष-रक्ष, मम गोशालां रक्ष-रक्ष, मम धनकोषं रक्ष-रक्ष, मम व्यापारं रक्ष-रक्ष। भो! क्षेत्रपालक त्वं सर्वभूतवंशकर्त्ता, शान्तिकर्त्ता, पुष्टिकर्त्ता, तुष्टिकर्त्ता, सर्वराजवंशकर्त्ता, सर्वग्रहमैत्रीकर्त्ता, मम शीतोष्णमुदकं वायुकं कष्टकं कुष्ठरोगं उदररोगं जठररोगं मुखरोगं प्रमेहमुक्ता विक्षिप्तकरिस्पोटकादि विनाशय स्वाहा। अनेन बलिदानेन पूर्वदिकयति हेतुकक्षेत्रपाल भैरवः प्रीयताम् न मम।** ततः पादौ प्रक्षाल्य। आचम्य। प्रदक्षिणा न मस्कारं कृत्वा। इति प्रत्येकं बलिं कुर्यात्।

२. **ॐ ऐं ग्लौं ऐं क्षौं त्रिपुरान्तक भैरवक्षेत्रयालाय नमः त्रिपुरान्तक भैरव श्रीपादुकां पूजयामि तर्पयामि नमः। ॐ ऐं ग्लौं ऐं क्षौं सर्वविघ्नकृद्भ्यो त्रिपुरान्तकेभ्यः सर्वभूतेभ्यः हु फट् स्वाहा। त्रिः** (अग्निकोण)

३. **ॐ ऐं ग्लौं ऐं क्षौं अग्निभैरव क्षेत्रपालाय नमः अग्नि भैरव श्रीपादुकां पूजयामि तर्पयामि नमः। ॐ ऐं ग्लौं ऐं क्षौं सर्वविघ्नकृद्भ्यो अग्निभ्यः सर्व भूतेभ्यो हुं फट् स्वाहा। त्रिः** (दक्षिणदिशा)।।

४. **ॐ ऐं ग्लौं ऐं क्षौं यमजिह्वाभैरव क्षेत्रपालाय नमः यमजिह्वाभैरव श्रीपादुकां पूजयामि तर्पयामि नमः। ॐ ऐं ग्लौं ऐं क्षौं सर्वविघ्नकृद्भ्यौ यमजिह्वाभ्यः सर्वभूतेभ्यो हुं फट् स्वाहा। त्रिः** (नैर्ऋत्यकोण)

५. **ॐ ऐं ग्लौं ऐं क्षौं एकपादभैरव क्षेत्रपालाय नमः एकपाद भैरव श्रीपादुकां पूजयामि तर्पयामि नमः। ॐ ऐं ग्लौं ऐं क्षौं सर्वविघ्नकृद्भ्यो एकपादेभ्यः सर्वभूतेभ्यो हुं फट् स्वाहा। त्रिः** (पश्चिम दिशा)

६. **ॐ ऐं ग्लौं ऐं क्षौं कालभैरवक्षेत्रयालाय नमः कालभैरव श्रीपादुकां पूजयामि तर्पयामि नमः। ॐ ऐं ग्लौं क्षौं सर्वविघ्नकृद्भ्यो कालेभ्यः सर्वभूतेभ्यो हुँ फट् स्वाहा। त्रिः** (वायुकोण)

७. **ॐ ऐं ग्लौं ऐं क्षौं करालभैरव क्षेत्रपालाय नमः करालभैरव श्रीपादुकां पूजयामि तर्पयामि नमः। ॐ ऐं ग्लौं क्षौं सर्वविघ्नकृद्भ्यो करालेभ्यः सर्वभूतेभ्यो हुं फट् स्वाहा। त्रिः** (उत्तरदिशा)

८. **ॐ ऐं ग्लौं ऐं क्षौं भीमभैरव क्षेत्रपालाय नमः भीमभैरव श्रीपादुकां पूजयामि तर्पयामि नमः। ॐ ऐं ग्लौं क्षौं सर्वविघ्नकृद्भ्यो भीमेभ्यः सर्वभूतेभ्यो हुं फट् स्वाहा। त्रिः** (ईशानकोण)

९. **ॐ ऐं ग्लौं ऐं क्षौं हाटकेशभैरवक्षेत्रपालाय नमः हाटकेश भैरव श्रीपादुकां पूजयामि तर्पयामि नमः। ॐ ऐं ग्लौं क्षौं सर्वविघ्नकृद्भ्यो हाटकेशेभ्यः सर्वभूतेभ्यो हुं फट् स्वाहा। त्रिः** (अधरा)

१०. **ॐ ऐं ग्लौं ऐं क्षौं अचलभैरवक्षेत्रपालाय नमः अचलभैरव श्रीपादुकां पूजयामि तर्पयामि नमः। ॐ ऐं ग्लौं क्षौं सर्वविघ्नकृद्भ्यो अचलेभ्यः सर्वभूतेभ्यो हुं फट् स्वाहा। त्रिः** (उर्ध्व) पूर्वोक्तैः

दशभिः मन्त्रैः हेतुकादिभ्योऽचलान्तेभ्यो दशभ्यः क्रमेण दश पिण्डान् दशदिक्षु दत्त्वा, मध्ये स्थूलमेकं पिण्डं चषकं च दद्यात्

**११. ॐ ऐं ग्लौं ऐं क्षौं चण्डोच्चण्डाय नमः चण्डोच्चण्ड श्रीपादुकां पूजयामि तर्पयामि नमः। ॐ ऐं ग्लौं क्षौं सर्वविघ्नकृद्भ्यो चण्डोच्चण्डेभ्यः सर्वभूतेभ्यो हुं फट् स्वाहा।** त्रिः ततः पादौ प्रक्षाल्य देव्यै पुष्पाञ्जलित्रयं दत्त्वा प्दक्षिणानमस्कारोत्तरं जयेत्।।

## वाराही मन्त्र जपः

यथा—

**अस्यश्री वाराहीमहामन्त्रस्य ब्रह्मणे ऋषये नमः** इति शिरसी)
**गायत्री छन्दसे नमः** (मुखे) **वाराही देवतायै नमः** (हृदये)
**ॐ ऐं ग्लौं बीजाय नमः** (गुह्ये) **फट् शाक्तये नमः** (पादयोः)
**ठः ठः ठः ठः कीलकाय नमः** (नाभौ) **मम सवाभीष्टसिद्धरर्थे विनियोगः** (करसभ्पुटे न्यासः)
मूलेन त्रिण्याक कृत्वा।

**करन्यासः–ॐ ऐं ग्लौं अन्धे अन्धिनि नमः** अंगुष्ठाभ्यामनयः
**ॐ ऐं ग्लौं ऐं रून्धे रून्धिन्यै नमः** (तीर्जनीभ्याम नमः)।
**ॐ ऐं ग्लौं ऐं जम्भे जम्भिनि नमः** (मध्यमाभ्याम् नमः)।
**ॐ ऐं ग्लौं ऐं मोहे मोहिनीभ्याम् नमः** (अनामिकाभ्याम् नमः)।
**ॐ ऐं ग्लौं ऐं स्तम्भे स्तम्भिनाभ्याम् नमः** (कष्ठिकाभ्यम नमः)

षङ्गन्यासः

**ॐ ऐं ग्लौं ऐं नमो भगवति वार्ताळी वार्ताळी** (दवयाय नमः)
**ॐ ऐं ग्लौं ऐं वाराहि वाराहि–** (शिरसे स्वाहा)
**ॐ ऐं ग्लौं ऐं वराहमुखी वराहमुखी–** (शिखायै वषट् हृदयाय नमः)
**ॐ ऐं ग्लौं ऐं अन्धे अन्धिनी नमः** (कवचाय हुँ)
**ॐ ऐं ग्लौं ऐं रून्धे रून्धिनि नमः** (नेत्रत्रयाय वौषट्)
**ॐ ऐं ग्लौं ऐं जम्भे जम्भिनि नमः** (अस्त्राय फट्)
**( नेह करन्यासे अस्त्र मन्त्रः तेन करतलन्यासो इति भूर्भुर्वस्त्रोमिति दिग्बन्धः** न भवति।)

ध्यानम्

**पाथोरूह पीठगताम् पाथोधर मेचकाम् कुटिलदंष्ट्राम् कपिला त्रियतायां।**
**धनकुचकुम्भाम् प्रणतवाञ्छितवदान्याम्।**

**दक्षोर्ध्वेतोरिखड्गौ मुसलम भीतम् तदन्यस्तद्वात्।**

**शङ्ख केटहलवरान करैर्वधानाम् स्मरामि वार्ताळीम्** (पञ्चपुजा)

उक्त प्राकारेण ध्यात्वा मनसा

**ॐ ऐं ग्लौं ऐं श्री वाराह्यै लं पृथिव्यात्मकम् गन्धम्। कल्पयामि नमः**

**ॐ ऐं ग्लौं ऐं श्री वाराह्यै हं आकाशात्मकं पुष्पं कलपयामि नमः**

**ॐ ऐं ग्लौं ऐं श्रीं वाराह्यै यं वायुवात्मकं धूपं कलपयामि नमः।**

**ॐ ऐं ग्लौं ऐं श्रीं वाराह्यै रं अग्नयात्मकं दीपं कलपयामि नमः।**

**ॐ ऐं ग्लौं ऐं श्री वाराह्यै वं अमृतात्मकं नैवेधं कलपयामि नमः।**

नैवेद्याङ्गत्वेने च

**ॐ ऐं ग्लौं ऐं वाराह्यै सं सर्वात्मकं ताम्बूलं कलपयामि नमः।**

इति पंञ्चोपचारनार्य विध्नदेव्योङ्गपाङ्गसहितं मूलमन्त्रभष्टोत्तर शतवारान् यता शक्ति वा श्री क्रमोक्तेन विधिना जपेत्।

**स्तं स्तम्भिन्यै नमः** इति वाराह्या विध्नदेवीमन्त्रः। एतं जपारम्भे त्रिवारं जपेत्। मूलमन्त्रस्य न्यासोक्ताष्टखण्डसमष्टि रूपः।

**लृं वाराही कृं उन्मतभैरवी पादुकांभ्याम् नमः** इति वाराह्यंगम् लघुवाराही।

**ॐ ह्लीं नमो वाराहि घोर स्वप्नं ठः ठः स्वाहा।** (तदुपाङ्ग स्वप्नवाराहि)

**ॐ ऐं नमो भगवति महामाये पशुजनमनश्चक्षुस्तिस्करणं कुरू कुरू हुँ फट स्वाहा** (इति तत्प्रत्यङ्गं तिरस्करिणी। एतान तीन मन्त्रान् मूलजपान्ते द्दशासँ जपेत्। पुनः न्या सध्यानादि कृत्वा जपं निवेध स्तुवीत्

## *वृन्दाराधनं, गुरुसंतोषणं, शक्तिवटुकपूजा च*

अथ योगिनीवीरयुग्मसमुदायात्मकं वृन्दं गन्धादिभिः आराध्य, यथाविभवं श्रीगुरुं सन्तोष्य, समग्रयौवना लक्षणवतीः मदनविवशाः तिस्त्रः शक्तीर्वटुकं चाहूयाभ्यज्य स्नपयित्वा, मध्ये वार्ताळीबुद्ध्यैकां क्रोधिनीस्तम्भिनीबुद्ध्या च द्वे पार्श्वयोरुपवेश्य, चण्डोच्चण्डधिया वटुकं चाग्रे समुपवेश्य द्वितारीनमः सम्पुटितैः तत्तन्नाममन्त्रैः गन्धादिभिः क्षीरादिभिश्च सर्वैः द्रव्यैः सन्तोष्य, मम श्रीवार्ताळीमन्त्रसिद्धिः भूयादिति शक्तीः प्रार्थयेत्। ताश्च प्रसीदन्त्वधिदेवता इति प्रतिब्रूयुः।

## *हविः प्रतिपत्तिः*

अथ श्रीक्रमोक्तक्रमेण हविः प्रतिपत्तिकर्मादिविशेषार्घ्यविसर्जनान्तं शेषं निर्वर्तयत्। हविःप्रतिपत्तौ मूलेन तत्त्वत्रयशोधनमेवेति विशेषः।

**उत्तमे शिगरै देवी भूम्याम् पर्वतवर्दिनी विष्णु पत्नी नमस्तुभ्यँ पादचारमशमस्वमें।।**

## मन्त्रसाधनम्

एवं नित्यक्रममाचरन् श्यामाक्रमोक्तेन पुरश्चरणप्रकारेण प्रत्यहं सहस्रसङ्ख्यया लक्षसङ्ख्याकं प्रकृते कलियुगत्वाच्चतुर्गुणितं जपं पुरश्चरणं कृत्वा तद्दशांशं नारिकेळोदकैः सन्तर्प्य, तद्दशांशं तापिञ्छकुसुमैः तिलैः चुळुकमितैः शतसङ्ख्याकैर्वा हरिद्राखण्डैर्वा तन्त्रान्तरोक्तैः त्रिमध्वक्तैः हेतुमिश्रैश्च जुहुयात्। इह पञ्चधोपचारात् प्राक् महाव्याहृत्यादिषु च आज्येनैव होमः। इतरेषु तापिञ्छादिना। एवं सिद्धमन्त्रः स्वतन्त्रोपास्तौ श्रीक्रमोक्तेन क्रमेण [1]नैमित्तिकार्चनरतः सत्यां कामनायां पूर्वोक्तेनैव क्रमेण तत्तत्काम्यानुगुणं होमं कृत्वा सफलमनोरथ आज्ञासिद्धिः सुखी विहरेत्। इति शिवम्।।

## ६. कतिपय अन्य वाराही सम्बन्धी जानकारियाँ

**वाराहीध्यान भेदाः –**

### १. वाराही

१. प्रत्यग्रारूण संकाश पद्मांतर्गतवासिनीम।
इन्द्रनील महातेजः प्रकाशं विश्वमातरम्।।
रूण्डं च मुण्डमालाढय नवरत्न विभूषिताम्।
अनर्धय रत्नधरित मकुटश्री विराजिताम्।
कौशेयार्धोरूकां चारू प्रवालमणि भूषणाम्।।
हलेन मुसलानापि वरदेवनामपेन (त) च।
विराजित चतुर्बाहुं कपिलाक्षी सुमत्यमाम्।
नितंबिनी मुत्पलामां कठोर धन सत्कुचाम्।।

### २. बृहद्वाराही ध्यानम्

२. रक्तांबुजे प्रेतवरासनस्थानमर्धोरूकामामृंटिकानस्थाम्।
दन्ष्ट्रोल्लसत्पोत्रिमुखारविन्दां कोटीर संच्छिन्न हिमांसुेखाम्।।
हलं कपालं दधतीं कराभ्यां वामेतराभ्यां मुसलेष्टदौ च।
रक्तांबरां रक्तपटत्तरीयां प्रवालकर्णाभरणां त्रिनेत्राम्।।
श्यामाम् समस्ताभरणस्त्रगाढयां वाराहिसंज्ञां प्रणतोस्मि नित्यम्।।

## ३. धूम्रवाराही

मन्त्रोद्धारम—

**चन्द्रवाहलीकमोहार्ण चन्द्रा मध्येऽमिधं न्ससेत् चन्द्रौ मठं पद्मयुग्मं हरं नीरमयं मनुः।**

**वाराभा मोहबीजन पूजयत् परिवारगान्**

**ऐं ग्लौं लं ऐं नमो भगवति वार्तालि** (वातार्लि) **वारही देवते वरहामुकी ऐं ग्लौं ठः ठः फट स्वाहा।।**

उत्कीलनमः—

**मठमादौ जपेद्देवि ण्द्वयांते हरं तथा।**

**वाराही मन्त्रराजस्य मन्त्रोऽस्यत्कीलना मिधः।।**

**संजीवनमः–**

**मन्त्रोऽयं धूम्रवाराह्या मनोः संजीवनामिधः।**

**हरितं मूलमन्त्रांते जपेदादो च मनमथम्।।**

शापमोचनम्ः—

**तारा रमां च वायहि मारदाङ्क विमोचय।**

**मंठ नीरं महादेवी विधेयं शापहारिणी।।**

**यन्त्रं त्रिकोणं सबिदुं स्यार्त्तिकाणम्।**

**ततः सप्तवारं त्रिकोणं प्रकुर्यात्।**

**गजाश्रं कंलारं हि वृत्तत्रयांकम धरासद्मयन्त्रं वाहेश्वरीम्।।**

ध्यानम—

**चन्द्रार्थ चूडां द्विभुजां भुजाभ्यां शूलां कुशीश्यामगुखीं वहंतीम्।।**

**सूर्याग्नि चन्द्रीकृत नेत्रपद्मां ध्यायेदू हृदब्जे विमलाम् वाराहीम्।।**

संपुट मन्त्रः—

**मठ बीजं जपेदादौ मन्त्रान्ते पंकजं जपेत्।**

**मन्त्रोयं धूम्रवाराह्याः सम्पुटाल्यो मयोरितः।**

।।श्रीकाञ्चीनगरी उपनिषद्ब्रम्हेन्द्रमठः पीठादीशः इष्टसिद्धेन्द्र सरस्वतीयतिशिष्य कृष्णानेन्द्र सरस्वती सति शिष्य श्रीपुर्णानेन्द्रसरस्वतीयति शिष्य श्री ज्ञानानन्देन्द्रसरस्वतीयति विराचित श्री विद्यामहार्णवे श्री वाराही-प्रकरणम् समाप्तः।।

।।श्रीगुरुभ्यो नमः।।

''परिरक्षणीय परिवेदक परमार्थरत्न''

# श्रीविद्यामहार्णवः

(सचित्र-सम्पूर्ण-सपर्यापद्धति ग्रन्थः)

श्रीप्रकाशानन्दनाथ
श्री प्रकाशाम्बा लहरी
चिन्तामणिः

क्रियाशक्तिः

## तृतीयो भागः

## १०. अङ्ग उपाङ्ग प्रत्यङ्ग भूता-प्रकरणम्

दाक्षिणात्य
परमहंस-परिव्राजक
श्री श्री श्री ज्ञानानन्देन्द्रसरस्वतीयति-विरचितः

वाराणसी, चेन्नै, हैदराबाद एवं बेंगलूर

# १०. दशम-मुद्राकल्पतरङ्गः



**१०९ सौभाग्यदण्डिनी** –वाम-हस्तमुष्टिं बध्वा सरलया तर्जन्या अंसकर्णमभिते भ्रामणे सौभाग्यदण्डिनी।



**११० रिपुजिह्वाग्रहा** – सैव गर्भितांगुष्ठ-वाम पादतलं न्यस्ता रिपुजिह्वाग्रहा।



**१११ खड्गः** – कनिष्ठानामिके-बध्वा स्वांगुष्ठे नैव दक्षतः। श्लिष्टांगुली तु प्रसृते सेश्लिष्टे खड्गमुद्रिका।



**११२ चर्म (खेडयम्)** – वामहस्तं तथा तिर्यक् कृत्वा चैव प्रसार्य च। आकुंचितांगुलीः कुर्यात् चर्ममुद्रेयमीरिता।



**११३ मुसलः**–मुष्टिं कृत्वाकराभ्यां च वामस्योपरि दक्षिणाम्। कुर्यान् मुसल मुद्रेयं सर्वविघ्नविनाशिनी।।



**११४ दुर्गाः**–मुष्टिं कृत्वा कराभ्यां च वामस्योपरि दक्षिणाम्। कृत्वा शिरसि संयोज्य दुर्गा मुद्रेय मीरिता।।



**११५ लक्ष्मीः**– चक्रमुद्रा तथा बध्वा मध्यमे द्वे प्रसार्य च। कनिष्ठिके तथानीय तदग्रेअंगुष्ठकौ क्षिपेत्। लक्ष्मी मुद्रा पराह्येषा सर्घसंपत् प्रदायिनी।।



**११६ बीणाः** – वीणावादनवद् हस्ती कृत्वा संचालयेच्छिरः। वीणामुद्रेयमाख्याता सरस्वत्याः प्रियंकरी।।



**११७ पुस्तकम्**– मुष्टिं स्वाभिमुखीं कृत्वा पुस्तक मुद्रिका।।



**११८ प्रार्थना मुद्राः**– प्रसृताह्यं गुलिकाह्यस्तौ मिथः श्लिष्टौ च संमुखौ। कुर्यात् स्वे हृदये सेयं मुद्रा प्रार्थन संज्ञिका।।



**११९ सप्तजिह्वाः**– मणिबन्ध स्थिता कृत्रा प्रसृतांगुलिकौ करौ। कनिष्ठांगुष्ठयुगले मिलित्वा अन्तः प्रसारयेत्।। सप्तजिह्वाख्य मुद्रेयं वैश्वानर प्रियंकरी।



**१२० कुम्भमुद्राः**– दक्षांगुष्ठ परांगुष्ठे क्षिप्त्वा हस्तद्वयेन तु। सावकाशमेकमुष्टिं कुर्यात् सा कुम्भ मुद्रिका।।

श्रीगणेशाय नमः    श्रीसरस्वत्यै नमः    श्रीगुरुभ्यो नमः

# श्रीविद्यामहार्णवः

## श्रीप्रकाशानन्दनाथ श्रीप्रकाशाम्बा लहरी चिन्तामणिः

## क्रियाशक्तिः

## तृतीयो भागः

## श्री अङ्ग उपाङ्ग प्रत्यङ्ग भूता-प्रकरणम्

**श्रीललितापरमेश्वरी परिवार वृक्षः**

श्रीललितापरमेश्वरी परा भट्टारिका

(मन्त्रिणी) श्रीश्यामला    (अंग भूता)    श्रीवाराही (दण्डिनी)

श्री बाल परमेश्ववी (बालावस्था)

(अंग भूता) श्रीलघुश्यामा    श्रीयोगबाला परमेश्वरी (किशोरावस्था)

(अङ्गभूता) लघुवार्तालियम्बा

(उपाङ्गभूता) वाग्वादिनी    (उपाङ्ग भूता)    (उपाङ्ग भूता) स्वप्नवाराही

(प्रत्यङ्ग भूता) नकुली वागीश्वरी    श्री अन्नपूर्णा    (प्रत्यङ्ग भूता)

(प्रत्यङ्ग भूता)    तिरस्करणयम्बा

अश्वारूढा

पुरूष देवता

श्री दक्षिणामूर्त्ति    श्री गणेश    श्रीकीर्तिकेय

(उक्तग्रन्थ में उपर्युक्त सर्व-देवता की आवरण सपर्या उपलब्ध है)

देवी सर्वविचित्ररत्नरचिता दाक्षायणी सुन्दरी
वामस्वादुपयोधरप्रियकरी सौभाग्यमाहेश्वरी।
भक्ताभीष्टकरी सदाशुभकरी कासीपुराधीश्वरी
भिक्षां देहिकृपावलम्बनकरी मातान्नपूर्णेश्वरी।।८।।

चन्द्रार्कानलकोटिकोटिसदृशा चन्द्रांशुबिम्बाधरी
चन्द्रार्काग्निसमानकुन्तलधरी चन्द्रार्कवर्णेश्वरी
मालापुस्तकपाशसांकुशधरी काशीपुराधीश्वरी
भिक्षां देहिकृपावलम्बनकरी मातान्नपूर्णेश्वरी।।९।।

क्षत्रत्राणकरी महाभयकरी माता कृपासागरी
साक्षान्मोक्षकरी सदाशिवकरी विश्वेश्वरश्रीधरी
दक्षाक्रन्दकरी निरामयकरी काशीपुराधीश्वरी
भिक्षां देहिकृपावलम्बनकरी मातान्नपूर्णेश्वरी।।१०।।

## *अन्नपूर्णाष्टोत्तरशतनामस्तोत्रम्*

अस्य श्री अन्नपूर्णाष्टोत्तरशतनामस्तोत्रमहामन्त्रस्य, ब्रह्मा ऋषिः, अनुष्टुप्छन्दः, श्रीअन्नपूर्णेश्वरी देवता, स्वधाबीजं, स्वाहाशक्तिः, ओं कीलकं, मम सर्वाभीष्टप्रसादसिद्ध्यर्थे जपे विनियोगः।।

ओं अन्नपूर्णाशिवादेवीभीमापुष्टिस्सरस्वती। सर्वज्ञा पार्वती दुर्गा शर्वाणि शिववल्लभा।।१।।
वेदवेद्या महाविद्याविद्यादात्रीविशारदा। कुमारीत्रिपुरा बालालक्ष्मीश्श्रीर्भयहारिणी।।२।।
भवानीविष्णुजननी ब्रह्मादिजननीतथा। गणेशजननी शक्तिः कुमारजननीशुभा।।३।।
भोगप्रदाभगवती भक्ताभीष्टप्रदायिनी। भवरोगहरा भव्या शुभ्रा परममङ्गळा।।४।।
भवानी चञ्चला गौरी चारुचन्द्रकळाधरा। विशामलाक्षी विश्वमाता विश्ववन्द्या विलासिनी।।५।।
आर्याकल्याणनिलयारुद्राणीकमलासना। शुभप्रदाशुभावर्तावृत्तपीनपयोधरा।।६।।
अम्बा संहारमथनी मृडानी सर्वमङ्गला। विष्णुसंसेवितासिद्धा ब्रह्माणीसुरसेविता।।७।।
परमानन्ददा शान्तिः परमानन्दरूपिणी। परमानन्दजननी परानन्दप्रदायिनी।।८।।
परोपकारनिरता परमाभक्तवत्सला। पूर्णचन्द्राभवदना पूर्णचन्द्रनिभांशुका।।९।।
शुभलक्षणसम्पन्ना शुभानन्दगुणार्णवा। शुभसौभाग्यानिलया शुभदाच रतिप्रिया।।१०।।
चण्डिकाचण्डमथनी चण्डदर्पनिवारिणी। मार्ताण्डनयना साध्वी चन्द्राग्निनयनासती।।११।।
पुण्डरीकहरापूर्णा पुण्यदापुण्यरूपिणी। मायातीताश्रेष्ठमाया श्रेष्ठधर्मात्मवन्दिता।।१२।।
असृष्टिस्सङ्गरहिता सृष्टिहेतुःकपर्दिनी। वृषारूढा शूलहस्ता स्थितिसंहारकारिणी।।१३।।

मन्दस्मिता स्कन्दमाता सुद्धचित्ता मुनिस्तुता। महाभगवती दक्षा दक्षाध्बरविनाशिनी।।१४।।

सर्वार्थदात्री सावित्री सदाशिवकुटुम्बिनी। नित्यसुन्दरसर्वाङ्गी सच्चिदानन्दलक्षणा।।१५।।

नाम्नामष्टोत्तरशतमम्बायाः पुण्यकारणम्। सर्वसौभाग्यसिद्ध्यर्थं जपनीयं प्रयत्नतः।।१६।।

इदञ्जपाधिकारस्तु प्राणमेव ततस्तुतः। आवहन्तीतिमन्त्रेण प्रत्येकञ्च यथाक्रमम्।।१७।।

कर्तव्यं तर्पणं नित्यं पीतमन्त्रेतिमूलवत्। तत्तन्मन्त्रेतिहोमेति कर्तव्यश्चेतिमालवत्।।१८।।

एतानि दिव्यनामानि श्रुत्वा ध्यात्वा निरन्तरम्। स्तुत्वा देवीञ्च सततं सर्वान्कामानवाप्नुयात्।।१९।।

इति श्रीब्रह्मोत्तरखण्डे आगमप्रख्यातिशिवरहस्ये अन्नपूर्णआष्टोत्तरशतनामस्तोत्रम् समाप्तम्।।

## *अन्नपूर्णासहस्त्रनामस्तोत्रम्*

(नामावळीसहितम्)

कैलासशिखरासीनं देवदेवं महेश्वरम्। प्रणम्य दण्डवद्भूमौ पार्वती परिपृच्छति।।१।।

श्रीपार्वत्युवाच

अन्नपूर्णा महादेवी त्रैलोक्ये जीवधारिणी। नाम्नां सहस्त्रं तस्यास्तु कथयस्व महाप्रभो।।२।।

श्रीशिव उवाच

शृणु देवि वरारोहे जगत्कारिणि कौलिनि। आराधिता च सर्वेषां सर्वेषां परिपृच्छसि।।३।।

सहस्त्रैर्नामभिर्दिव्यैस्त्रैलोक्यप्राणिपूजितैः। अन्नदायास्स्तवं दिव्यं यत्सुरैरपि वाञ्छितम्।।४।।

कथयामि तव स्नेहात्सावधानावधारय। गोपनीयं प्रयत्नेन स्तवराजमिदं शुभम्।।५।।

न प्रकाश्यं त्वया भद्रे दुर्जनेभ्यो विशेषता। न देयं परशिष्येभ्यो भक्तिहीनाय पार्वति।।६।।

देयं शिष्याय शान्ताय गुरुदेवरताय च। अन्नपूर्णास्तवं देयं कौलिकाय कुलेश्वरि।।७।।

ओं अस्य श्रीमन्महाश्री अन्नपूर्णासहस्त्रनामस्तत्रोमालामन्त्रस्य, श्रीभगवान् सदाशिवऋषिः, अनुष्ठुप्छन्दः, प्रकटगुप्तगुप्ततरसम्प्रदाय कुलोत्तीर्णनिगर्भरहस्यातिपूर्वाचिन्त्यप्रभावा भगवती श्रीमन्महाश्रीअन्न पूर्णा देवता, हलो बीजं, स्वराश्शक्तिः, जीवो बीजं, बुद्धिश्शक्तिः, उदानो बीजं, सुषुम्ना नाडी, सरस्वती शक्तिः, धर्मार्थकाममोक्षार्थे पाठे जपे विनियोगः

ध्यानम्

अर्कोन्मुक्तशशाङ्ककोटिवदनामापीनतुङ्गस्तनीं चन्द्रार्धाङ्कितमस्तकं मधुमदामालोलनेत्रत्रयीम्।
बिभ्राणामनिशं वरं जपपटीं शूलं कपालं करैराद्यां यौवनगर्वितां लिपितनुं वागीश्वरीमाश्रये।।८।।

ॐ अन्नपूर्णायै नम:

अन्नपूर्णा अन्नदात्री अन्नराशिकृतालया। अन्नदा अन्नरूपा च अन्नदानरतोत्सवा।।१।।
अनन्ता च अनन्ताक्षी अनन्तगुणशालिनी। अच्युता अच्युतप्राणा अच्युतानन्दकारिणी।।२।।
अव्यक्ताऽनन्तमाहिमा अनन्तस्य कुलेश्वरी। अब्धिस्था अब्धिशयना अब्धिजा अब्धिनन्दिनी।।३।।
अब्जस्था अब्जंनिलया अब्जजा अब्जभूषणा। अब्जाभा अब्जहस्ता च अब्जपत्रशुभेक्षणा।।४।।
अब्जानना अनन्तात्मा अग्निस्था अग्निरूपिणी। अग्निजाया अग्निमुखी अग्निकुण्डकृतालया।।५।।
अकारा अग्निमाता च अजयाऽदितिनन्दिनी। आद्या आदित्यसङ्काशा आत्मज्ञा आत्मगोचरा।।६।।
आत्मसूरात्मदयिता आधारा आत्मरूपिणी। आशा आकाशपद्मस्था अवकाशस्वरूपिणी।।७।।
आशापुरी अगाधा च अणिमादिसुसेविता। अम्बिका अबला अम्बा अनाद्या च अयोनिजा।।८।।
अनीशा ईशिका ईशा ईशानी ईश्वरप्रिया। ईश्वरी ईश्वरप्राणा ईश्वरानन्ददायिनी।।९।।
इन्द्राणी इन्द्रदयिता इन्द्रसूरिन्द्रपालिनी। इन्दिरा इन्द्रभगिनी इन्द्रिया इन्दुभूषणा।।१०।।
इन्दुमाता इन्दुमुखी इन्द्रियाणां वशङ्करी। उमा उमापतेः प्राणा ओड्याणौ पीठवासिनी।।११।।
उत्तरज्ञा उत्तराख्या उकारा उत्तरात्मिका । ऋसूता ऋभवा ऋस्था ऋलृकारस्वरूपिणीं।।१२।।
ऋसूता ऋभवा ऋस्था ऋलृतकप्रीतिदायिनी। एका च एकवीरा च एकारैकाररूपिणी।।१३।।
ओकारी ओघरूपा च ओघत्रयसुपूजिता। ओघस्था ओघसम्भूता ओघधात्री च ओघसूः।।१४।।
षोडशस्वरसम्भूता षोडशस्वररूपिणी। वर्णात्मा वर्णनिलया शूलिनी वर्णमालिनी।।१५।।
काळरात्रिर्महारात्रिर्मोहरात्रिस्सुलोचना। काळी कपालिनी कृत्या काळिका सिंहगामिनी।।१६।।
कात्यायनी कलाधारा कालदैत्यनिकृन्तनी। कामिनी कामवन्द्या च कमनीया विनोदिनी।।१७।।
कामसूः कामवनिता कामधूः कमलावती। कामदात्री कराळी चकामकेलिविनोदिनी।।१८।।
कामना कामदा काम्या कमला कमलार्चिता। काश्मीरलिप्तवक्षोजा काश्मीरद्रवचर्चिता।।१९।।
कनका कनकप्राणा कनकाचलवासिनी। कनकाभा काननस्था कामाख्या कनकप्रदा।।२०।।
कामपीठस्थिता नित्या कामधामनिवासिनी। कम्बुकण्ठी कराळाक्षी किशोरी च ललाटिनी।।२१।।
कळाकाष्ठा निमेषाच कालस्वा कामरूपिणी। कालज्ञा कालमाता च कालधात्रीं कलावती।।२२।।
कालदा कालहा कुल्या कुरुकुल्या कुलाङ्गना। कीर्तिदा कीर्तिहा कीर्तिः कीर्तिस्था कीर्तिवर्धिनी।।२३।।
कीर्तिज्ञा कीर्तितपदा कृत्तिका केशवप्रिया। केशिहा केळिकारी च केशवानन्दकारिणी।।२४।।
कुमुदाभा कुमारी च कर्मदा कमलेक्षणा। कौमुदी कुमुदानन्दा कौळिकी च कुमुद्वती।।२५।।
कोदण्डधारिणी क्रोधा कूटस्था कोटराश्रया। कालकण्ठी कराळाङ्गी कालाङ्गी कालभूषणा।।२६।।

कङ्काळी कामदामा च कङ्काळकृतभूषणा। कपालकर्तृककरा करवीरस्वरूपिणी।।२७।।
कपर्दिनी कोमलाङ्गी कृपासिन्धुः कृपामयी। कुशावती कुण्डसंस्था कौबेरी कौशिकी तथा।।२८।।
काश्यपी कद्रुतनया कलिकल्मषनाशिनी। कञ्जस्था कञ्जवदना कञ्जकिञ्जल्कचर्चिता।।२९।।
कञ्जाभा कञ्जशैलस्था कञ्जनेत्रा कचोद्भवा। कामरूपा च ह्रीङ्करी कश्यपान्वयवर्धिनी।।३०।।
खर्वा च खञ्जनद्वन्द्वलोचना खर्ववाहिनी। खङ्गिनी खङ्गहस्ता च खेचरी खङ्गरूपिणी।।३१।।
खगस्था खगरूपा च खगगा खगसम्भवा। खगधात्री खगानन्दा खगयोनिस्वरूपिणी।।३२।।
खगेशी खेटककरा खगानन्दविवर्धिनी। खगमान्या खगाधारा खगगर्वविमोचनी।।३३।।
गङ्गा गोदावरी गीतिर्गायत्री गगनालया। गीर्वाणसुन्दरी गौश्च गाधा गीर्वाणपूजिता।।३४।।
गीर्वाणचर्चितपदा गान्धारी गोमती तथा। गर्विणी गर्वहन्त्री च गर्भस्ता गर्भधारिणी।।३५।।
गंर्भदा गर्भहन्त्री च गन्धर्वकुलपूजिता। गया गौरीच गिरिजा गिरिस्था गिरिसम्भवा।।३६।।
गिरिगह्वरमध्यस्था कुञ्जरेश्वरगामिनी। किरीटिनी च गदिनी कुञ्जाहारविभूषणा।।३७।।
गणपा गणका गण्या गणकानन्दकारिणी। गणपूज्याच गीर्वाणा गणपानन्दवर्धिनी।।३८।।
गुरुमाता गुरुरता गुरुभक्तिपरायणा। गोत्रा गौः कृष्णभगिनी कृष्णसूः कृष्णनन्दिनी।।३९।।
गोवर्धनी गोत्रधरा गोवर्धनकृतालया। गोवर्धनधरा गोदा गौराङ्गी गौतमात्मजा।।४०।।
घर्घरा घोररूपा च घोरा घर्घरनादिनी। श्यामा घनरवा घोरा घना घोरार्तिनाशिनी।।४१।।
घनस्था च घनानन्दा दारिद्यघननाशिनी। चित्तज्ञा चिन्तितपदा चित्तस्था चित्तरूपिणी।।४२।।
चक्रिणी चारुचम्पाभा चारुचम्पकमालिनी। चन्द्रिका चन्द्रकान्तिश्च चापिनी चन्द्रशेखरा।।४३।।
चण्डिका चण्डदैत्यघ्नी चन्द्रशेखरवल्लभा। चाण्डालिनी च चामुण्डा चण्डमुण्डवधोद्यता।।४४।।
चैतन्यभैरवी चण्डा चैतन्यघनगेहिनी। चित्स्वरूपा चिदाधारा चण्डवेगा चिदालया।।४५।।
चन्द्रमण्डलमध्यस्था चन्द्रकोटिसुशीतला। चपला चन्द्रभगिनी चन्द्रकोटिनिभानना।।४६।।
चिन्तामणिगुणाधारा चिन्तामणिविभूषणा। भक्तचिन्तामणिलता चिन्तामणिकृतालया।।४७।।
चारुचन्दनलिप्ताङ्गी चतुरा च चतुर्मुखी। चैतन्यदा चिदानन्दा चारुचामरवीजिता।।४८।।
छत्रदा छत्रधारी च छलच्छद्मविनाशिनी। छत्रहा छत्ररूपा च छत्रच्छाया कृतालया।।४९।।
जगज्जीवा जगद्धात्री जगदानन्दकारिणी। यज्ञप्रिया यज्ञरता जपयज्ञपरायणा।।५०।।
जननी जानकी यज्वा यज्ञहा यज्ञनन्दिनी। यज्ञदा यज्ञफलदा यज्ञस्थानकृतालया।।५१।।
यज्ञभोक्त्री यज्ञरूपा यज्ञविघ्नविनाशिनी। जपाकुसुमसङ्काशा जपाकुसुमशोभिता।।५२।।
जालन्धरी जया जैत्री जीमूतजयभाषिणी। जयदा जयरूपा च जयस्था जयकारिणी।।५३।।

जगदीशप्रिया जीवा जलस्था जलजेक्षणा। जलरूपा जह्नुकन्या जमुना जलजोदरी।।५४।।
जलजास्या जाह्नवी च जलजाभा जलोदरी। यदुवंशोद्भवा जीवा यादवानन्दकारिणी।।५५।।
यशोदा यशसां राशिर्यशोदानन्दकारिणी। ज्वलिनी ज्वालिनी ज्वाला ज्वलत्पावकसन्निभा।।५६।।
ज्वालामुखी जगन्माता यमळार्जुनभञ्जनी। जन्मदा जन्महा जन्मा जन्मभूर्जनकात्मजा।।५७।।
जनानन्दा जाम्बवती जम्बूद्वीपकृतालया। जाम्बूनदसमानाभा जाम्बूनदविभूषणा।।५८।।
जम्भहा जातिदा जातिर्ज्ञानदा ज्ञानगोचरा। ज्ञानहा ज्ञानरूपा च ज्ञानविज्ञानशालिंनी।।५९।।
जिनजैत्री जिनाधारा जिनमाता जिनेश्वरी। जितेन्द्रिया जनाधारा अजिनाम्बरधारिणी।।६०।।
शम्भुकोटिदुराधर्षा विष्णुकोटिविमर्दिनी। समुद्रकोटिगम्भीरा वायुकोटिमहामला।।६१।।
सूर्यकोटिप्रतीकाशा यमकोटिदुरापहा। कामधुक्कोटिफलदा शक्रकोटिसुराज्यदा।।६१।।
सूर्यकोटिप्तीकाशा यमकोटिदुरापहा। कामधुक्कोटिफलदा शक्रकोटिसुराज्यदा।।६२।।
कन्दर्पकोटिलावण्या पद्मकोटिनिभानना। पृथ्वीकोटिजनाधारा अग्निकोटिभयङ्करी।।६३।।
अणिमा महिमा प्राप्तिर्गरिमा लघिमा तथा। प्राकाम्यदा वशकरी ईशिका सिद्धिदा तथा।।६४।।
महिमादिगुणोपेता अणिमाद्यष्टसिद्धिदा। जवनघ्नी जनाधीना जामिनी च जरापहा।।६५।।
तारिणी तारिकातारा तोतला तुलसीप्रिया। तन्त्रिणी तन्त्ररूपाच तन्त्रज्ञा तन्त्रधारिणी।।६६।।
तारहारा च तुलजा डाकिनी तन्त्रगोचरा। त्रिपुरा त्रिदशात्रिस्था त्रिपुरासुरघातिनी।।६७।।
त्रिगुणा च त्रिकोणस्था त्रिमाता त्रितनुस्थिता। त्रैविद्या च त्रयी त्रिघ्नी तुरीया त्रिपुरेश्वरी।।६८।।
त्रिकोदरस्था त्रिविधा त्रैलोक्या त्रिपुरात्मिका। त्रिधाम्नी त्रिदशाराध्या त्र्यक्षा त्रिपुरवासिनी।।६९।।
त्रिवर्णा त्रिपदी तारा त्रिमूर्तिजननी त्वरा। त्रिदिवा त्रिदिवेशानी देवी त्रैलोक्यधारिणी।।७०।।
त्रिमूर्तिश्च त्रिजननी त्रिभूस्त्रिपुरसुन्दरी। तपस्विनी तपोनिष्ठा तरुणी ताररूपिणी।।७१।।
तामसी तापसी चैव तापघ्नी च तमोपहा। तरुणार्कप्रतीकाशा तप्तकाञ्चनसन्निभा।।७२।।
उन्मादिनी तन्तुरूपा त्रैलोक्यव्यापिनीश्वरी। तार्किकी तर्कविद्या च तापत्रयविनाशिनी।।७३।।
त्रिपुष्करा त्रिकालज्ञा त्रिसन्ध्या च त्रिलोचना। त्रिवर्गा च त्रिवर्गस्था तपसस्सिद्धिदायिनी।।७४।।
अधोक्षजा अयोध्या च अपर्णा च अवन्तिका। कारिका तीर्थरूपा च तीर्थतीर्थकरी तथा।।७५।।
दारिद्र्यदुःखदळिनी अदीना दीनवत्सला। दीननाथप्रिया दीर्घा दयापूर्णा दयात्मिका।।७६।।
देवदानवसंपूज्या देवानां प्रियकारिणी। दक्षपुत्री दक्षमाता दक्षयज्ञविनाशिनी।।७७।।
देवसूर्दक्षिणा दक्षा दुर्गा दुर्गतिनाशिनी। देवकीगर्भसंभूता दुर्गदैत्यविनाशिनी।।७८।।
अट्टाट्टहासिनी दोला दोला कर्माभिनन्दिनी। देवकी देविका देवी दुरितघ्नी तटित्तथा।।७९।।

गण्डकी गल्लकी क्षिप्रा द्वारा द्वारवती तथा। आनन्दोदधिमध्यस्था कटिसूत्रैरलङ्कृता।।८०।।
घोराग्निदाहदमनी दुःखदुस्स्वप्ननाशिनी। श्रीमयी श्रीमती श्रेष्ठा श्रीकरी श्रीविभावनी।।८१।।
श्रीदा श्रीशा श्रीनिवासा श्रीमती श्रीमती गतिः। धनदा दामिनी दान्ता धर्मदा धनशालिनी।।८२।।
दाडिमीपुष्पसङ्काशा धनागारा धनञ्जया। धूम्राभा धूम्रदैत्यघ्नी धवळा धवळप्रिया।।८३।।
धूम्रवक्त्रा धूम्रनेत्रा धूम्रकेशी च धूसरा। धरणी धारणी धैर्या धरा धात्री च धैर्यदा।।८४।।
दमिनी धार्मिणी धूश्च दया देग्ध्री दुरासदा। नारायणी नारसिंही नृसिंहहृदयालया।।८५।।
नागिनी नागकन्या च नागसूर्नागनायिका। नानारत्नविचित्राङ्गी नानाभरणमण्डिता।।८६।।
दुर्गस्ता दुर्गरूपा च दुःखदुष्कृतनाशिनी। ह्रीङ्कारी चैव श्रीङ्कारी हुङ्कारी क्लेशनाशिनी।।८७।।
नगात्मजा नागरीच नवीना नूतनप्रिया। नीरजास्या नीरदाभा नवलावण्यसुन्दरी।।८८।।
नीतिज्ञा नीतिदा नीतिर्निम्ननाभिर्नगेश्वरी। निष्ठा नित्या निरातङ्का नागयज्ञोपवीतिनी।।८९।।
निधिदा निधिरूपा च निर्गुणा नरवाहिनी। नरमांसरता नारी नरमुण्डविभूषणा।।९०।।
निराधारा निर्विकारा नुतिर्निर्वाणसुन्दरी। नरासृक्पानमत्ता च निर्वैरा नागगामिनी।।९१।।
परमा प्रमिता प्राज्ञा पार्वती पर्वतात्मजा। पर्वप्रिया पर्वरता पर्वपावनपावनी।।९२।।
परात्परतरा पूर्वा पश्चिमा पापनाशिनी। पशूनां पतिपत्नी च पतिभक्तिपरायणी।।९३।।
परेशीपारगापारा परञ्ज्योतिस्स्वरूपिणी। निष्ठुराक्रूरहृदया परासिद्धिः परागतिः।।९४।।
पशुघ्नीपशुरूपा च पशुहापशुवाहिनी। पिता माता च यन्त्री च पशुपाशविनाशिनी।।९५।।
पद्मिनी पद्महस्ता च पद्मकिञ्जल्कवासिनी। पद्मवक्त्रा च पद्माक्षी पद्मस्था पद्मसंभवा।।९६।।
पद्मास्या पञ्चमी पूर्णा पूर्णपीठनिवासिनी। पद्मरागप्रतीकाशा पाञ्चाली पञ्चमप्रिया।।९७।।
परब्रह्मस्वरूपा च परब्रह्मनिवासिनी। परमानन्दमुदिता परचक्रविनाशिनी।।९८।।
परेशी परमा पृथ्वी पीनतुङ्गपयोधरा। परावरा पराविद्या परमानन्ददायिनी।।९९।।
पूजा प्रजावती पुष्टिः पिनाकी परिकीर्तिता। प्राणहा प्राणरूपा च प्राणदा च प्रियंवदा।।१००।।
फणिभूता फणावेशी फकाराकुण्ठमालिनी। फणिराड्वृतसर्वाङ्गी फलभागनिवासिनी।।१०१।।
बलभद्रस्य भगिनी बाला बालप्रदायिनी। फल्गुरूपा प्रलम्बघ्नी फल्गूत्सवविनोदिनी।।१०२।।
भवानी भवपत्नी च भवभीतिहरा भवा। भवेश्वरी भवाराध्या भवेशी भवदायिका।।१०३।।
भवमाता भरागम्या भवकण्टकनाशिनी। भवप्रिया भवानन्दा भव्या च भवमोचनी।।१०४।।
भावनीया भगवती भवभारविनाशिनी। भूतधात्री च भूतेशी भूतस्था भूतरूपिणी।।१०५।।
भूतमाता च भूतघ्नी भूतपञ्चकवासिनी। भोगोपचारकुशला भिस्साधात्री च भूचरी।।१०६।।

भीतिघ्नी भक्तिगम्या च भक्तानामार्तिनाशिनी। भक्तानुकम्पिनी भीमा भगिनी भगनायिका।।१०७।।
भगविद्या भगक्लिन्ना भगयोनि र्भगप्रदा। भगेशी भगरूपा च भगगुह्या भगापहा।।१०८।।
भगोदरी भगानन्दा भाग्यदा भगमालिनी। भोगप्रदा भोगवासा भोगमूला च भोगिनी।।१०९।।
भेरुण्डा भेदिनी भीमा भद्रकाळी भिदोज्झिता। भैरवी भुवनेशानी भुवना भुवनेश्वरी।।११०।।
भीमाक्षी भारती चैव भैरवाष्टकसेविता। भास्वरा भास्वती भीतिर्भास्वदुत्तानशालिनी।।१११।।
भागीरथी भोगवती भवघ्नी भुवनात्मिका। भूतिदा भूतिरूपा च भूतस्था भूतवर्धिनी।।११२।।
माहेश्वरी महामाया महातेजा महासुरी। महाजिह्वा महालोला महादंष्ट्रा महाभुजा।।११३।।
महामोहान्धकारघ्नी महामोक्षप्रदायिनी। महादारिद्र्यशमनी महाशत्रुविमर्दिनी।।११४।।
महाशक्तिर्महाज्योतिर्महासुरविमर्दिनी। महाकाया महावीर्या महापातकनाशिनी।।११५।।
महारवा मन्त्रमयी मणिपूरनिवासिनी। मानसी मानदा मान्या मनश्चक्षुरगोचरा।।११६।।
माहेन्द्री मधुरा माया महिषासुरमर्दिनी। महाकुण्डलिनी शक्तिर्महाविभववर्धिनी।।११७।।
मानसी माधवी मेधा मतिदा मतिधारिणी। मेनकागर्भसम्भूता मेनका भगिनी मतिः।।११८।।
महोदरी मुक्तकेशी मुक्तिकामार्थसिद्धिदा। माहेशी महिषारूढा मधुदैत्यविमर्दिनी।।११९।।
महाव्रता महामूर्धा महाभयविनाशिनी। मातङ्गी मत्तमातङ्गी मातङ्गकुलमण्डिता।।१२०।।
महाधीरा माननीया मत्तमातङ्गगामिनी। मुक्ताहारलतोपेता मदघूर्णितलोचना।।१२१।।
महापराधराशिघ्नी महाचौरभयापहा। महाचिन्त्यस्वरूपा च मणिमन्त्रमहौषधी।।१२२।।
मणिमण्डपमध्यस्था मणिमालाविराजिता। मन्त्रात्मिका मन्त्रगम्या मन्त्रमाता सुमन्त्रिणी।।१२३।।
मेरुमन्दिरमध्यस्था मकराकृतिकुण्डला। मन्थरा च महासूक्ष्मा महादूती महेश्वरी।।१२४।।
मालिनी मानवी माध्वी मदरूपा मदोत्कटा। मदिरा मधुरा चैव मोदिनी च महोद्धता।।१२५।।
मङ्गळाङ्गी मधुमयी मधुपानपरायणा। मनोरमा रमामाता राजराजेश्वरी रमा।।१२६।।
राजमान्या राजपूज्या रक्तोत्पलविभूषणा। रांजीवलोचना रामा राधिका रामवल्लभा।।१२७।।
शाकिनी डाकिनी चैव लावण्याम्बुधिवीचिका। रुद्राणी रद्ररूपा च रौद्रा रुद्रार्तिनाशिनी।।१२८।।
रक्तप्रिया रक्तवस्त्रा रक्ताक्षी रक्तलोचना। रक्तकेशी रक्तदंष्ट्रा रक्तचन्दनचर्चिता।।१२९।।
रक्ताङ्गी रक्तभूषा च रक्तबीजनिपातिनी। रागादिदोषरहिता रतिजा रतिदायिनी।।१३०।।
विश्वेश्वरी विशालाक्षी विन्ध्यपीठनिवासिनी। विश्वभू र्वीरविद्या च वीरसू र्वीरनन्दिनी।।१३१।।
वीरेश्वरी विशालाक्षी विष्णुमाया विमोहिनी। विद्यावी विष्णुरूपा च विशालनयनोत्पला।।१३२।।

विष्णुमाता च विश्वात्मा विष्णुजायास्वरूपिणी। ब्रह्मेशी ब्रह्मदा ब्राह्मी ब्रह्माणी ब्रह्मरूपिणी।।१३३।।

द्वारका विश्ववन्द्या च विश्वपाशविमोचनी। विश्वासकारिणी विश्वा विश्वशक्तिर्विचक्षणा।।१३४।।

बाणचापधरा वीरा बिन्दुस्था बिन्दुमालिनी। षट्चक्रभेदिनी षोढा षोडशारनिवासिनी।।१३५।।

शितिकण्ठप्रिया शान्ता शाकिनी वातरूपिणी। शाश्वती शम्भुवनिता शाम्भवी शिवरूपिणी।।१३६।।

शिवमाता च शिवदा शिवा शिवहृदासना। शुक्लाम्बरा शीतलाच शीलाशीलप्रदायिनी।।१३७।।

शिशुप्रिया वैद्यविद्या सालग्रामशिला शुचिः। हरिप्रिया हरमूर्ति र्हरिनेत्रकृतालया।।१३८।।

हरिवक्त्रोद्भवा हाला हरिवक्षस्स्थलस्थिता। क्षेमङ्करी क्षितिक्षेत्रा क्षुधितस्य प्रपूरणी।।१३९।।

वैश्या च क्षत्रिया शूद्री क्षत्रियाणां कुलेश्वरी। हरपत्नी हराराध्या हरसूर्हररूपिणी।।१४०।।

सर्वानन्दमयी सिद्धिस्सर्वरक्षास्वरूपिणी। सर्वदुष्टप्रशमनी सर्वेप्सितफलप्रदा।।१४१।।

सर्वसिद्धेश्वराराध्या सर्वमङ्गळमङ्गळा। पुण्यं सहस्रनामेदं तव प्रीत्या प्रकाशितम्।।१४२।।

गोपनीयं प्रयत्नेन पठनीयं प्रयत्नतः। नातः परतरं पुण्यं नातः परतरं तपः।।१४३।।

नातः परतरं स्तोत्रं नातः परतरा गतिः। स्तोत्रं नामसहस्राख्यं मम वक्त्राद्विनिर्गतम्।।१४४।।

यः पठेत्परया भक्तया शृणुयाद्वा समाहितः। मोक्षार्थी लभते माक्षं स्वर्गार्थी स्वर्गमाप्नुयात्।।१४५।।

कामार्थी लभते कामं धनार्थी लभते धनम्। विद्यार्थी लभते विद्यां यशोऽर्थी लभते यशः।।१४६।।

कन्यार्थी लभते कन्यां सुतार्थी लभते सुतान्। मूर्खोऽपि लभते शास्त्रं चोरोऽपि लभते गतिम्।।१४७।।

गुर्विणी जनयेत्पुत्रं कन्या विन्दति सत्पतिम्। संक्रान्त्यां च चतुर्दश्यामष्टम्यां च विशेषतः।।१४८।।

पौर्णमास्याममावास्यां नवम्यां भौमवासरे। पठेद्वा पाठयेद्वापि पूजयेद्वापि पुस्तकम्।।१४९।।

समुक्तासर्वपापेभ्यः कामेश्वरसमो भवेत्। लक्ष्मीवान् सुतवांश्चैव वल्लभसर्वयोणिताम्।।१५०।।

तस्य वश्यं भवेदाशु त्रैलोक्यं सचराचरम्। विद्यानां पारगो विप्रः क्षत्रियो विजयी रणे।।१५१।।

वैश्यो धनसमृद्धस्स्याच्छूद्रस्सुखमवाप्नुयात्। क्षेत्रे च बहुसस्यं स्याद्गावश्च बहुदुग्धदाः।।१५२।।

नाशुभं नापदस्तस्य न भयं नृपशत्रुतः। जायते नाशुबा बुद्धिर्लभते कुलपूज्यताम्।।१५३।।

न बाधन्ते ग्रहास्तस्य न रक्षांसि न पन्नगाः। न पिशाचा न डाकिन्यो भूतभेताळडम्भकाः।।१५४।।

बालग्रहाभिभूतानां बालानां शान्तिकारकम्। द्वन्द्वानां प्रतिभेदे च मैत्रीकरणमुत्तमम्।।१५५।।

लोहपाशैर्दृढैर्बद्धो बन्दी वेश्मनि दुर्गमे। तिष्ठञ्छृण्वन्पठन्मर्त्यो मुच्यते नात्र संशयः।।१५६।।

पश्यन्ति नहि ते शोकं वियोगं चिरजीविनः। शृण्वती बद्धगर्भा च सुखं सैव प्रसूयते।।१५७।।

एकदा पठनादेव सर्वपापक्षयो भवेत्। नश्यन्ति च महारोगा दशधावर्तनेन च।।१५८।।

शतदावर्तनेचैव वाचां सिद्धिः प्रजायते। नवरात्रे जिताहारो दृढबुद्धि र्जितेन्द्रियः।।१५९।।

अम्बिकायतने विद्वान शुचष्मान मूर्तिसन्निधौ। एकाकी च दशावर्तं पठन्धीरश्च निर्भयः।।१६०।।
साक्षाद्भगवती तस्मै प्रथच्छेदीप्सितं फलम्। सिद्धपीठे गिरौ रम्ये सिद्धक्षत्रे सुरालये।।१६१।।
पठनात्साधकस्याशु सिद्धिर्भवति वाञ्छिता। दशावर्तं पठेन्नित्यं भूमिशायी नरशुचिः।।१६२।।
स्वप्ने मूर्तिमयी देवीं वरदां सोऽपि पश्यति। आवर्तनसहस्रैर्ये जपन्ति पुरुषोत्तमाः।।१६३।।
ते सिद्धा सिद्धिदा लोके शापानुग्रहणक्षमाः। प्रयच्छन्तश्च सर्वस्वं सेवन्ते तान्महीश्वराः।।१६४।।
भूर्जपत्रेष्टगन्धेन लिखित्वा तु शुभे दिने। धारयेद्यन्त्रितं शीर्षे पूजयित्वा कुमारिकाम्।।१६५।।
ब्राह्मणान् वरनारीश्च धूपैः कुसुमचन्दनैः। क्षीरखण्डादिभोज्यांश्च भोजयित्वा सुभक्तितः।।१६६।।
बध्नति ये महारक्षां बालानां च विशेषतः। रुद्रं दृष्टा यता देवं विष्णुं दृष्ट्वा च दानवाः।।१६७।।
पन्नगा गरुडं दृष्ट्वा सिंहं दृष्ट्वा यथा गजाः। मण्डूका भोगिनं दृष्ट्वा मार्जारं मूषिकास्तथा।।१६८।।
विघ्नभूताः पलायन्ते यस्य वक्त्रविलोकनात्। अग्निचोरभयं तस्य कदाचिन्नैव सम्भवेत्।।१६९।।
पातकान्विविधान्सोऽपि मेरुमन्दरसन्निभान्। भस्मितान्कुरुते क्षिप्रं तृणं वह्निहुतं यथा।।१७०।।
नृपाश्च वश्यतां यान्ति नृपपूज्याश्च ते नराः। महार्णवे महानद्यां पोतस्थे च न भीः क्वचित्।।१७१।।
रणे द्यूते विवादे च विजयं प्राप्नुवन्ति ते। सर्वत्र पूजितो लोकैर्बहुमानपुरस्सरैः।।१७२।।
रतिरागविवृद्धाश्च विह्वलाः कामपीडिताः। यौवनाक्रान्तदेहास्तान् श्रयन्ते वामलोचनाः।।१७३।।
सहस्रं जपते यस्तु खेचरो जायते नरः। सहस्रदशकं देवि यः पठेद्भक्तिमान्नरः।।१७४।।
सा तस्य जगतां धात्री प्रत्यक्षा भवति ध्रुवम्। लक्षं पूर्णं यदा देवी स्तोत्रराजं जपेत्सुधीः।।१७५।।
भवपाशविनिर्मुक्तो मम तुल्यो न संशयः। सर्वतीर्थेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम्।।१७६।।
सर्वधर्मेषु यज्ञेषु सर्वदानेषु यत्फलम्। सर्ववेदेषु प्रोक्तेषु यत्फलं परिकीर्तितम्।।१७७।।
तत्पुण्यं कोटिगुणितं सकृज्जप्त्वा लभेन्नरः। देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम्।।१७८।।
सयास्यति न सन्देहस्स्तवराजस्य कीर्तनात्।।

इति श्रीरुद्रयामळे उत्तरखण्डे भवानीश्वरसंवादे अन्नपूणासहस्त्रनामस्तोत्रं समाप्तम्।।

## देव्यपराधक्षमापनस्तोत्रम्

न मंन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो
न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः।
न जाने मुद्रास्ते तदपि च न जाने विलपनं
परं जाने मातस्त्वदनुसरणं क्लेशहरणम्।।१।।

विधेरज्ञानेन द्रविणविरहेणालसतया

विधेयाशक्यत्वात्तव चरणयोर्या च्युतिरभूत्।

तदेतत् क्षन्तव्यं जननि सकोलद्धारिणि शिवे

कुपुत्रो जायेत क्वचिदपि कुमाता न भवति।।२।।

पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः

परं तेषां मध्ये विरलतरलोऽहं तव सुतः

मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे

कुपुत्रो जायेत क्वचिदपि कुमाता न भवति।।३।।

जगन्मातर्मातस्तव चरणसेवा न रचिता

न वा दत्तं देवि द्रविणमपि भूयस्तवमया

तथाऽपि स्नेहं मयि निरुपमं यत्प्रकुरुषे

कुपुत्रो जायेत क्वचिदपि कुमाता न भवति।।४।।

परित्यक्त्वा देवान् विविधविधसेवाकुलतया

मया पञ्चाशीतेरधिकमपनीते तु मवयसि।

इदानीं चेन्मातस्तव यहि कृपा नापि भविता

निरालम्बो लम्बोदरजननि कं यामि शरणम्।।५।।

श्वपाको जल्पाको भवति मधुपाकोपमग्गिरा

निरातङ्को रङ्को विहरति चिरं कोटिकनकेः।

तवापर्णे कर्णे विंशति मनुवर्णे फलमिदं

जनः को जानीते जननि जपनीयं जपविधौ।।६।।

चिताभस्मालेपो गरलमशनं दिक्पटधरो

जटाधारी कण्ठे भुजगपतिहारी पशुपतिः।

कपाली भूतेशो भजति जगदीशैकपदवीं

भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम्।।७।।

न मोक्षस्याकाङ्क्षा नचविभववाञ्छापि च न मे

न विज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः।

अतस्त्वां संयाचे जननि जननं यातु मम वै

मृडानी रुद्राणि शिव शिव भवानीति जपतः।।८।।

**नाराधितासि विधिना विविधोपचारैः**
**किं रूक्षचिन्तनपरैर्न कृतं वचोभिः।**
**श्यामे त्वमेव यदि किञ्चन मय्यनाथे**
**धत्से कृपास्मुपचितंमम्ब परं तवैव।।९।।**
**आपत्सु मग्नः स्मरणं त्वदीयं**
**करोमि दुर्गे करुणार्णवेशि।**
**नैतच्छठत्वं मम भावयेथाः**
**क्षुधातृषार्ता जननीं स्मरन्ति।।१०।।**
**जगदम्ब विचित्रमत्र किं**
**परिपूर्णा करुणास्ति चेन्मयि।**
**अपराधपरम्परापरं**
**न हि माता समुपेक्षते सुतम्।।११।।**
**मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि।**
**एवं ज्ञात्वा महादेवि यथायोग्यं तथा कुरु।।१२।।**

इति श्रीशङ्कराचार्यविरचितं देव्यपराधक्षमापनस्तोत्रं सम्पूर्णम्।

## *श्री अन्नपूर्णावरण सपर्याः*

(श्रीललिता उपाङ्गभूता)

(आवरणपूजा प्रारम्भपूर्वकं न्यासाः एवं पीठादिपूजां कुर्यात्)

सर्वतोमद्रमंडले :—

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ मं मंडूकादिपरतत्वान्त पीठ देवताभ्यो नमः**

इति संपूज्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ मण्डूकाय नमः मण्डूक श्री पादुकां पूजयामि तर्पयामि नमः,**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ कालाग्निरुद्राय नमः, कलग्निरुद्रा श्री पादुकां पूजयामि तर्पयामि नमः,**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ मूलप्रकृत्यै नमः, मूलप्रकृति श्री पादुकां पूजयामि तर्पयामि नमः,**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ आधारशक्त्यै नमः, आधारशक्ति श्री पादुकां पूजयामि तर्पयामि नमः,**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ कूर्माय नमः, कूर्म श्री पादुकां पूजयामि तर्पयामि नमः,**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अनन्ताय नमः, अनन्त श्री पादुकां पूजयामि तर्पयामि नमः,**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ वराहाय नमः, वराह श्री पादुकां पूजयामि तर्पयामि नमः,**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ पृथिव्यै नमः पृथिवी श्री पादुकां पूजयामि तर्पयामि नमः,**

नव पीठ शक्तीः पूजयेत् पूर्वादि दिक्षुक्रमेण

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ जया श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ विजया श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अजिता श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अपराजिता श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ नित्या श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ विलासिनी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ द्रोग्घ्री श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अघोरा श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ मंगला श्री पादुकां पूजयामि तर्पयामि नमः**

तदुपरि शुद्धीकृतयन्त्रं मूर्तिं वा सस्थाप्य —

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रीं अन्नपूर्णा पद्मासनायै नमः, श्री पादुकां पूज्यामि तपर्यामि नमः**

इतिपुष्पाद्यासनम् दत्वा प्रतिष्ठाम् कृत्वा

मूलेन प्रकल्प्य आवाहनादि पुष्पांतैरुपचारैः सम्पूज्य
देव्याज्ञां गृहीत्वा ततः आवरणपूजां कुर्यात्।

## *प्रथमावरणम्*

त्रिकोणे आग्नेयादि क्रमेण अग्निकोणे :—

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रौं नमः शिवायशिव श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रीं नमः शिवाय शिवश्री नमो भगवते वराहरूपाय भूर्भुव पतये भूपतित्वं मे देहि स्वाहा वराह श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रौं नमः शिवाय शिव श्री ॐ नमो नारायणाय नारायण श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रौं नमः शिवाय ॐ एताः शिव श्री ललिता परमेश्वरी उपाङ्ग भूता श्री अन्नपूर्णा चक्रे समुद्राः ससिद्धयः सयुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः संपूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः** (पुष्पाञ्जलिः)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ श्री अन्नपूर्णा चक्रेशी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ योनिमुद्रां प्रदर्श्य** अन्नपूर्णां मूलेन त्रिः सन्तर्प्य धूपं दीपं नैवेद्यं ताम्बूलं नीराजनम् च समर्प्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अभीष्ट सिद्धिं मे देहि शरणागत वत्सले भक्त्या समपर्ये तुभ्यं प्रथमावरणार्चनम्** इति योनिमुद्रया प्रणमेत्

## *द्वितीयावरणम्*

षट्कोणकेसरेषु—आग्नेय्यादि चतुर्दिक्षु मध्ये च पूजयेत्

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रां हृदयाय नमः हृदयशक्ति श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रीं शिरसे स्वाहा। शिरश्शाक्ति श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ॐ ह्रूं शिखायै वषट्। शिखा शक्ति श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रैं कवचाय हुम्। कवचशक्ति श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रौं नेत्रत्रयाय वौषट्। नेत्रशक्ति श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रः अस्त्रायफट्। अस्त्रशक्ति श्री पादुकां पूजयामि तर्पयामि नमः**

(देवीवाम भागे) **ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ग्लौं अन्नंमह्यमन्नं में देह्यान्नाधिपतये ममान्नं प्रदापय स्वाहा श्री अन्नपूर्णा श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ग्लौं पृथिव्यै नमः पृथिवी श्री पादुकां पूजयामि तर्पयामि नमः**

इतिमन्त्रेण भूमिं पूजयेत्।

देवी दक्षिणतः :—

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ श्रीं अन्नं मह्यमन्नं में देह्यान्नाधिपतये ममान्नं-प्रदापय स्वाहा ॐ श्रीं महालक्ष्म्यै नमः महालक्ष्मी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रीं नमः शिवाय शिव ॐ एताः श्री ललिता परमेश्वरी उपाङ्गभूता श्री अन्नपूर्णा चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः संपूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः** – (पुष्पाञ्जलिः)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ श्री अन्नपूर्णा चक्रेशी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ** योनिमुद्रां प्रदर्श्य **अन्नपूर्णा मूलेन त्रिः सन्तर्प्य–** धूपं दीपं नैवेद्यं ताम्बूलं नीराजनम् च समर्प्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अभीष्ट सिद्धिं मे देहि शरणागत वत्सले भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्**

इति योनिमुद्रया प्रणमेत्।

## *तृतीयावरणम्*

**ततः चतुर्दले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य, प्राचीक्रमेण चतुर्दिक्षु**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अपरा श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रीं भुवनेश्वरी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ श्री कमला श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ क्लीं सुभगा श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रीं नमः शिवाय ॐ एताः शिव श्री ललिता परमेश्वरी उपाङ्गभूता श्री अन्नपूर्णा चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः संपूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः** (पुष्पाञ्जलिः)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ श्री अन्नपूर्णा चक्रेशी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ योनिमुद्रां प्रदर्श्य अन्नपूर्णां मूलेन त्रिः सन्तर्प्याः**

धूपं दीपं नैवेद्यं ताम्बूलं नीराजनम् च समर्प्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम्।**

इति योनिमुद्रया प्रणमेत्

## *तुरीयावरणम्*

अष्टदले प्राची क्रमेण :—

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ब्राह्मी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ माहेश्वरी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ कौमारी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ वैष्णवी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ वाराही श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ इन्द्राणी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ चामुण्डा श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ महालक्ष्मी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रौं नमः शिवाय ॐ एताः शिव श्री ललिता परमेश्वरी उपाङ्ग भूता श्री अन्नपूर्णा चक्रे समुद्राः ससिद्धयः सवाहनाः सपरिवाराः सर्वोपचारैः संपूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः** (पुष्पाञ्जलिः)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अन्नपूर्णा चक्रेशी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ** योनिमुद्रां प्रदर्श्य **अन्नपूर्णा मूलेन मन्त्रेण त्रिः सन्तर्पय** धूपं दीपं नैवेधं ताम्बूलं नीराजनम् च समर्प्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अभीष्ट सिद्धिं मे देहि शरणागतवत्सले भक्तया समक्त्या तुभ्यं तुरीयावरणार्चनम्।**

इति योनिमुद्रया प्रणमेत्।

## पञ्चमावरणम्

**षोडशदले प्राची क्रमेणः–**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अं अमृता श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ मां मानदा श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ तुं तुष्टिः श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ पुं पुष्टिः श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ प्रीं प्रीति श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ रं रति श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रीं ह्रीं श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ श्रीं श्रीं श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ स्वां स्वधा श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ स्वां स्वाहा श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ज्यों ज्योत्सना श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ हैं हैमवती श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ छां छाया श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ पूं पूर्णिमा श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ निं नित्या श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अं अमावाश्या श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्लीं श्रीं ऐं क्लीं सौः ॐ ह्लौं नमः शिवाय ॐ एताः शिव श्रीललिता परमेश्वरी उपाङ्ग भूता श्री अन्नपूर्णा चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवानाः सपरिवाराः सर्वोपचारैः संपूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः** (पष्पाञ्जलिः)

**ॐ ऐं ह्लीं श्रीं ऐं क्लीं सौः ॐ अन्नपूर्णा चक्रेशी श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्लीं श्रीं ऐं क्लीं सौः ॐ** योनिमुद्रां प्रदर्श्य

अन्नपूणां मूलेन त्रिः सन्तर्प्य

धूपं दीपं नैवेद्यं ताम्बूलं नीराजनम् च समर्प्य

**ॐ ऐं ह्लीं श्रीं ऐं क्लीं सौः ॐ अभष्टिसिद्धिं मे देहि शरणागत वत्सले भक्त्या समर्पये तुभ्यं पंचमावरणार्चनम्।**

इति योनिमुद्रया प्रणमेत्।

## चक्रपूजनम्

भूपुराद्बहिः दिशाधिपतये पूर्वावापि क्रमेण इन्द्रादीन् ततः वज्रादीन् च पूजयेत्

**ॐ ऐं ह्लीं श्रीं ऐं क्लीं सौः ॐ नमोभगवते रुद्राय पूर्व इन्द्राय ऐरावतारूढाय वज्रहस्ताय परिवार सहिताय दिग्देवताधिपतये नमः इन्द्र श्री पादुकां पूजयामि तर्पयामि नमः** (पूर्व दग्)

**ॐ ऐं ह्लीं श्रीं ऐं क्लीं सौः ॐ नमो भगवते रूद्राय आग्नेयदिशाधिपतये अजारूदाय शक्ति हस्ताय परिवार सहिताय दिग्देवताधिपतये नमः अग्नि श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्लीं श्रीं ऐं क्लीं सौः ॐ नमो भगवते रुद्राय दक्षिणदिशाधिपतये महिषारूढाय शक्ति हस्ताय परिवार सहिताय यमाय नमः यम श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्लीं श्रीं ऐं क्लीं सौः ॐ नमोभगवते रुद्राय नैर्ऋत्यदिशाधिपाय प्रेतमारूढाय खड्गहस्ताय परिवारसहिताय दिग्देवताधिपतये नैर्ऋतये नमः, निर्ऋति श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्लीं श्रीं ऐं क्लीं सौः ॐ नमोभगवते रुद्राय वायव्य दिशाधिपाय मृगारूढाय पाशहस्ताय परिवार सहिताय दिग्देवताधिपतये वायवे नमः, वायु श्री पादुकां पूजयामि तर्पयामि नमः**

**ॐ ऐं ह्लीं श्रीं ऐं क्लीं सौः ॐ नमो भगवते रुद्राय उत्तरदिशाधिपाय पुष्पकारूढाय बाणहस्ताय परिवार सहिताय दिग्देवताधिपतये कुबेराय नमः, कुबेर श्री पादुकां पूज्यामि नमः**

**ॐ ऐं ह्लीं श्रीं ऐं क्लीं सौः ॐ नमो भगवते रुद्राय ईशान्यदिशाधिपाय वृषभारूढाय त्रिशूलहस्ताय परिवारसहिताय दिग्देवताधिपतये ईशानाय नमः ईशान श्री पादुका पूजयामि तर्पयामि नमः**

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ह्रौं नमः शिवाय ॐ एताः शिव श्री ललितापरमेश्वरी उपाङ्गभूता श्री अन्नपूर्णा चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः संपूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः (पुष्पाञ्जलिः)

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ योनिमुद्रां प्रदर्श्य अन्नपूर्णां मूलेन त्रिः सन्तर्प्य धूप दीप नैवेद्यं ताम्बूलं नीराजनम् च समर्प्य ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अभीष्ट सिद्धिं में देहि शरणागत वत्सले भक्तया समर्प्ये तुभ्यं चक्रपूजाम्

इति योनिमुद्रया प्रणमेत्।

अथ यथावकाशं अन्नपूर्णा अष्टेत्तरशतैःवा सहस्रनामैः वा अर्चनं कुर्यात् ततः सविस्थारेण उत्तरार्ध पूजां च कुर्यात् उत्तरार्ध पूजां सपर्याप्रकरणे उत्तारार्धपूजा खण्डे द्रष्टव्यम्।

## श्रीअश्वारूढा

(श्री ललिता परमेश्वरी प्रत्यङ्ग भूता)

अस्यश्री अश्वारूढा महा मन्त्रस्य। पर ब्रह्म ऋषिः। गायत्रीः छन्दः। श्री अश्वारूढाम्बा देवता। आं बीजं। ह्रीं शक्तिः क्लीं कीलकम्

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ आं अंगुष्टाभ्यां नमः हृदयाय नमः।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रीं तर्जनीभ्यां नमः शिरसेश्वाहा।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ क्रों मध्यमाम्यां नमः शिखायै वषट्।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ एह्येहि अनामिकाभ्यां नमः कवचाप हूं।
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ परमेश्वरि कनिष्टिकाभ्यां नमः नेत्रत्रयाय वौषट्
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ स्वाहा करतलकरपृष्टाभ्यां नमः अस्त्रायफट्
ॐ भूर्भुवस्वरों इति दिग्बन्धः

ध्यानम्

अश्वारूढा कराग्रे नवकनकमयां वेन्तयष्टिं दधाना,
दक्षेऽन्ये धारयन्ती स्फुरति धनुर्लतापाशहस्ता सुसाध्या।
देवी नित्यप्रसक्ष्दा शशिशकललसत्केशपाशा त्रिनेत्रा
दद्यादाद्यानवद्यां श्रियमखिलसुखप्राप्तिहृद्यां श्रियै नः।।

मनुः– आं ह्रीं क्रीं एह्येहि परमेश्वरि स्वाहा।

पंञ्चपूजा – विमोकमपि कृत्वा

## *अन्नपूर्णेश्वरीमन्त्रः (विंशत्यक्षरीमन्त्रः)*

**ॐ ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा।**

**अस्य मन्त्रस्य द्रुहिण ऋषिः कृतिश्छन्दः। अन्नपूर्णेशीदेवता।**

**ह्रां ह्रीं इत्यादि न्यासः। ॐ नमः मुखे। ह्रीं नमः वामनेत्रे। भगवति नमः दक्षकर्णे। माहेश्वरि वामकर्णे। अन्नपूर्णे नमः लिंगे। स्वाहा नमः गुदे।।**

इति वर्ण न्यासः कृत्वा ध्यायेत्।।

**तप्तस्वर्णनिभा शशांकमुकुटा रत्नप्रभाभासुरा, नानावस्त्र विराजिता त्रिनयना भूमीरमाभ्यां युता।**

**दर्वी हाटकभाजनं च दधती रम्यीच्चपीनस्तनी, नित्यन्तं शिवमाकलय्य मुदिता ध्येयान्नपूर्णेश्वरी।।**

**पुरश्चरणं लक्षजपः। धृतमिश्रितचरुणा दशांशतो होमः।**

**अन्यमन्त्राः।**

१. **ॐ ह्रीं नमो भगवति माहेश्वर्यन्नपूर्णे स्वाहा। २द्वि २नेत्र ४वेद ७ब्धि २नेत्रार्णैरङ्गमीरितम्।।**
सप्तदशाक्षरीमन्त्रः।

२. **ॐ ह्रीं श्रीं क्लीं, नमो भगवति, माहेश्वरि ममाभिलषितमन्नं देहि देह्यन्नपूर्णे स्वाहा ४ युगांग ६ बेद सप्ताब्धि४ ६षडर्णैरङ्गकल्पना।** (३१ अक्षरः)

३. **ॐ श्रीं नमो भगवति प्रसन्नपारिजातेश्वर्यन्न पूर्णे स्वाहा।** रामानवेदनिधिभिर्वेदद्वयर्णैः षडंगम्।
चतुर्विंशत्यक्षरीमन्त्रः।

४. **ॐ श्रीं ह्रीं नमो भगवति माहेश्वरि प्रसन्नवरदेऽन्नपूर्णे स्वाहा।** पंचविंशत्यक्षरीमन्त्रः
**स्थाद्राग षड्युगषड्नेत्रास्त्रत्वडंगकम्।**
**एतेषांचतुर्णां मन्त्राणां अन्यत्सर्वंपूर्ववत्।।**

## *आम्नायमन्त्रे।। अन्नपूर्णेश्वरि मन्त्रः*

**अस्य मन्त्रस्य। सदाशिव ऋषिः। जगतीछन्दः। श्रीअन्नपूर्णेश्वरी देबता।**

**ह्रीं वीजं। श्रीं शक्तिः। क्लीं की लकं। ह्रां इत्यादि न्यासः**

**मनुः। ह्रीं श्रीं क्लीं ॐ नमो भगवत्यन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा।**

**उद्यत्सहस्त्रद्युतिरिवगौरामुत्तुंगपीनस्तलंबहाराम्।**
**माणिक्यदर्वीमधुपात्रहस्तां स्मरामि तां तत्स्मरवैरिकांताम्।।**
**आदायदक्षिण करेण सुवर्णदर्वीं दुग्धान्नपूर्ण-मितरेण च रुक्मपात्रं।**
**अन्नप्रदान निरतां नवहेमवर्णाम्**
**अंबां भजे कनकभूषणभूषितांगीम्।।**

## अन्नपूर्णा मन्त्रोद्धारं

तारं परापि कमला कामं विश्वं ततो वदेत्। भगवति माहेश्वरि चान्नपूर्णे च ठद्वयम्।।
ॐ ह्रीं श्रीं क्लीं नमो भगबति माहेश्वरि अन्नपूर्णे स्वाहा।।
आदि बीजद्वयेवैयं पूज्या देव्बाः समीपगाः।।

उत्कीलनं

विश्वमादौ जपेत् देवि बनांते मदनं पठेत्। अन्नपूर्णामनोरेव स्यादुत्कीलनो मनुः।।

संजीवनं

अन्नपूर्णा मनोर्येन भरेत्संजीवनं परं। वाणीमन्ते जपेदादौ कामराजं च साधकः।।

यन्त्रं

त्रिकोणं रसारं त्रिकोणं त्रिकोणं, त्रिकोणं त्रिकोणं त्रिकोणं हि वृत्तं।
ततो नागपत्रांचितं चाग्निवृत्तं, धवामंदिरं चान्नपूर्णेष्टचक्रम्।।

ध्यानं

चन्द्रार्धमौलिं द्विभुजां त्रिनेत्रां शूलाक्षमाले द्विभुजे वहंतीम्।
एणासनस्थां भुजगोपवीतां तामन्नपूर्णां हृदये स्मरामि।।

संपुटमन्त्रः

तारं कामं मनोरते दद्यात्मार्वति साधकः।
अन्नपूर्णामनोरेष मनुस्यात्संपुटामिधः।।

## श्री अन्नपूर्णाअष्टेत्तरशत पादुकार्चन सपर्या

(श्री श्री श्री ज्ञानानेन्द्रसरस्वती यति विरचितम्)

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अन्नपूर्णा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शिवा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ देवी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ भीमा श्री पादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ पुष्टिः श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ सरस्वती श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ सर्वज्ञा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ पार्वती श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ दुर्गा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शर्वाणी श्री पादुकां पूजयामि नमः १०
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शिववल्लभा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ वेदवेद्या श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ महाविद्या श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ विद्यादात्री श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ विशारदा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ कुमारी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ त्रिपुरा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ बाला श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ लक्ष्मी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ श्रि श्री पादुकां पूजयामि नमः २०
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ भयहारिणी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ भवानी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ विष्णुजननी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ब्रह्मादिजननी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ गणेशजननी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शतिः श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ कुमारजननी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शुभा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ भोगप्रदा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ भगवती श्री पादुकां पूजयामि नमः ३०
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ भक्ताभीष्टप्रदायिनी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ भवरोगहरा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ भव्या श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शुभ्रा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ परममङ्गळा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ भवानी श्री पादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ चञ्चला श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ गौर्यै श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ चारुचन्द्रकळाधरा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ विशालाक्षी श्री पादुकां पूजयामि नमः ४०
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ विश्वमात्रे श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ विश्ववन्द्या श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ विलसिनी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ आर्या श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ कल्याणनिलया श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ रुद्राणी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ कमलासना श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शुभप्रदा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शुभावर्ता श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ वृत्तपीनपयोधरा श्री पादुकां पूजयामि नमः ५०
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ अम्बा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ संहारमथनी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ मृडानी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ सर्वमङ्गळा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ विष्णुसंसेविता श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ सिद्धा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ब्रह्माणी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ सुरसेविता श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ परमानन्ददा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शान्तिः श्री पादुकां पूजयामि नमः ६०
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ परमानन्दरूपिणी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ परमानन्दजननी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ परा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ आनन्दप्रदायिनी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ परमा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ भक्तवत्सला श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ पूर्णचन्द्राभवदना श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ पूर्णचन्द्रनिभांदुका श्री पादुकां पूजयामि नमः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शुभलक्षणसम्पन्ना श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शुभानन्दगुणार्णवा श्री पादुकां पूजयामि नमः ७०
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शुभसौभाग्यानलया श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शुभदा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ रतिप्रिया श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ चण्डिका श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ चण्डमथनी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ चण्डदर्पनिवारिणी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ मार्तण्डनप्रना श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ साध्वी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ चन्द्राग्निनयना श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ सती श्री पादुकां पूजयामि नमः ८०
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ पुण्डरीकहरा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ पूर्णा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ पुण्यदा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ पुण्यरूपिणी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ मायतीता श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ श्रेष्ठमाया श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ श्रेष्ठधर्मा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ आत्मवन्दिता श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ असृष्टिः श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ सङ्गरहिता श्री पादुकां पूजयामि नमः ९०
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ सृष्टिहेतुः श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ कपर्दिनी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ वृषारूढा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शूलहस्ता श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ स्थितिसंहारकारिणी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ मन्दस्मिता श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ स्कन्दमात्रे श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ शुद्धचित्ता श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ मुनिस्तुता श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ महाभगवती श्री पादुकां पूजयामि नमः १००

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ दक्षा श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ दक्षाध्वरविनाशिनी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ सर्वार्थदात्री श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ सावित्री श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ सदाशिवकुटुम्बिनी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ नित्यसुन्दरसर्वांगी श्री पादुकां पूजयामि नमः
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ सच्चिदानन्दलणा श्री पादुकां पूजयामि नमः १०८

परमंहस परिव्राजक श्री श्री श्री ज्ञानानेन्द्रसरस्वतीयति विरचित अन्नपूर्णा अष्टोत्तरशत पादुकार्चन सर्पया समाप्ताः।

## *अन्नपूर्णासिहस्रनामावळिः*

ॐ अन्नपूर्णायै नमः
ॐ अन्नदात्र्यै नमः
ॐ अन्नराशिकृतालयायै नमः
ॐ अन्नदायै नमः
ॐ अन्नरूपायै नमः
ॐ अन्नदानरतोत्सवायै नमः
ॐ अनन्तायै नमः
ॐ अनन्ताक्ष्यै नमः
ॐ अनन्तगुणशालिन्यै नमः
ॐ अच्युतायै नमः १०
ॐ अच्युतप्राणायै नमः
ॐ अच्युतानन्दकारिण्यै नमः
ॐ अव्यक्तायै नमः
ॐ अनन्तमहिमायै नमः
ॐ अनन्तस्य कुलेश्वर्यै नमः
ॐ अब्धिस्थायै नमः
ॐ अब्धिशयनायै नमः
ॐ अब्धिजायै नमः
ॐ अब्धिनन्दिन्यै नमः
ॐ अब्जस्थायै नमः २०
ॐ अब्जनिलयायै नमः
ॐ अब्जजायै नमः
ॐ अब्जभूषणायै नमः
ॐ अब्जाभायै नमः
ॐ अब्जहस्तायै नमः
ॐ अब्जपत्तशुभेक्षणायै नमः
ॐ अब्जाननायै नमः
ॐ अनन्तात्मने नमः
ॐ अग्निस्थायै नमः
ॐ अग्निरूपिण्यै नमः ३०
ॐ अग्निजायायै नमः
ॐ अग्निमुख्यै नमः
ॐ अग्निकुण्डकृतालयायै नमः
ॐ अकारायै नमः
ॐ अग्निमात्रे नमः
ॐ अजयायै नमः
ॐ अदितिनन्दिन्यै नमः
ॐ आद्यायै नमः
ॐ आदित्यसङ्काशायै नमः
ॐ आत्मज्ञायै नमः ४०
ॐ आत्मगोचरायै नमः
ॐ आत्मसुवे नमः
ॐ आत्मदयितायै नमः
ॐ आधारायै नमः
ॐ आत्मरूपिण्यै नमः
ॐ आशायै नमः
ॐ आकाशपद्मस्थायै नमः
ॐ अवकाशस्वरूपिण्यै नमः

ॐ आशापूर्यै नमः
ॐ अगाधायै नमः ५०
ॐ अणिमादिसुसेवितायै नमः
ॐ अम्बिकायै नमः
ॐ अबलायै नमः
ॐ अम्बायै नमः
ॐ अनाद्यायै नमः
ॐ अयोनिजायै नमः
ॐ अनीशायै नमः
ॐ ईशिकायै नमः
ॐ ईशायै नमः
ॐ ईशान्यै नमः ६०
ॐ ईश्वरप्रियायै नमः
ॐ ईश्वरप्रियायै नमः
ॐ ईश्वर्यै नमः
ॐ ईश्वरप्राणायै नमः
ॐ ईश्वरानन्ददायिन्यै नमः
ॐ इन्द्राण्यै नमः
ॐ इन्द्रदयितायै नमः
ॐ इन्द्रसुवे नमः
ॐ इन्द्रपालिन्यै नमः
ॐ इन्दिरायै नमः ७०
ॐ इन्द्रभगिन्यै नमः
ॐ इन्द्रियायै नमः
ॐ इन्दुभूषणायै नमः
ॐ इन्दुमात्रे नमः
ॐ इन्दुमुख्यै नमः

ॐ इन्द्रियाणां वशंकर्यै नमः
ॐ उमायै नमः
ॐ उमापतेः प्राणायै नमः
ॐ ओड्याणपीठवासिन्यै नमः
ॐ उत्तरज्ञायै नमः
ॐ उत्तराख्यायै नमः ८०
ॐ उकारायै नमः
ॐ उत्तरात्मिकायै नमः
ॐ ॠमात्रे नमः
ॐ ॠभवायै नमः
ॐ ॠस्थायै नमः
ॐ ॠलृकारस्वरूपिण्यै नमः
ॐ ॠकारायै नमः
ॐ लृकारायै नमः
ॐ लृतकप्रीतिदायिन्यै नमः
ॐ एकायै नमः ९०
ॐ एकवीरायै नमः
ॐ एकारैकाररूपिण्यै नमः
ॐ ओकार्यै नमः
ॐ ओघरूपायै नमः
ॐ ओघत्रयसुपूजितायै नमः
ॐ ओघस्थायै नमः
ॐ ओघसंभूतायै नमः
ॐ ओघधात्र्यै नमः
ॐ ओघसुवे नमः
ॐ षोडशस्वरसंभूतायै नमः १००
ॐ षोडशस्वरूपिण्यै नमः

ॐ वर्णात्मने नमः
ॐ वर्णनिलयायै नमः
ॐ शूलिन्यै नमः
ॐ वर्णमालिन्यै नमः
ॐ काळरात्र्यै नमः
ॐ महारात्र्यै नमः
ॐ मोहरात्र्यै नमः
ॐ सुलोचनायै नमः
ॐ काळ्यै नमः
ॐ कपालिन्यै नमः
ॐ कृत्यायै नमः
ॐ काळिकायै नमः
ॐ सिंहगामिन्यै नमः
ॐ कात्यायन्यै नमः
ॐ कलाधारायै नमः
ॐ कालदैत्यनिकृन्तन्यै नमः
ॐ कामिन्यै नमः
ॐ कामवन्द्यायै नमः
ॐ कमनीयायै नमः
ॐ विनोदिन्यै नमः
ॐ कामसुवे नमः
ॐ कामवनितायै नमः
ॐ कामधुरे नमः
ॐ कमलावत्यै नमः
ॐ कामदात्र्यै नमः
ॐ कराळ्यै नमः
ॐ कामकेळिविनोदिन्यै नमः

ॐ कामनायै नमः
ॐ कामदायै नमः १३०
ॐ काम्यायै नमः
ॐ कमलायै नमः
ॐ कमलार्चितायै नमः
ॐ काश्मीरलिप्तवक्षोजायै नमः
ॐ काश्मीरद्रवचर्चितायै नमः
ॐ कनकायै नमः
ॐ कनकप्राणायै नमः
ॐ कनकाचलवासिन्यै नमः
ॐ कनकाभायै नमः
ॐ काननस्थायै नमः १४०
ॐ कामाख्यायै नमः
ॐ कनकप्रदायै नमः
ॐ कामपिठस्थितायै नमः
ॐ नित्यायै नमः
ॐ कामधामनिवासिन्यै नमः
ॐ कंबुकण्ठ्यै नमः
ॐ कराळाक्ष्यै नमः
ॐ किशोर्यै नमः
ॐ कलापिन्यै नमः
ॐ कलायै नमः १५०
ॐ काष्ठायै नमः
ॐ निमेषायै नमः
ॐ कालस्थायै नमः
ॐ कालरूपिण्यै नमः
ॐ कालज्ञायै नमः
ॐ कालमात्रे नमः

ॐ कालधात्र्यै नमः
ॐ कलावत्यै नमः
ॐ कलादायै नमः
ॐ कालघ्न्यै नमः १६०
ॐ कुल्यायै नमः
ॐ कुरुकुल्लायै नमः
ॐ कुलाङ्गनायै नमः
ॐ कीर्तिदायै नमः
ॐ कीर्तिघ्न्यै नमः
ॐ कीर्त्यै नमः
ॐ कीर्तिस्थायै नमः
ॐ कीर्तिवर्धन्यै नमः
ॐ कीर्तिज्ञायै नमः
ॐ कीर्तितपदायै नमः १७०
ॐ कृत्तिकायै नमः
ॐ केशवप्रियायै नमः
ॐ केशिघ्न्यै नमः
ॐ केळिकायै नमः
ॐ केशवानन्दकारिण्यै नमः
ॐ कुमुदाभायै नमः
ॐ कुमार्यै नमः
ॐ कर्मदायै नमः
ॐ कमलेक्षणायै नमः
ॐ कौमुद्यै नमः १८०
ॐ कुमुदानन्दायै नमः
ॐ कौलिन्यै नमः
ॐ कुमुद्वत्यै नमः
ॐ कोदण्डधारिण्यै नमः

ॐ क्रोधायै नमः
ॐ कूटस्थायै नमः
ॐ कोटराश्रयायै नमः
ॐ कालकण्ठ्यै नमः
ॐ कराळाङ्ग्यै नमः
ॐ कालाङ्ग्यै नमः १९०
ॐ कालभूषणायै नमः
ॐ कङ्काळ्यै नमः
ॐ कामदामायै नमः
ॐ कङ्काळकृतभूषणायै नमः
ॐ कपालकर्तृककरायै नमः
ॐ करंवीरस्वरूपिण्यै नमः
ॐ कपर्दिन्यै नमः
ॐ कोमलाङ्ग्यै नमः
ॐ कृपासिन्धवे नमः
ॐ कृपामय्यै नमः २००
ॐ कुशावत्यै नमः
ॐ कुण्डसंस्थायै नमः
ॐ कौबेर्यै नमः
ॐ कौशिक्यै नमः
ॐ काश्यप्यै नमः
ॐ कद्रुतनयायै नमः
ॐ कलिकल्मषनाशिन्यै नमः
ॐ कञ्जस्थायै नमः
ॐ कञ्जवदनायै नमः
ॐ कञ्जकिञ्जल्कचर्चितायै नमः २१०
ॐ कञ्जाभायै नमः

ॐ कञ्जमध्यस्थायै नमः
ॐ कञ्जनेत्रायै नमः
ॐ कचोद्भवायै नमः
ॐ कामरूपायै नमः
ॐ ह्रींकार्यै नमः
ॐ कश्यपान्वयवर्धिन्यै नमः
ॐ खर्वायै नमः
ॐ खञ्जनद्वन्द्वलोचनायै नमः
ॐ खर्ववाहिन्यै नमः २२०
ॐ खड्गिन्यै नमः
ॐ खड्गहस्तायै नमः
ॐ खेचर्यै नमः
ॐ खड्गरूपिण्यै नमः
ॐ खगस्थायै नमः
ॐ खगरूपायै नमः
ॐ खगगायै नमः
ॐ खगसम्भवायै नमः
ॐ खगधात्र्यै नमः
ॐ खगानन्दायै नमः २३०
ॐ खगयोनिस्वरूपिण्यै नमः
ॐ खगेश्यै नमः
ॐ खेटककरायै नमः
ॐ खगानन्दविवर्धिन्यै नमः
ॐ खगमान्यायै नमः
ॐ खगाधारायै नमः
ॐ खगगर्वविमोचन्यै नमः
ॐ गङ्गायै नमः

ॐ गोदावर्यै नमः
ॐ गीत्यै नमः
ॐ गायत्र्यै नमः
ॐ गगनालयायै नमः
ॐ गीर्वाणसुन्दर्यै नमः
ॐ गवे नमः
ॐ गाधायै नमः
ॐ गीर्वाणपूजितायै नमः
ॐ गीर्वाणचर्चितपदायै नमः
ॐ गान्धार्यै नमः
ॐ गोमत्यै नमः
ॐ गर्विण्यै नमः २५०
ॐ गर्वहन्त्र्यै नमः
ॐ गर्भस्थायै नमः
ॐ गर्भधारिण्यै नमः
ॐ गर्भदायै नमः
ॐ गर्भहन्त्र्यै नमः
ॐ गन्धर्वकुलपूजितायै नमः
ॐ गयायै नमः
ॐ गौर्यै नमः
ॐ गिरिजायै नमः
ॐ गिरिस्थायै नमः २६०
ॐ गिरिसम्भवायै नमः
ॐ गिरिगह्वरमध्यस्थायै नमः
ॐ कुञ्जरेश्वरगामिन्यै नमः
ॐ किरीटिन्यै नमः
ॐ गदिन्यै नमः

ॐ गुञ्जाहारविभूषणायै नमः
ॐ गणपायै नमः
ॐ गणकायै नमः
ॐ गण्यायै नमः
ॐ गणकानन्दकारिण्यै नमः २७०
ॐ गणपूज्यायै नमः
ॐ गीर्वाणायै नमः
ॐ गणपानन्दवर्धिन्यै नमः
ॐ गुरुमात्रे नमः
ॐ गुरुरतायै नमः
ॐ गुरुभक्तिपरायणायै नमः
ॐ गोत्रायै नमः
ॐ गवे नमः
ॐ कृष्णभगिन्यै नमः
ॐ कृष्णसुवे नमः २८०
ॐ कृष्णनन्दिन्यै नमः
ॐ गोवर्धन्यै नमः
ॐ गोत्रधरायै नमः
ॐ गोवर्धनकृतालयायै नमः
ॐ गोवर्धनधरायै नमः
ॐ गोदायै नमः
ॐ गौराङ्ग्यै नमः
ॐ गौतमात्मजायै नमः
ॐ घर्घरायै नमः
ॐ घोररूपायै नमः २९०
ॐ घोरायै नमः

ॐ घर्घरनादिन्यै नमः
ॐ श्यामायै नमः
ॐ घनरवायै नमः
ॐ अघोरायै नमः
ॐ घनायै नमः
ॐ घोरार्तिनाशिन्यै नमः
ॐ घनस्थायै नमः
ॐ घनानन्दायै नमः
ॐ दारिद्र्यघननाशिन्यै नमः ३००
ॐ चित्तज्ञायै नमः
ॐ चिन्तितपदायै नमः
ॐ चित्तस्थायै नमः
ॐ चित्तरूपिण्यै नमः
ॐ चक्रिण्यै नमः
ॐ चारुचम्पाभायै नमः
ॐ चारुचम्पकमालिन्यै नमः
ॐ चन्द्रिकायै नमः
ॐ चन्द्रकान्त्यै नमः
ॐ चापिन्यै नमः ३१०
ॐ चन्द्रशेखरायै नमः
ॐ चण्डिकायै नमः
ॐ चण्डदैत्यघ्न्यै नमः
ॐ चन्द्रशेखरवल्लभायै नमः
ॐ चाण्डालिन्यै नमः
ॐ चामुण्डायै नमः
ॐ चण्डमुण्डवधोद्यतायै नमः
ॐ चैतन्यभैरव्यै नमः
ॐ चण्डायै नमः
ॐ चैतन्यघनगेहिन्यै नमः ३२०
ॐ चित्स्वरूपायै नमः
ॐ चिदाधारायै नमः
ॐ चण्डवेगायै नमः
ॐ चिदालयायै नमः
ॐ चन्द्रमण्डलमध्यस्थायै नमः
ॐ चन्द्रकोटिसुशीतलायै नमः
ॐ चपलायै नमः
ॐ चन्द्रभगिन्यै नमः
ॐ चन्द्रकोटिनिभाननायै नमः
ॐ चिन्तामणिगुणाधारायै नमः ३३०
ॐ चिन्तामणिविभूषणायै नमः
ॐ भक्तचिन्तामणिलतायै नमः
ॐ चिन्तामणिकृतालयायै नमः
ॐ चारुचन्दनलिप्ताङ्ग्यै नमः
ॐ चतुरायै नमः
ॐ चतुर्मुख्यै नमः
ॐ चैतन्यदायै नमः
ॐ चिदानन्दायै नमः
ॐ चारुचामरवीजितायै नमः
ॐ छत्रदायै नमः ३४०
ॐ छत्रधार्यै नमः
ॐ छलच्छद्मविनाशिन्यै नमः
ॐ छत्रघ्न्यै नमः
ॐ छत्ररूपायै नमः
ॐ छत्रच्छायाकृतालयायै नमः
ॐ जगज्जीवायै नमः
ॐ जगद्धात्र्यै नमः
ॐ जगदानन्दकारिण्यै नमः
ॐ यज्ञप्रियायै नमः
ॐ यज्ञरतायै नमः ३५०
ॐ जपयज्ञपरायणायै नमः
ॐ जनन्यै नमः
ॐ जानक्यै नमः
ॐ यज्वने नमः
ॐ यज्ञघ्न्यै नमः
ॐ यज्ञनन्दिन्यै नमः
ॐ यज्ञदायै नमः
ॐ यज्ञफलदायै नमः
ॐ यज्ञस्थानकृतालयायै नमः
ॐ यज्ञभाक्त्र्यै नमः ३६०
ॐ यज्ञरूपायै नमः
ॐ यज्ञविघ्नविनाशिन्यै नमः
ॐ जपाकुसुमसङ्काशायै नमः
ॐ जपाकुसुमशोभितायै नमः
ॐ जालंधर्यै नमः
ॐ जयायै नमः
ॐ जैत्र्यै नमः
ॐ जीमूतचयभाषिण्यै नमः
ॐ जयदायै नमः
ॐ जयरूपायै नमः ३७०
ॐ जयस्थायै नमः

ॐ जयकारिण्यै नमः
ॐ जगदीशप्रियायै नमः
ॐ जीवायै नमः
ॐ जलस्थायै नमः
ॐ जलजेक्षणायै नमः
ॐ जलरूपायै नमः
ॐ जह्नुकन्यायै नमः
ॐ यमुनायै नमः
ॐ जलजोदर्यै नमः ३८०
ॐ जलजास्यायै नमः
ॐ जाह्नव्यै नमः
ॐ जलजाभायै नमः
ॐ जलोदर्यै नमः
ॐ यदुवंशोद्भवायै नमः
ॐ जीवायै नमः
ॐ यादवानन्दकारिण्यै नमः
ॐ जीवायै नमः
ॐ यादवानन्दकारिण्यै नमः
ॐ यशोदायै नमः
ॐ यशसांराशये नमः
ॐ यशोदानन्दकारिण्यै नमः ३९०
ॐ ज्वलिन्यै नमः
ॐ ज्वालिन्यै नमः
ॐ ज्वालायै नमः
ॐ ज्वलत्पावकसन्निभायै नमः
ॐ ज्वालामुख्यै नमः

ॐ जगन्मात्रे नमः
ॐ यमळार्जुनभञ्जन्यै नमः
ॐ जन्मदायै नमः
ॐ जन्मघ्न्यै नमः
ॐ जन्मायै नमः ४००
ॐ जन्मभुवे नमः
ॐ जनकात्मजायै नमः
ॐ जनानन्दायै नमः
ॐ जाम्बवत्यै नमः
ॐ जम्बूद्वीपकृतालयायै नमः
ॐ जाम्बूनदसमानाभायै नमः
ॐ जाम्बूनदविभूषणायै नमः
ॐ जम्भघ्न्यै नमः
ॐ जातिदायै नमः
ॐ जात्यै नमः ४१०
ॐ ज्ञानदायै नमः
ॐ ज्ञानगोचरायै नमः
ॐ ज्ञानघ्न्यै नमः
ॐ ज्ञानरूपायै नमः
ॐ ज्ञानविज्ञानशालिन्यै नमः
ॐ जिनजैत्र्यै नमः
ॐ जिनाधारायै नमः
ॐ जिनमात्रे नमः
ॐ जिनेश्वर्यै नमः
ॐ जितेन्द्रियायै नमः ४२०
ॐ जनाधारायै नमः
ॐ अजिनाम्बरधारिण्यै नमः

ॐ शम्भुकोटिदुराधर्षायै नमः
ॐ विष्णुकोटिविमर्दिन्यै नमः
ॐ समुद्रकोटिगम्भीरायै नमः
ॐ वायुकोटिमहाबलायै नमः
ॐ सूर्यकोटिप्रतीकाशायै नमः
ॐ यमकोटिदुरापघ्न्यै नमः
ॐ कामधुक्कोटिफलदायै नमः
ॐ शक्रकोटिसुराज्यदायै नमः ४३०
ॐ कन्दर्पकोटिलावण्यायै नमः
ॐ पद्मकोटिनिभाननायै नमः
ॐ पृथ्वीकोटिजनाधारायै नमः
ॐ अग्निकोटिभयङ्कर्यै नमः
ॐ अणिम्ने नमः
ॐ महिम्ने नमः
ॐ प्राप्त्यै नमः
ॐ गरिम्ने नमः
ॐ लघिम्ने नमः
ॐ प्राकाम्यदायै नमः ४४०
ॐ वशङ्कर्यै नमः
ॐ ईशिकायै नमः
ॐ सिद्धिदायै नमः
ॐ महिमादिगुणोपेतायै नमः
ॐ अणिमाद्यष्टसिद्धिदायै नमः
ॐ जवनघ्न्यै नमः
ॐ जनाधीनायै नमः
ॐ जामिन्यै नमः

ॐ जरापहायै नमः
ॐ तारिण्यै नमः ४५०
ॐ तारिकायै नमः
ॐ तारायै नमः
ॐ तोतलायै नमः
ॐ तुलसीप्रियायै नमः
ॐ तन्त्रिण्यै नमः
ॐ तन्त्ररूपायै नमः
ॐ तन्त्रज्ञायै नमः
ॐ तन्त्रधारिण्यै नमः
ॐ तारहारायै नमः
ॐ तुलजायै नमः ४६०
ॐ डाकिनीतन्त्रगोचरायै नमः
ॐ त्रिपुरायै नमः
ॐ त्रिदशायै नमः
ॐ त्रिस्थायै नमः
ॐ त्रिपुरासुरघातिन्यै नमः
ॐ त्रिगुणायै नमः
ॐ त्रिकोणस्थायै नमः
ॐ त्रिमात्रायै नमः
ॐ त्रितनुस्थितायै नमः
ॐ त्रैविद्यायै नमः ४७०
ॐ त्रय्यै नमः
ॐ त्रिघ्न्यै नमः
ॐ तुरीयायै नमः
ॐ त्रिपुरेश्वर्यै नमः
ॐ त्रिकोदरस्थायै नमः

ॐ त्रिविधायै नमः
ॐ त्रैलोक्यायै नमः
ॐ त्रिपुरात्मिकायै नमः
ॐ त्रिधाम्रे नमः
ॐ त्रिदशाराध्यायै नमः ४८०
ॐ त्र्यक्षायै नमः
ॐ त्रिपुरवासिन्यै नमः
ॐ त्रिवर्णायै नमः
ॐ त्रिपद्यै नमः
ॐ तारायै नमः
ॐ त्रिमूर्तिजनन्यै नमः
ॐ त्वरायै नमः
ॐ त्रिदिवायै नमः
ॐ त्रिदिवेशान्यै नमः
ॐ देव्यै नमः ४९०
ॐ त्रैलोक्यधारिण्यै नमः
ॐ त्रिमूर्त्यै नमः
ॐ त्रिजनन्यै नमः
ॐ त्रिभुवे नमः
ॐ त्रिपुरसुन्दर्यै नमः
ॐ तपस्विन्यै नमः
ॐ तपोनिष्ठायै नमः
ॐ तरुण्यै नमः
ॐताररूपिण्यै नमः
ॐ तामस्यै नमः
ॐ तापस्यै नमः
ॐ तापघ्न्यै नमः

ॐ तमोपहायै नमः
ॐ तरुणार्कप्रतीकाशायै नमः
ॐ तप्तकाञ्चनसन्निभायै नमः
ॐ उन्मादिन्यै नमः
ॐ तन्तुरूपायै नमः
ॐ त्रैलोक्यव्यापिन्यै नमः
ॐ ईश्वर्यै नमः
ॐ तार्किक्यै नमः ५१०
ॐ तर्कविद्यायै नमः
ॐ तापत्रयविनाशिन्यै नमः
ॐ त्रिपुष्करायै नमः
ॐ त्रिकालज्ञायै नमः
ॐ त्रिसन्ध्यायै नमः
ॐ त्रिलोचनायै नमः
ॐ त्रिवर्गायै नमः
ॐ त्रिवर्गस्थायै नमः
ॐ तपसस्सिद्धिदायिन्यै नमः
ॐ अधोक्षजायै नमः ५२०
ॐ अयोध्यायै नमः
ॐ अपर्णायै नमः
ॐ अवन्तिकायै नमः
ॐ कारिकायै नमः
ॐ तीर्थायै नमः
ॐ तीर्थायै नमः
ॐ तीर्थकर्यै नमः
ॐ दारिद्र्यदुःखदळिन्यै नमः
ॐ अदीनायै नमः

ॐ दीनवत्सलायै नमः ५३०
ॐ दिननाथप्रियायै नमः
ॐ दीर्घायै नमः
ॐ दयापूर्णायै नमः
ॐ दयात्मिकायै नमः
ॐ देवदानवसम्पूज्यायै नमः
ॐ देवानांप्रियकारिण्यै नमः
ॐ दक्षपुत्र्यै नमः
ॐ दक्षमात्रे नमः
ॐ दक्षयज्ञविनाशिन्यै नमः
ॐ देवसुवे नमः ५४०
ॐ दक्षिणायै नमः
ॐ दक्षायै नमः
ॐ दुर्गायै नमः
ॐ दुर्गतिनाशिन्यै नमः
ॐ देवकीगर्भसम्भूतायै नमः
ॐ दुर्गदैत्यविनाशिन्यै नमः
ॐ अट्टायै नमः
ॐ अट्टहासिन्यै नमः
ॐ दोलायै नमः
ॐ दोलाकर्माभिनन्दिन्यै नमः ५५०
ॐ देवक्यै नमः
ॐ देविकायै नमः
ॐ देव्यै नमः
ॐ दुरितघ्न्यै नमः
ॐ तटिते नमः

ॐ गण्डक्यै नमः
ॐ गल्लक्यै नमः
ॐ क्षिप्रायै नमः
ॐ द्वारायै नमः
ॐ द्वारवत्यै नमः ५६०
ॐ आनन्दोदधिमध्यस्थायै नमः
ॐ कटिसूत्रैरलङ्कृतायै नमः
ॐ घोराग्निदाहदमन्यै नमः
ॐ दुःखदस्वप्ननाशिन्यै नमः
ॐ श्रीमय्यै नमः
ॐ श्रीमत्यै नमः
ॐ श्रेष्ठायै नमः
ॐ श्रीकर्यै नमः
ॐ श्रीविभावन्यै नमः
ॐ श्रीदायै नमः ५७०
ॐ श्रीशायै नमः
ॐ श्रीनिवासायै नमः
ॐ श्रीमत्यै नमः
ॐ श्रियै नमः
ॐ मत्यै नमः
ॐ गतये नमः
ॐ धनदायै नमः
ॐ दामिन्यै नमः
ॐ दान्तायै नमः
ॐ धर्मदायै नमः ५८०
ॐ धनशालिन्यै नमः
ॐ दाडिमीपुष्पसङ्काशायै नमः

ॐ धनागारायै नमः
ॐ धनञ्जयायै नमः
ॐ धूम्राभायै नमः
ॐ धूम्रदैत्यघ्न्यै नमः
ॐ धवळायै नमः
ॐ धवळप्रियायै नमः
ॐ धूम्रवक्त्रायै नमः
ॐ धूम्रनेत्रायै नमः ५९०
ॐ धूम्रकेश्यै नमः
ॐ धूसरायै नमः
ॐ धरण्यै नमः
ॐ धैर्यायै नमः
ॐ धरायै नमः
ॐ धात्र्यै नमः
ॐ धैर्यदायै नमः
ॐ दमिन्यै नमः
ॐ धार्मिण्यै नमः ६००
ॐ धुरे नमः
ॐ दयायै नमः
ॐ दोग्ध्र्यै नमः
ॐ दुरासदायै नमः
ॐ नारायण्यै नमः
ॐ नारसिंह्यै नमः
ॐ नृसिंहहृदयालयायै नमः
ॐ नागिन्यै नमः
ॐ नागकन्यायै नमः
ॐ नागसुवे नमः ६१०

ॐ नागनायिकायै नमः
ॐ नानारत्नविचित्राङ्ग्यै नमः
ॐ नानाभरणमण्डितायै नमः
ॐ दुर्गस्थायै नमः
ॐ दुर्गरूपायै नमः
ॐ दुःखदुष्कृतनाशिन्यै नमः
ॐ ह्रीङ्कार्यै नमः
ॐ श्रीङ्कार्यै नमः
ॐ क्लेशनाशिन्यै नमः ६२०
ॐ हुङ्कार्यै नमः
ॐ नगात्मजायै नमः
ॐ नागर्यै नमः
ॐ नवीनायै नमः
ॐ नूतनप्रियायै नमः
ॐ नीरजास्यायै नमः
ॐ नीरदाभायै नमः
ॐ नवलावण्यसुन्दर्यै नमः
ॐ नीतिज्ञायै नमः
ॐ नीतिदायै नमः
ॐ नीत्यै नमः ६३०
ॐ निम्ननाभ्यै नमः
ॐ नगेश्वर्यै नमः
ॐ निष्ठायै नमः
ॐ नित्यायै नमः
ॐ निरातङ्कायै नमः
ॐ नागयज्ञोपवीतिन्यै नमः
ॐ निधिदायै नमः
ॐ निधिरूपायै नमः
ॐ निर्गुणायै नमः
ॐ नरवाहिन्यै नमः ६४०
ॐ नरमांसरतायै नमः
ॐ नार्यै नमः
ॐ नरमुण्डविभूषणायै नमः
ॐ निराधारायै नमः
ॐ निर्विकारायै नमः
ॐ नुत्यै नमः
ॐ निर्वाणसुन्दर्यै नमः
ॐ नरासृक्पानमत्तायै नमः
ॐ निर्वैरायै नमः
ॐ नागगामिन्यै नमः ६५०
ॐ परमायै नमः
ॐ प्रमितायै नमः
ॐ प्रज्ञायै नमः
ॐ पार्वत्यै नमः
ॐ पर्वतात्मजायै नमः
ॐ पर्वप्रियायै नमः
ॐ पर्वरतायै नमः
ॐ पर्वणे नमः
ॐ पावनपावन्यै नमः
ॐ परात्परतरायै नमः ६६०
ॐ पूर्वायै नमः
ॐ पश्चिमायै नमः
ॐ पापनाशिन्यै नमः
ॐ पशूनांपतिपत्न्यै नमः
ॐ पतिभक्तिपरायण्यै नमः
ॐ परेश्यै नमः
ॐ पारगायै नमः
ॐ परायै नमः
ॐ परंज्योतिस्स्वरूपिण्यै नमः
ॐ निष्ठुरायै नमः ६७०
ॐ क्रूरहृदयायै नमः
ॐ परासिद्ध्यै नमः
ॐ परागत्यै नमः
ॐ पशुघ्नयै नमः
ॐ पशुरूपायै नमः
ॐ पशुघ्न्यै नमः
ॐ पशुवाहिन्यै नमः
ॐ पित्रे नमः
ॐ मात्रे नमः
ॐ यन्त्र्यै नमः ६८०
ॐ पशुपाशविनाशिन्यै नमः
ॐ पद्मिन्यै नमः
ॐ पद्महस्तायै नमः
ॐ पद्मकिञ्जल्कवासिन्यै नमः
ॐ पद्मवक्त्रायै नमः
ॐ पद्माक्ष्यै नमः
ॐ पद्मस्थायै नमः
ॐ पद्मसम्भवायै नमः
ॐ पद्मास्यायै नमः
ॐ पञ्चम्यै नमः ६९०
ॐ पूर्णायै नमः

ॐ पूर्णपीठनिवासिन्यै नमः
ॐ पद्मरागप्रतीकाशायै नमः
ॐ पाञ्चाल्यै नमः
ॐ पञ्चमप्रियायै नमः
ॐ परब्रह्मस्वरूपायै नमः
ॐ परब्रह्मवासिन्यै नमः
ॐ परमानन्दमुदितायै नमः
ॐ परचक्रविनाशिन्यै नमः
ॐ परेश्यै नमः ७००
ॐ परमायै नमः
ॐ पृथ्व्यै नमः
ॐ पीनतुङ्गपयोधरायै नमः
ॐ परावरायै नमः
ॐ परायै नमः
ॐ विद्यायै नमः
ॐ परमानन्ददायिन्यै नमः
ॐ पूजायै नमः
ॐ प्रजावत्यै नमः
ॐ पुष्ट्यै नमः ७१०
ॐ पिनाकिपरिकीर्तितायै नमः
ॐ प्राणघ्न्यै नमः
ॐ प्राणदायै नमः
ॐ प्रियंवदायै नमः
ॐ फणिभूतायै नमः
ॐ फणावेश्यै नमः
ॐ फकाराकुण्ठमालिन्यै नमः

ॐ फणिराड्वृतसर्वांग्यै नमः
ॐ फलभागनिवासिन्यै नमः ७२०
ॐ बलभद्रस्यभगिन्यै नमः
ॐ बालायै नमः
ॐ बालप्रदायिन्यै नमः
ॐ फल्गुरूपायै नमः
ॐ प्रलम्बघ्न्यै नमः
ॐ फलगूत्सवविनोदिन्यै नमः
ॐ भवान्यै नमः
ॐ भवपत्न्यै नमः
ॐ भवभीतिहरायै नमः
ॐ भवायै नमः ७३०
ॐ भवेश्वर्यै नमः
ॐ भवाराध्यायै नमः
ॐ भवेश्यै नमः
ॐ भवदायिकायै नमः
ॐ भवमात्रे नमः
ॐ भवागम्यायै नमः
ॐ भवकण्टकनाशिन्यै नमः
ॐ भवप्रियायै नमः
ॐ भवानन्दायै नमः
ॐ भव्यायै नमः ७४०
ॐ भवमोचन्यै नमः
ॐ भावनीयायै नमः
ॐ भगवत्यै नमः

ॐ भवभारविनाशिन्यै नमः
ॐ भूतधात्र्यै नमः
ॐ भूतेश्यै नमः
ॐ भूतस्थायै नमः
ॐ भूतरूपिण्यै नमः
ॐ भूतमात्रे नमः
ॐ भूतघ्न्यै नमः
ॐ भूतपञ्चकवासिन्यै नमः
ॐ भोगोपचारकुशलायै नमः
ॐ भिस्साधात्र्यै नमः
ॐ भूचर्यै नमः
ॐ भीतिघ्न्यै नमः
ॐ भक्तिगम्यायै नमः
ॐ भक्तानामार्तिनाशिन्यै नमः
ॐ भक्तानुकम्पिन्यै नमः
ॐ भीमायै नमः
ॐ भगिन्यै नमः ७६०
ॐ भगनायिकायै नमः
ॐ भगविद्यायै नमः
ॐ भगक्लिन्नायै नमः
ॐ भगयोन्यै नमः
ॐ भगप्रदायै नमः
ॐ भगेश्यै नमः
ॐ भगरूपायै नमः
ॐ भगगुह्यायै नमः
ॐ भगापहायै नमः

ॐ भगोदर्यै नमः ७७०
ॐ भगानन्दायै नमः
ॐ भाग्यदायै नमः
ॐ भगमालिन्यै नमः
ॐ भोगप्रदायै नमः
ॐ भोगवाससे नमः
ॐ भोगमूलायै नमः
ॐ भोगिन्यै नमः
ॐ भेरुण्डायै नमः
ॐ भेदिन्यै नमः
ॐ भीमायै नमः ७८०
ॐ भद्रकाल्यै नमः
ॐ भिदोज्झितायै नमः
ॐ भैरव्यै नमः
ॐ भुवनेशान्यै नमः
ॐ भुवनायै नमः
ॐ भुवनेश्वर्यै नमः
ॐ भीमाक्ष्यै नमः
ॐ भारत्यै नमः
ॐ भैरवाष्टकसेवितायै नमः
ॐ भास्वरायै नमः ७९०
ॐ भास्वत्यै नमः
ॐ भीत्यै नमः
ॐ भास्वदुत्तानशालिन्यै नमः
ॐ भागीरथ्यै नमः
ॐ भोगवत्यै नमः

ॐ भवघ्न्यै नमः
ॐ भुवनात्मिकायै नमः
ॐ भूतिदायै नमः
ॐ भूतिरूपायै नमः
ॐ भूतस्थायै नमः ८००
ॐ भूतवर्धिन्यै नमः
ॐ माहेश्वर्यै नमः
ॐ महामायायै नमः
ॐ महातेजसे नमः
ॐ महासुर्यै नमः
ॐ महाजिह्वायै नमः
ॐ महालोलायै नमः
ॐ महदंष्ट्रायै नमः
ॐ महाभुजायै नमः
ॐ महामोहान्धकारघ्न्यै नमः ८१०
ॐ महामोक्षप्रदायिन्यै नमः
ॐ महादारिद्र्यशमन्यै नमः
ॐ महाशत्रुविमर्दिन्यै नमः
ॐ महाशक्त्यै नमः
ॐ महाज्योतिषे नमः
ॐ महासुरविमर्दिन्यै नमः
ॐ महाकायायै नमः
ॐ महावीर्यायै नमः
ॐ महापातकनाशिन्यै नमः
ॐ महारवायै नमः ८२०

ॐ मन्त्रमय्यै नमः
ॐ मणिपूरनिवासिन्यै नमः
ॐ मानस्यै नमः
ॐ मानदायै नमः
ॐ मान्यायै नमः
ॐ मनश्चक्षुरगोचरायै नमः
ॐ माहेन्द्यै नमः
ॐ मधुरायै नमः
ॐ मायायै नमः
ॐ महिषासुरमर्दिन्यै नमः ८३०
ॐ महाकुण्डलिन्यै नमः
ॐ शक्त्यै नमः
ॐ महविभववर्धिन्यै नमः
ॐ मानस्यै नमः
ॐ माधव्यै नमः
ॐ मेधायै नमः
ॐ मतिदायै नमः
ॐ मतिधारिण्यै नमः
ॐ मेनकागर्भसम्भूतायै नमः
ॐ मेनकाभगिन्यै नमः ८४०
ॐ मतये नमः
ॐ महोदर्यै नमः
ॐ मुक्तकेश्यै नमः
ॐ मुक्तिकाम्यार्थसिद्धिदायै नमः
ॐ माहेश्यै नमः
ॐ महिषारूढायै नमः

ॐ मधुदैत्यविमर्दिन्यै नमः
ॐ महाव्रतायै नमः
ॐ महामूर्धायै नमः
ॐ महाभयविनाशिन्यै नमः
ॐ मातङ्ग्यै नमः
ॐ मत्तमातङ्ग्यै नमः
ॐ मातङ्गकुलमण्डितायै नमः
ॐ महाघोरायै नमः
ॐ माननीयायै नमः
ॐ मत्तमातङ्गगामिन्यै नमः
ॐ मुक्ताहारलतोपेतायै नमः
ॐ मदघूर्णितलोचनायै नमः
ॐ महापराधराशिघ्न्यै नमः
ॐ महाचोरभयापहायै
नमः ८६०
ॐ महाचिन्त्यस्वरूपायै नमः
ॐ मणिमन्त्रमहौषध्यै नमः
ॐ मणिमण्डपमध्यस्थायै नमः
ॐ मणिमाला विरजितायै नमः
ॐ मन्त्रात्मिकायै नमः
ॐ मन्त्रगम्यायै नमः
ॐ मन्त्रमात्रे नमः
ॐ सुमन्त्रिण्यै नमः
ॐ मेरुमन्दिरसव्यस्थायै नमः
ॐ मकराकृतिकुण्डलायै नमः
ॐ मन्धरायै नमः
ॐ महासूक्ष्मायै नमः

ॐ महादूत्यै नमः
ॐ महेश्वर्यै नमः
ॐ मालिन्यै नमः
ॐ मानव्यै नमः
ॐ माध्व्यै नमः
ॐ मदरूपायै नमः
ॐ मदोत्कटायै नमः
ॐ मदिरायै नमः ८८०
ॐ मधुरायै नमः
ॐ मोदिन्यै नमः
ॐ महोद्धतायै नमः
ॐ मङ्गळाङ्ग्यै नमः
ॐ मधुमय्यै नमः
ॐ मधुपानपरायणायै नमः
ॐ मनोरमायै नमः
ॐ रमामात्रे नमः
ॐ राजराजेश्वर्यै नमः
ॐ रमायै नमः ८९०
ॐ राजमान्यायै नमः
ॐ राजपूज्यायै नमः
ॐ रक्तोत्पलविभूषणायै नमः
ॐ राजीवलोचनायै नमः
ॐ रामायै नमः
ॐ राधिकायै नमः
ॐ रामवल्लभायै नमः
ॐ शाकिन्यै नमः
ॐ डाकिन्यै नमः

ॐ लावण्याम्बुधिवीचिकायै
नमः ९००
ॐ रुद्राण्यै नमः
ॐ रुद्ररूपायै नमः
ॐ रौद्रायै नमः
ॐ रुद्रार्तिनाशिन्यै नमः
ॐ रक्तप्रियायै नमः
ॐ रक्तप्रियायै नमः
ॐ रक्तवस्त्रायै नमः
ॐ रक्ताक्ष्यै नमः
ॐ रक्तलोचनायै नमः
ॐ रक्तकेश्यै नमः
ॐ रक्तदंष्ट्रायै नमः ९१०
ॐ रक्तचन्दनचर्चितायै नमः
ॐ रक्ताङ्ग्यै नमः
ॐ रक्तभूषायै नमः
ॐ रक्तबीजनिपातिन्यै नमः
ॐ रागादिदोषरहितायै नमः
ॐ रतिजायै नमः
ॐ रतिदायिन्यै नमः
ॐ विश्वेश्वर्यै नमः
ॐ विशालाक्ष्यै नमः
ॐ विन्ध्यपीठनिवासिन्यै
नमः ९२०
ॐ विश्वभुवे नमः
ॐ वीरविद्यायै नमः
ॐ वीरसुवे नमः

ॐ वीरनन्दिन्यै नमः
ॐ वीरेश्वर्यै नमः
ॐ विशालाक्ष्यै नमः
ॐ विष्णुमायाविमोहिन्यै नमः
ॐ विद्याव्यै नमः
ॐ विष्णुरूपायै नमः
ॐ विशालनयनोत्पलायै नमः ९३०
ॐ विष्णुमात्रे नमः
ॐ विश्वात्मने नमः
ॐ विष्णुजायास्वरूपिण्यै नमः
ॐ ब्रह्मेश्यै नमः
ॐ ब्रह्मदायै नमः
ॐ ब्राह्मै नमः
ॐ ब्रह्माण्यै नमः
ॐ ब्रह्मरूपिण्यै नमः
ॐ ब्रह्मेश्यै नमः
ॐ द्वारकायै नमः ९४०
ॐ विश्ववन्द्यायै नमः
ॐ विश्वपाशविमोचन्यै नमः
ॐ विश्वासकारिण्यै नमः
ॐ विश्वायै नमः
ॐ विश्वशक्त्यै नमः
ॐ विचक्षणायै नमः
ॐ बाणचापधरायै नमः
ॐ वीरायै नमः
ॐ बिन्दुस्थायै नमः
ॐ बिन्दुमालिन्यै नमः ९५०
ॐ षट्चक्रभेदिन्यै नमः
ॐ षोढायै नमः
ॐ षोडशारनिवासिन्यै नमः
ॐ शितिकण्ठप्रियायै नमः
ॐ शान्तायै नमः
ॐ शाकिन्यै नमः
ॐ वातरूपिण्यै नमः
ॐ शाश्वत्यै नमः
ॐ शम्भुवनितायै नमः
ॐ शाम्भव्यै नमः ९६०
ॐ शिवरूपिण्यै नमः
ॐ शिवमात्रे नमः
ॐ शिवदायै नमः
ॐ शिवायै नमः
ॐ शिवहृदासनायै नमः
ॐ शुक्लाम्बरायै नमः
ॐ शीतलायै नमः
ॐ शीलायै नमः
ॐ शीलप्रदायिन्यै नमः
ॐ शिशुप्रियायै नमः ९७०
ॐ वैद्यविद्यायै नमः
ॐ सालग्राभशिलायै नमः
ॐ शुचये नमः
ॐ हरिप्रियायै नमः
ॐ हरमूर्त्यै नमः
ॐ हरिनेत्रकृतालयायै नमः
ॐ हरिवक्त्रोद्भवायै नमः
ॐ हालायै नमः
ॐ हरिवक्षस्स्थलस्थितायै नमः
ॐ क्षेमङ्कर्यै नमः ९८०
ॐ क्षित्यै नमः
ॐ क्षेत्रायै नमः
ॐ क्षुधितस्यप्रपूरण्यै नमः
ॐ वैश्यायै नमः
ॐ क्षत्रियायै नमः
ॐ शूद्रयै नमः
ॐ क्षत्रियाणाङ्कुलेश्वर्यै नमः
ॐ हरपत्न्यै नमः
ॐ हराराध्यायै नमः
ॐ हरसुवे नमः ९९०
ॐ हररूपिण्यै नमः
ॐ सर्वायै नमः
ॐ आनन्दमय्यै नमः
ॐ सिद्धये नमः
ॐ सर्वरक्षास्वरूपिण्यै नमः
ॐ सर्वदुष्टप्रशमन्यै नमः
ॐ सर्वेसितफलप्रदायै नमः
ॐ सर्वसिद्धेश्वराराध्यायै नमः
ॐ सर्वमङ्गळमङ्गळायै नमः १०००
ॐ श्री अन्नपूर्णेश्वर्यै नमः

श्री अन्नपूर्णासहस्रनामावळिः समाप्ता।।

## ३. श्रीमातङ्गी अङ्ग उपाङ्ग प्रत्यङ्ग भूता-खण्डः

### १. श्रीलघुश्यामा

**श्रीमतङ्गी अङ्ग भूता**

**अस्यश्री लघुश्यामा, श्रीमातङ्गी अङ्गभूता महामन्त्रस्य मदन ऋषिः नियुदगायत्रीछन्दः। देवी लघुश्यया देवता।**

**ऐं बीजं। स्वाहा शक्तिः।**

**क्लीं किंपुरूषाय..... नमः गुह्यौ। क्लीं पिशाच... नमः आधारे**

मन्त्र वर्णन्यासः

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः रों नमः हंसः** (दक्षबाहुमूले)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः नं नमः हंसः** (दक्षकूपरि)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मं नमः हंसः** (दक्षमणिबन्धे)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः उं नमः हंसः** (दक्षहस्ताङ्गुलि मूले)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः च्छिं नमः हंसः** (दक्षहस्ताङ्गुलयग्रे)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ष्टं नमः हंसः** (वामबाहुमूले)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः चां नमः हंसः** (वामकुपरि)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः डां नमः हंसः** (वाममणिबन्धे)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः लिं नमः हंसः** (वामहस्ताङ्गुलिमूले)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः मां नमः हंसः** (वामहस्ताङ्गुल्यग्रे)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः तं नमः हंसः** (दक्षपादमूले)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः गिं नमः हंसः** (दक्षणानुनि)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सं नमः हंसः** (दक्षगुल्फे)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः वँ नमः हंसः** (दक्षपाताङ्गुलिमूले)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः वं नमः हंसः** (दक्षपाताङ्गुलयग्रे)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः शं नमः हंसः** (वाम पादमूले)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः कं नमः हंसः** (वामजानुनि)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः रिं नमः हंसः** (वामगुल्फे)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः स्वां नमः हंसः** (वामपादाङ्गुलिमूले)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हां नमः हंसः** (वायपादाङ्गुल्यग्र)

**ध्यानम्**

**माणिक्याभरणान्वितां स्मितमुखीं निलोत्पलाम् वराम्।**
**रभ्यालक्षकलिप्त पादकमलां नेत्रत्रयोल्लासिनीम्।।**
**वीणावादनतत्परां सुरनुतां कीरच्छ दश्यामलाम्।**
**मातंगीं शशिशेखरामनु भजेत्तां बूल पूर्णान नाम्।।**

**पञ्चपूजा–**

**मनुः– ऐं नमः उच्छिष्ठ चाण्डालि मातङ्गि सर्ववशंकरिस्वाहा**

इति श्यामाङ्ग भूता लघुश्यामा

(अस्य पुरश्चरणम् एक लक्ष जपं। मधुक पुष्पैः समिद्भिर्वा दशांश होमः)

## *श्रीमातङ्गी अंगदेवता लघुश्यामा मन्त्रः*

**ऐं ममः २ उच्छिष्ट ३ चाण्डालि ४ मातंगि, ५ सर्वशंकरि, ६ स्वाहा** (विशत्यक्षरो मन्त्रः)

**अथ मन्त्रस्य। मदन ऋषिः। नियुदगायत्री छन्दः। देवी लघुश्यमा देवता।।**

**ऐं बीजं स्वाहा शक्तिः**

**ऐं रत्यायै नमः** मूर्ध्नि। **ह्रीं प्रीत्यै नमः** हृदि। **क्लीं मनोभवाये नमः** पादयोः **ऐं इच्छाशक्तयै नमः** मुखे।

**ऐं ज्ञानशक्तियै क्लीं क्रियाशक्तयै नमः** लिंगे।।

**क्रां द्रावण पाणाय नमः** शिरसिः। **द्रीं शोषणबाणायनमः** मुखे। **क्लीं तापनयाणाय नमः** हृदि। **ब्लूं मोहन बाणाय नमः** (गुह्यौ)।

**उन्मादनबाणायनमः** पादयोः। इति बाण न्यासः। ततः सख्या क्रमेण न्यासः।

**आं क्षां ब्राह्मीकन्यकायै नमः** मूर्ध्नि।

**ईं लां माहेश्वरीकन्यकायै नमः** वामांसे।

**ॐ हां कौमारीकन्यकायै नमः** दक्षिणांसे।

**ऋ सा वैष्णवीकन्यकायै नमः** नाभौ।

**लृं वां वाराहीकन्यकायै नमः** ककुदि।

**अः लां महालक्ष्मीकन्यकायै नमः** दक्षिणांसे।

**औं चां चामुण्डाकन्यकायै नमः** ककुदि।

**अः लां महालक्ष्मीकन्यकायै नमः** हृदि।

**सिद्धिन्यासः ऐं अणिमासिद्धिकन्यकायै नमः** ललाटे।

**ऐं महिमासिद्धिकन्यकायै नमः** भ्रूमध्ये।
**ऐं लघिमासिद्धिकन्यकायै नमः** कण्ठे।
**ऐं गरिमासिद्धिकन्यकायै नमः** हृदि।
**ऐं असितासिद्धिकन्याकायै नमः** नाभौ।
**ऐं वशितासिद्धिकन्यकायै नमः** आधारे।
**ऐं प्राकाम्यसिद्धिकन्यकायै नमः** लिंगे।
**ऐं प्राप्तिसिद्धिकन्यकायै नमः** मूर्ध्नि।

अप्सरो न्यासः **क्लीं ऊर्वश्यप्सरः कन्यकायैनमः** मूर्ध्नि। **क्लीं मेनकाप्सरः कन्यकायै नमः** ललाटे। **क्लीं पैनमः** दक्षिनेत्रे। **क्लीं घृताच्यप्सरः....नमः** वामनेत्रे।

**क्लीं पूंजिकस्थल्यप्सरः....नमः** वक्त्रे। **क्लीं सुकेश्यप्सरः.....नम,** दक्षकर्णे। **क्लीं मंजुघोषांप्सरः....नमः** वामकर्णे **क्लीं महारंगवत्यप्सरः....नमः** ककुदि।। **ततः अष्ट कन्यान्यासः क्लीं यक्ष कन्यकायैनमः** दक्षांसे। **क्लीं गन्धर्व...नमः** वामांसे। **क्लीं सिद्ध...नमः हृदि क्लीं नर...नमः** दक्षिणस्तनें। **क्लीं नाग...नमः** वामस्तने। **क्लीं विधाधर...नमः** जठरे।

## *लघुश्यामा (विंशत्यक्षरी मन्त्रः)*

चक्रं।। बिंदु, त्रिकोणं, पंचकोणं, वर्तुलं अष्टदलं, वर्तुलं षोडशदलं, एकरेवत्मकभूपुरं द्वारयुतं।।

पीठपूजा।। **मं मंडूकादि... नमः। नवपीठशक्तीः पूर्वाद्यष्टसु दिक्षु मध्ये दिक्षु च। सर्वध लघुव्यामायै नमः इति। योजयित्वा अर्चयेत्।। भूत्यै, उन्नत्यै, कांत्यै, कीर्त्यै, सृष्ट्यै, सन्ली, व्यष्टयै, उत्कृष्टयै, मध्ये ऋद्धये।।**

१. विकोणाग्रे। **देव्यग्रे ऐं रत्यै, दक्षिणे ह्रीं प्रीत्यै, वामे क्लीं मनोभवायै नमः।।**

२. त्रिकोणे। **देव्यग्रे। ऐं इच्छाशक्तयै, देवी दक्षिणे ह्रीं ज्ञानशक्तयै, वामे क्लीं क्रियाशकत्ये।।**

३. पंचकोणेष आग्नेयादि क्रमेण। **द्रां द्रावणबाणाय, द्रीं शोषणबाणाय, क्लीं तापनबाणाय, ब्लूं मोहन बाणाय सः उन्मादन बाणाय इति बाणान्।।**

४. पंचकोणाग्रे। **आग्नेयादि चतुर्दिक्षु मध्ये दिक्षु च हृदयादि षडंगानि।**

५. अष्टदले पूज्यपूजकयोरंतशलं प्राचीदिशां प्रकल्प्य प्राचीक्रमेण। **आं क्षां ब्राह्मी कन्यकायै, इतः परं सर्वअष्टमातृकानामाति कन्यकायै इति** योजयेत्। **ईं लां माहेश्वरी, ऊ हा कौमारीं ॠं सां वैष्णवीं, लुं वां वाराही, ऐशां इन्द्राणी, औं वां चामुण्डा, अः लां महालक्ष्मीं।।**

६. अष्टदलाग्रेषु तत्तत्समोपे। **ऐं अणिमासिद्धि कन्यकायै, ऐं महिमासिद्धि, ऐं लघिमासिद्धि। ऐं गरिमासिद्धि ईशितासिद्धि, ऐं वशितासिद्धि, ऐं प्राकाम्य सिद्धि, ऐं प्राप्तिसिद्धि।।**

७. षोडशदलेषु प्राचीक्रमेण। **क्लीं ऊर्वश्यप्सरः कन्यकायै, क्लीं मेनकाप्सरः, क्लीं रम्भाप्सरः, क्लीं क्लीं पूंजिकस्थल्यप्सरः, क्लीं सुकेश्यप्सरः, क्लीं मंजुघोषाप्सरः, क्लीं महारंगवत्यप्सरः, क्लीं यक्ष, क्लीं सिद्ध, क्लीं नर, क्लीं नाग, क्लीं विद्याधर, क्लीं किंपुरुष, क्लीं पिशांच, सर्वत्र कन्यकायै।** इति योजयेत्।

८. भूपुराभ्यन्तरे प्राच्यांदिशि द्वारे **गजाननायै योगिन्यै, सिंहमुख्यै, गृध्रास्यायै, काकतुडिकायै, उष्ट्रग्रीवायै, हयग्रीवायै, वाराह्यै, शवभाननायै, उलूकिकयै, शिवारवायै, मयूयै, विकटाननायै, अष्टवक्रायै, कोटराक्ष्यै कुष्टिजिकायै, विकटलोचनायै, इति षोडश शक्तीः।**

९. तो दक्षिण द्वारे। **शुष्कोदर्यै, ललज्जिह्वायै, अश्वदंष्ट्रायै, वानराननायै, ऋक्षाक्ष्यै, केकराक्ष्यै, सुराप्रियायै, कपालहस्तायै, रक्ताक्ष्यै, शुक्यै, इयेन्यै, कपोतिकायै, पाशहस्तायै, दण्डहस्तायै, प्रचण्डायै।** इति षोडशशक्तीः।।

१०. पश्चिम द्वारे। **चण्डविक्रमायै, शिशुघ्न्यै, पापहंत्र्यै, काल्यै, रुधिरपायिन्यै, वसाधयायै, वसाधयायै गर्भभक्षा, शवहस्तायै, अन्त्रमालिन्यै, स्थूलकेश्यै, बृहत्कुक्ष्यै, सर्पास्यायै, प्रेतवाहिन्यै, दन्दशूककरायै, क्रौंच्यै, मृगशीर्षाये अन्त्रमलिन्यै।** इति षोडशशान्ती।।

११. उत्तरद्वारे। **वृषाननायै, वृत्तास्यायै, घूमनिश्वासायै, व्यौमैक चरणायै ऊर्ध्वध्यै, तापिन्यै, शोषिण्यै, उत्तरद्वारायै स्थूलनाजिकायै विघुत्प्रभायै, बलाकास्यायै, मार्जाशयै, कटपूतनायै, अट्टाट्टहासायै, दृष्टर्य कोटरायै षोडशशक्तीः। सर्वत्र योगिनीपदं अन्ते योजयेत्।।**

१२. भूपुराभ्यन्तरे। **आग्नेये बं बटुकाय। नैऋते गं गणपतये। वायव्ये क्षं क्षेत्रपलाय, ईशाने दुं दुर्गायै।**

भूपुराद्वहिः इन्द्रादि **दशदिक्पालाः।**

**तेषां आयुधानि।**

तद्वहिः पूर्वादिदिक्षु। तत्तत्संज्ञावाद्येभ्यो, विततवाद्याय, घनवाद्याय, सुषिराभिधवाध्यायनम्ः।।

## *२. वाग्वादिनी*

### श्रीमातङ्गी उपाङ्ग भूता देवताः

अस्य श्री वाग्वादिनी महामन्त्रस्य। कण्व ऋषिः विराटछन्दः श्रीमातङ्गी उपाङ्ग देवता वाग्वादिनी देवता।

| | |
|---|---|
| **ॐ वं नमः** (शिरसि) | **ॐ दं नमः** (दक्षाश्रवणे) |
| **ॐ वं नमः** (वामश्रवणे) | **ॐ दं नमः** (दक्षनेत्रे) |

**ॐ वां नमः** (वामनेत्रे) **ॐ ग्वाम् नमः** (दक्षनासफुटे)
**ॐ दि नमः** (वामनासफटे) **ॐ नि नमः** (वदने)
**ॐ स्वाम् नमः** (लिंगे) **ॐ हां नमः** (गुदे)
**ॐ आं इत्येकाक्षरेण षडंगन्यासः–**

ध्यानम्

**ॐ तरूण शकलमिंदो विभ्रती शुभ्रकांति,**
**कुचभरनमितांगी सन्निषण्णा सिताब्जे।**
**निज कर कमलोद्यल्लेखिनी पुस्तक श्रीः**
**सकलविभवसिध्यै पातु वाग्देवता नः।।**

पञ्चपूजा—

**मन्त्रः– वद वद वाग्वादिनी स्वाहा** – पुनश्चरणं – दक्षलक्षजपम्

## *वाग्वादिनी त्रयोदशाक्षर मन्त्रः*

**अस्यश्री** वाग्वादिनी महामन्त्रस्य। **श्री दक्षिणामूर्त्ति ऋषिः। पंक्तिः छन्दः। श्री बाग्वादिनी देवता ऐं बीजं। सौः शक्तिः क्लीं क्लीलकं।**

बालाया-षङ्गन्यास-करन्यासः हृदयन्यासाः कृत्वा।

ध्यानम्

**पुस्तकजपवटहस्तेः वरदाभय चिह्न चारुबाहुल ते।**
**कर्पूरामलदेवी वागीश्वरि शोधयाशु मम चेतः।।**

पञ्चपूजा

**मनुः– ऐं क्लीं सौः वदवदवाग्वादिनि स्वाहा।**

## *हंसवागीश्वरी मन्त्रः*

अस्य हंसवागीश्वरी महामन्त्रस्य। कण्व ऋषिः त्रिष्टुप् छन्दः। हंसवागीश्वरी देवता।

**ऐं बीजं। ह्रीं शक्तिः। ब्रह्म बीजं। माया शक्तिः जीवो बीजं। बुद्धिः शक्तिः। उदानो बीजं। कुण्डलिनी शक्तिः। ॐ ह्री** (शिरसी) **ऐं सौः** (कर्णरंध्रयोः) **ॐ सं** (नेत्रयोः) **ॐ रं स्वं** (नासारन्ध्रयोः) **त्यै** (मुखे) **नं** (लिंगे)**मंः** (गुदे)।

**ह्रीं ह्रीं** इत्यादि षङ्गन्यस-करन्यास हृदयन्यासाः कृत्वा

ध्यानम्

**वाणीं पूर्ण निशाकरोज्जवलमुखीं कर्पूर कुंदप्ाभाम्**
**चन्द्रार्धाङ्कितमस्तकां निजकरैः संबिभ्रतीमादरात्।**
**वीणां मक्षगुणं सधाढ्यकलशँ विद्यां च कुभस्तनीम्**
**दिव्यैराभरणै विभूषिततनूंह सांधि रूढां भजे।**

पञ्चपूजा—

**मनुः– ॐ ह्रीं ऐं सौः ॐ सरस्वत्यै नमः** (एकादशाक्षरः) पुरश्चरणम्-द्वादलशां। सिताम्बुजपुष्पै द्वादश सहस्त्रं होमः अथवा नाग चमम्पक पुष्पैः।

## *३. नकुली वागीश्वरी*

### श्री मातङ्गी प्रत्यंग देवता

**अस्यश्री नकुलीवागीश्वरी श्री मातीङ्गीश्वरी प्रत्यंग देवता महामन्त्रस्य कोहलक ऋषिः। गायत्री छन्दः। श्री नकुली वागीस्वौःरी देवता।**

**ऐं बीजं। स्वौः शक्तिः। क्लीं कीलकंम।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौ ॐ सें क्ली सौः**-अंगुष्टाभ्याम नमः
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौ ॐ ओष्टापिधानानकुली**-तर्जनिभ्याम् नमः
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौ ॐ दन्तैः परिवृता पविः**-मध्यमाभ्याम् नमः
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौ ॐ सरस्वत्येवाचईशाना**-अनामिकाभ्याम् नमः
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौ ॐ चारू मामिह वादयेत**-कनिष्टिकाभ्याम् नमः
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौ ॐ सौ क्लीं ऐं** करतलपृष्टाभ्याम् नमः

एवं हृदयादिन्यासः

ध्यानम्

**नकुली वज्रदन्तालि स्साऽय जिह्वापि दशनी।**
**भक्तानां हृदयाभ्भोजे भावनीया सरस्वती।**

पञ्चपूजा

**मनुः–ऐं क्लीं सौः ओष्टापिधाना नकुलीदन्तैः परिवृता पविः।**
**सरस्वत्येव चेशाना चारूमामिह वादयेत् सौ क्लीं ऐं।**

## श्रीनकुली वागीश्वरी भेदाः

(श्यामा प्रत्यङ्गभूता)

**अस्य श्री नकुली विद्या महाभन्त्रस्य कोहल ऋषिः** (ब्रह्मऋषि: पाठ भेद:-प्रपञ्चसार संग्रह) **गायत्री छेन्दः श्री नकुली वाणीश्वरी देवता। ऐं बीजं। सौः शक्तिः क्लीं कीलकम्।**

### न्यासः

| | करन्यास: | हृदयन्यास: |
|---|---|---|
| **ऐं क्ली सौः** | **अंगुष्ठाभ्याम् नमः** | **हृदयन्यासः** |
| **ओष्टापिधना नकुली** | **तर्जनीभ्याम् नमः** | **शिरसै स्वाहा।** |
| **दन्तै परिवृतापविः** | **मध्यमाभ्याम् नमः** | **शिखायै वषट्।** |
| **सरस्वत्येवाच ईशाना** | **अनामिकाभ्याम् नमः** | **कवचाय हुम्।** |
| **चारूमामि ह वादयेत्** | **कनिष्टिकाभ्यम् नमः** | **नेत्रत्रयाय वौषट्** |
| **सौः क्लीं ऐं** | **करतलपुष्ठाभ्याम नमः** | **अस्त्राय फट** |

**भूर्भोस्वरोम्** इति दिग्बन्ध:

ध्यानम्

**नकुली वज्रदन्तालि साध्याजिताऽहि दंशिनी।**
**भत्क वक्त्रत्व जननी भावनीया सरस्वती।**
**विकास भाजि हृत्पझे स्थितां उल्लार दायिनीं**
**परवाक् स्तम्भिनीं नित्यां स्मरामि नकुलीं सदा।**
**ओष्ठाभ्यां पिहितैः च पंक्ति निशितैः दन्तैः घवः संवृतां**
**तीक्ष्ण वज्रवद् अत्र सर्वजगतांया वामिनी सन्तत।**
**सामा चारू करोतु वाद निपुणं सर्व सा वाग्रसा योन**
**स्यामहं एव सर्वजगतां ऊत्यर्थं अग्रसरः।।**
**लाक्ष्र्यारूढा महित ललितं तालुजन्मा विशंकी**
**चञ्चद वीणा कलर व शुकी चक्र शङ्खासि पाणिः।**
**राजोत्रुसां मनसि नकुली राजतु श्यामला या प्रत्यङ्गवं परिगतवति प्रत्यहं मामकीने।।**

पञ्चपूजा

मनुः- **ॐ आष्ठापिधावा नकली दन्तैः परिवृता सर्वस्यै वाच ईशाना चारू मामिह वादयेत्।**

# ४. श्रीवाराही अङ्ग उपाङ्ग प्रत्यङ्ग भूता-खण्डः

## १. लघुवार्ताली

(श्रीवाराही अङ्ग भूता)

ध्यानम्

**दम्ष्ट्री ज्ज्वल वराहस्या रक्तवस्त्रोत्तरीयकां।**
**शूल कपाल मुसलं नागं हस्तैस्तु बिभ्रतीं।।**
**इन्दु रेखा लसन्मौली वाराही नमहं भजे।।**
**महार्णवे निपतिता मुद्धरन्तीं वसुन्धरां**
**महादष्ट्र महाकाया नमाम्युन्मत्त भैरवीं।।**
**मन्त्रः लृं वाराही उन्मत्त भैरवी पादकाभ्या नमः।**

(अन्य विषय हमें उपलब्ध नहीं है)

## २. स्वप्नवाराही

(श्रीवाराही उपाङ्ग भूता)

अस्य श्री स्वप्नवाराही मन्त्रस्य। ईश्वरऋषिः। जगती छन्दः।
**स्वप्नवाराही देवता। ॐ बीजं। ह्रीं शक्तिः। ठः ठः कीलकं ममाभीष्ट स्वप्नकथानार्थ जपेविनियोगः।**

| | करन्यासः | हृदयन्यासः |
|---|---|---|
| **ॐ ह्रीं** | **अङ्गुष्ठाभ्यां नमः** | **हृदयाय नमः** |
| **नमो वाराही** | **तर्जनीभ्याम्यां नमः** | **शिरसे स्वाहा** |
| **घोरे** | **मध्यमाभ्यां नमः** | **शिखायै वषट्** |
| **स्वप्नं** | **अनामिकाभ्यां नमः** | **कवचाय हुम्** |
| **ठः ठः** | **कनिष्ठिकाभ्यां नमः** | **नेत्रत्रयाय वोष्ट्** |
| **स्वाहा** | **करतलकरपृष्ठाभ्यां नमः** | **अस्त्रायफट्** |

**भूर्भुवसुवरोम्** इतिदिग्बन्ध।

ध्यानम्

**ॐ मेघश्यामरूचि मनोहरकुचां नत्रत्र्योद्भासितां।**
**लोकास्यां शशिशेखर मचलया दंष्ट्रातले शोभितां।।**

विभ्राणां स्वकरांबुज रसिलतां चार्मासिपाशं सुणिं।
वाराही मनुचिंतयेद भयवरा रूढां शुभालंकृतिम्।। (पञ्चपूजा)
मनुः ॐ ह्रीं नमोवाराही घोरे स्वप्नं ठः ठः स्वाहा।

## फलश्रुतिः

चतुवर्षं पठेद्यस्तु स्वमसिद्धितो भवेत्।
स्वप्नसिद्धा चतुर्वर्षात्तस्य स्वप्ने सदा स्थिता।।
चतुवर्षस्य पठिन चतुर्वेदा धिपो भवेत्।
तद्ध स्तजल संयोगान् मूर्खः काव्यं करोति च।।
तस्य वाक्यपरिचायन् मूर्ति विन्दति काव्यताम्।
मस्तके तु करं कृत्वा वद वाणीमिति ब्रुवन्।।
साधको वांछया कुर्यात्त त्तथैव भविष्मति।
ब्रह्माण्ड गोलके याश्च या काश्चिज्जगतीतले।
समस्ता सिद्धयो देवी करामलकवर सदा।।
साधक स्मृतिमात्रेण षावंत्यः सति सिद्धयः।
स्वयमायांति पुरतो जपादीनां तु का कथा।।
विदेशवर्तिनो भूत्वा वर्तते चेटक इव।।
अमायां चन्द्र सर्वदर्शश्चन्द्रग्रहण मेव च।
अष्टाभ्यां पूर्णचन्द्रत्वं चन्द्र सूर्यष्टिकं तथा।
अष्टदिक्षु तथाष्टौ च करोत्येव महेश्वरी।
अणिमा खेचरत्वं च चराचर पुरीगतम्।
पादुका खङ्गवेताल यक्षिणी गुह्यकाद्यः - इति जगत्कृस्त्रम् वासुदेवमयम्

## ३. श्रीतिरस्करिणी

(श्री वाराही प्रत्यंग भूता)

ॐ अस्यश्री तिरस्करिणी महामन्त्रस्य।
अध्श्यचर ऋषये नमः (शिरसि)
उष्णिक् छन्दसे नमः (मुखे)

**तिरस्करिण्यै नमः** (हृदये)

**ह्रां बीजाम नमः** (गुह्ये)

**ह्रीं शक्ये नमः** (पादयोः)

**हुं कीलकाय नमः** (नाभौ)

**तिरस्करिणी प्रसाद सिद्धयर्थे जपे विनियोगः**

| षड्ङ्गन्यास | करन्यासः | हृदयन्यासः |
|---|---|---|
| **ह्राँ** | **अंगुष्ठाभ्याम नमः** | **हृदयाय नमः** |
| **ह्रीं** | **तर्जनीभ्याम् नमः** | **शिरवायै वषट्** |
| **ह्रैं** | **अनामिकाभ्याम नमः** | **कवचाय हुँ** |
| **ह्रौं** | **कनिष्ठिकाभ्याम् नमः** | **नेत्रत्रयाय दौषट्ु हुँ** |
| **ह्रः** | **करतलपृष्ठाभ्याम नमः** | **अस्त्राय फट** |

**ॐ भूर्भुवस्वरोम् इति दिगबन्धः**

ध्यानम्

**नीलं तुरंग मधि रूह्य विराजमाना।**
**नीलां शुका भरण माल्य विलोपनाढयां।।**
**निद्रा पटेन भुबनानि तिरोधाना खड्ङ्गायुधा।**
**भगवती परिपातु भक्तान्**

लमादि पञ्चपूजा

मूल मन्त्रः **ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौं ॐ नमो भगवती तिरस्करिणिके त्रैलोक्य मोहिनि महामाये पशुजन मन श्चक्षु श्रोत्र तिरस्करणं कुरू कुरू स्वाहा।**

**सोः क्लीं ऐं श्री ह्रीं ऐं।।**

**पुनः न्यासम् एवं पूजांच कृत्वा-समर्पयेद**

*संपादकीय नोट*— महाराष्ट्र के काशी, दशाश्वमेध घाट निवासी ब्रह्मलीन श्री कृष्णचन्द्र पाठक कारखेडकर महराज के हस्तलिपि कापी जो २०० सौ वर्ष पुरानी थी उनके पौत्र एवं श्री कृष्णचन्द्र लक्ष्मीनाथ पाठक कारखेडकर के पुत्र एवं मेरे शिष्य श्री लक्ष्मीनाथ भोलानाथ श्रीपाद पाठक कारखेडकर की सौजन्यः से प्राप्त-उन्हें आशीर्वाद प्रदान कर रहा हूँ।)

अस्य श्री तिरस्करणी महामन्त्रस्य ब्रह्मऋषि (प्रजापति ऋषि पाठ भेदः-प्रपञ्चसरसंग्रह) गायत्रछन्दः (महची चन्दः पाठ भेदः प्रपंञ्चसाट संग्रह) तिरस्करणी देवता-मूलमन्त्रक्रमेण करन्यासः हृदयन्यासः

ध्यानम्

नीलवाजि समारूढा नीलङ्गी खड्ग धारिणी।
निद्रा निमीलद् भुतना तिरस्करिणिकाऽवतु।।१।।
नीलातुरङ्गमधिरूह्य विराज माना। नालांशुका भरण माल्य विलेपनाऽया।।
निद्रापैटन भुवना तिरोदधाना। खड्गायुधा भगवती परिपातु सा नः।।२।।
मुरककेशीं विसनां सर्वाभरण भूषिता। स्वयोनि दर्शनोन्मुह्यात् पशुवगा नमाम्यहं ।।३।।

मनुः- ऐं नमो भगवति तिरस्करिणि महामाये पशु जन मनच्चक्षुः तिरस्करणं कुरु कुरु हुं पट स्वाहा।

मन्त्र भेदाः

ॐ ऐं क्लीं ह्रीं श्रीं तिरस्करणि सकल जन ऐं सकल पशु जन मन श्चक्षुः श्रोत्र जिह्वा घ्राणं तिरस्करणं कुरु कुरु ठः ठः स्वाहा।

२ ॐ ऐं ह्रीं श्रीं क्लीं भगवति (स्वाहा) माहेश्वरी सर्व पशु जम मन श्चक्षुः तिरस्करणं कुरु कुरु स्वाहा।

३ ॐ ऐं ह्रीं श्रीं हसौ हसौ ॐ नमो भगवति श्री माहेश्वरी सर्व पशु जन मनश्चक्षुः तिरस्करणं कुरू कुरू स्वाहा।

## ५. श्री स्वर्णाकर्षण भैरव खण्डः

### *स्वर्णाकर्षण यंत्रः*



ॐ ब्रह्मणे ऋषये नमः शिरसि। ॐ पंक्तये चन्दसे नमः मुखं। ॐ श्री स्वर्णाकर्षण भैरबाय देवतायै नमः हृदि ॐ ह्रीं बीजाय नमः गुह्ये। ॐ सः ॐ सः शक्तये नमः पादयोः।।

स्वर्णाकर्षण भैरव मनुः

ॐ ऐं क्लीं ऐं ह्रीं ह्रीं ह्रीं सः वं

१. आपदुद्धारणाय लोकेश्वराय स्वर्णाकर्षण भैरवाय ॐ नम दारिद्रय विद्वेषणाय सः वं श्री भैरवाय नमः

स्वणाकर्षण भैरवी मनुः–

२. ॐ श्रीं क्लीं ॐ नमो भगवते स्वर्णाकर्षण भैरवाय प्रणताभीष्ट परिपूर्णय एह्येहि करूणा निधये मह्यं हिरण्यं द्रावय द्रावय शीघ्रं द्रावय द्रावय श्री ह्रीं क्लीं स्वाहा।।

## *स्वर्णाकर्षण मंत्रः*

ॐ ऐं क्लां क्लूं हां हीं ह्रें सः वं आपदुद्धारणाय अजामल बद्धाय लोकेश्वराय स्वर्णाकर्षणभैरवाय मम दारिद्र्यविद्वेषणाय ॐ श्री महाभैरवाय नमः।।५८।।

विनियोगः।। ॐ अस्य श्री स्वर्णाकर्षणभैरवमंत्रस्य ब्रह्मा ऋषिः।। पंक्तिश्छन्दः।। स्वर्णाकर्षणभैरवो देवता।। ह्रीं श्रीं सः शक्तिः ममाभीष्ट सिद्ध्यर्थे जपे विनियोगः।

न्यास:

ॐ क्लाँ हाँ अंगुष्ठाभ्यां नमः।। हृदयाय नमः।।

ॐ क्लीं हीं तर्जनीभ्यां नमः।। शिरसे स्वाहा।।

ॐ क्लूं हूँ मध्यमाभ्यां नमः।। शिखायै वषट्।।

ॐ क्लैं हैं अनामिकाभ्यां नमः।। कवचाय हुम्।।

ॐ क्लौं हौं कनिष्ठिकाभ्यां नमः।। नेत्रत्रयाय वौषट्।।

ॐ क्लः हः करतलकरपृष्ठाभ्यां नमः।। अस्त्रायफट्।।

ॐ भूर्भुविः सुवरोम् इति दिग्बन्धे।

ध्यानम्

पारिजातद्रुकान्तारे स्थिते माणिक्यपर्वते सिंहासनगतं ध्यायेत् भैरवं स्वर्णदायिनम्।।१।।
गांगेयपात्रं डमरुं त्रिशूलं वरं करैः संदधतं त्रिनेत्रम् देव्या युतं तप्तसुवर्णवर्णं स्वर्णाकृषं भैरवमाश्रयामः।।२।।

।। इति मन्त्रमहोदधौ ।।

## स्वर्णाकर्षणपूजापद्धतिः

**श्री गणेशायनमः।।सरस्वत्यैनमः।। गुरवे नमः**

शिव उवाच:

**प्रातरुत्थाय देविशि गुरुस्मरण पूर्वकम्।**

**अजपाजपसंकल्प्य स्नानसन्ध्यादितर्पणम्।।१।।**

**कृत्वा पूर्ण बिधानेन पूजामण्डपमाविश्य द्वारपूजां समाचरेत्। दक्षिणे गं गणपतये नमः।। दुं दुर्गायै नमः।। वामे वं वटुकाय नमः।।**

**क्षें क्षेत्रपालाय नमः।। द्वारोपरि सं सरस्वत्यै नमः।।** ततोवामांगसंकोचनपूर्वकं मण्डपे प्रविश्य सिद्धासने पद्मासने वा उपविश्य-आसन यंत्रोपरि आसनं संपूज्य कर संपुटं कृत्वा—

**सूर्यः सोमो यमः कालो महाभूतानि पंचमः।**

**एतं शुभाशुभस्येह कर्मणां नवसाक्षिणः।।१।।**

एतान् नमस्कृत्य संक्षिप्तभूतशुद्धिं च कुर्यात् **ॐ भूतश्रृंगारात् शिरः सुषुम्नापथेन जीवशिवं परम शिव पदे योजयामि स्वाहा।।१।।**

**ॐ यं लिङ्ग शरीरं शोषय स्वाहा।।२।।**

**ॐ रं संकोचशरीरं दह दह स्वाहा।।३।।**

**ॐ परमशिव सुषुम्नापथेन मूल श्रृंगारम्।**

**उल्लस उल्लस ज्वल ज्वल प्रज्वल प्रज्वल सोऽहं हंसः स्वाहा।।४।।**

तदनन्तरं प्राण प्रतिष्ठां कृत्वा मातृका न्यासान् विधाय पुनर्मूलमंत्रन्यासं कृत्वा पूजनं ुर्यात्। स्ववामभागे त्रिकोणं पट्कोणं वृत्तं चतुस्र मण्डपं विधाय गन्धाक्षतपुष्पैः संपूज्य आचम्य प्राणानायम्य पीठपूजनंकुयोत्।। **मं मंडूकाय नमः।। कां कालाग्निरुद्राय नमः।। आं आधार शक्त्य नमः। एवं पर तत्त्वान्तं संपूज्य। ॐ वामायै नमः। ॐ ज्वेष्ठायैनमः। ॐ रौद्र्यैनमः। ॐ काल्यैनमः।ॐ कलविकरण्यैनमः। ॐ वलविकरण्यैनमः। ॐ वक्तप्रमथिन्यै नमः। ॐ सर्वभूत दमन्यैनमः। ॐ मनोन्मन्यैनमः। ॐ भगवते स्वर्णाकर्षण भैरव योगपीठात्मने नमः।**

ध्यानम्

**पारिजातद्रुकान्तारे स्थिते माणिक्यमण्डपे। सिंहासनगतं ध्यायेत् भैरवं स्वर्णदायिनम्।। गांगेयपात्र जमरुं त्रिशूलं वरं करैः संदधतं त्रिनेत्रम्। देव्यायुतं तप्तसुवर्णवर्णं स्वर्णआकृषं भैरवमाश्रयामः।।**

इति ध्यात्वा पूजयेत्।

मूलमंत्रं समुच्चार्ये पुनः पौराणिकं पठेत् स्वात्मसंस्थमजं शुद्धं त्वामहं परमेश्व।।१।।
अरण्यामिव हव्याशं यन्त्रे चावाह्याम्यहम् विश्वात्मने नमस्तुभ्यं स्वर्णआकर्षण भैरव।।२।।
रत्नसिंहासनं चारु प्रीत्यर्थे प्रतिगृह्यताम् यस्य दर्शनमिच्छन्ति देवाः स्वाभीष्टसिद्धये।।३।।
तस्माद्धि परमेशाय स्वागतं स्वागतं च ते यद्भक्तिलेशसंपर्कात् परमानन्द संभव।।४।।
तस्माच्च परमेशाय पाद्यं ते कल्पयाम्यहम्। तापत्रय हरं दिव्यं परमानन्द लक्षणम्।।५।।
तापत्रयविनिर्मुक्तो तवार्ध्यं कल्पयाम्यहम्। परमानन्दबोधाब्धि निमग्ननिजमूर्तये।।६।।
सांगोपांगमिदस्नानं कल्पयामि प्रसीद मे। स्नानादिकं विधायाशु यतः शुद्धिरवाप्यते।।७।।
एतदाचमनीयं ते श्रीभैरव नमोनमः मया चित्रपेटं शुद्धं पवित्रं सुमनोहरम्।।८।।
अर्पितं परिधानाय देव ते कल्पयाम्यहम् यमाश्रित्य महामाया जगत संमोह्यते सदा।।९।।
तस्मैते परमेशाय कल्पयाम्युपवीतकम् परमानन्द सौरभ्यं परिपूर्ण दिगन्तर।।१०।।
गृहाण परमं गन्धं कृपया परमेश्वर अक्षताः परमादिव्याः ह्याति शुभ्राः मनोहराः।।११।।
भक्त्या समर्पयामि ते सर्व सिद्धिप्रयच्छ मे तुरीय पवन संभूतं नाना गुण मनोहरम्।।१२।।
आनन्द सौरभ पुष्पं गृहाण परमेश्वर दशांगे गुग्गुलंधूपं सुगन्धिं सुमनोहरम्।।१३।।
श्री भैरव नमस्तुभ्यं धूपोऽयं प्रतिगृह्यताम् गृहाण शुद्ध दीपं च घृतवर्ति समन्वितम्।।१४।।
दिव्य ज्ञान प्रदं चैव भैरवाय नमोनमः हेम पात्र स्थितं दिव्यं परमान्नं सुसंस्कृतम्।।१५।।
पंचधा सुरसोपेतं गृहाण परमेश्वर एवं संपूज्य देवेशि यजेदावरणं क्रमात्।।१६।।
आकाशायनमोमूर्ध्नि मुखेसमीरणाय च दघ्नाय नमो वाहौ वैतालाय नमो हृदि।।१७।।
विश्वम्भराय नम उदरे ब्रह्मणे नमः कट्याम् जनार्दनाय च जान्वोः, इन्द्राय नमः पादयोः।।१८।।

॥ इत्याष्टाङ्ग पूजा ॥

## आवरण पूजा

भूपुरे भूतप्रेतपिशाच वेतालेभ्यो श्री पादुकां पूजयामि नमस्तर्पयामि। असुरेभ्यः श्री पादुकां पूजयामि नमस्तर्पयामि ततः समुद्राः। सचक्रकाः। ससिद्धकाः। सायुधा सवाहनाः। सपरिवाराः। सशक्तिकाः। सर्वोपचारैः, स्वर्णाकर्षण भैरवस्य प्रथमाऽऽवरण देवताः। पूजिताः तर्पिताः संतुष्टाः सन्तु चाभीष्ट सिद्धिंददातु।

## ततो वृत्त पूजा विधिः

**सिद्धिः श्री पादुकां पूजयामि नमः।**

**रससिद्धि श्रीपादुकां पूजयामि नमः। सुवर्णसिद्धिः श्री पादुकां पूजयामि नमः।**

**तत समुद्राः। सचक्रकाः ससिद्धकाः। सायुधाः। सवाहनाः। सपरिवाराः सशक्तिकाः। सर्वोपचारैः स्वर्णाकर्षण भैरव चक्रपूजिता तुष्यन्तु। चाभीष्ट सिद्धिं ददातु। ततोऽष्टदलेपूजयेत्।।**

**ॐ आदित्याय स्वशक्ति सहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ अग्नये सोमाय शक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ भौमायशक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ बुधाय शक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ जीवाय शक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ शुक्राय शक्ति सहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ शनिश्चराय शक्ति सहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ राहवे शक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ केतवे शक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ततःसमुद्राः। सचक्रकाः। ससिद्धकाः। सायुधाः। सवाहनाः। सशक्तिकाः। सपरिवाराः। सर्वोपचारैः। स्वर्णाकर्षणभैरव चक्रपूजिताः तुष्यन्तु।** चाभीष्टसिद्धि ददातु। ततोऽष्टदले पूर्वादिदिक्षु पूजयेत्।

**ॐ असितांगभैरवाय ब्रह्मार्ण शक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ रुरुभैरवाय माहेश्वरी शक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ चण्डभैरवाय कौमारी शक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ क्रोध भैरवाय वैष्णवी शक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ उन्मत्त भैरवाय वाराही शक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ कपाल भैरवाय नारसिंही शक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ संहार भैरवाय चण्डी शक्तिसहिताय श्रीपादुकां पूजयामि तर्पयामि नमः।**

**ततः समुद्राः। सचक्रकाः।। ससिद्धकाः। सायुधाः। सवाहनाः। सशक्तिकाः। सपरिवाराः। सर्वोपचारैः। स्वर्णाकर्षण भैरवचक्रपूजिता स्तुष्यन्तु। चाभीष्टसिद्धिं ददातु। ततः कोणेषु पूर्वदिक्षु पूजयेत्।।**

ॐ आपदुद्धाराय श्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ अजामल वद्धाय श्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ लोकेश्वराय श्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ स्वर्णआकर्षण भैरवाय श्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ मम दारिद्र्य विद्वेषणाय श्रीपादुकां पूजयामि तर्पयामि नमः।

श्रीमहाभैरवाय नमः। श्रीपादुकां पूजयामि तर्पयामि नमः।

ततः समुद्राः सचक्रकाः ससिद्धकाः सायुधाः सवाहनाः सशक्तिकाः सपरिवारा सर्वोपचारैः स्वर्णाकर्षणभैरवचक्रपूजिताः तुष्यन्तु चार्भीष्ट सिद्धिं ददातु। ततः त्रिकोणम्।

ॐ वटुक भैरवाय श्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ कालभैरवाय श्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ क्षेत्रपभैरवाय श्रीपादुकां पुजयामि तर्पयामि नमः।

ॐ गुरु रक्तपादुकाभ्यांनमः श्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ परमगुरु शुक्ल पादुकाभ्यां नमः। श्रीपादुकां पूजयामि तर्पयामि नमः।

ॐ परमेष्ठी गुरुपति पादुकाभ्यां नमः श्रीपादुकां पूजयामि तर्पयामि नमः।

ततः समुद्राः सचक्रका ससिद्धकाः। सायुधाः सवाहनाः। सपरिवाराः सशक्तिकाः। षष्ठीमाऽऽवरणदेवताः पूजिता स्तुष्यन्तु चार्भीष्टसिद्धिं ददातु। बिन्दु मध्येमूलमंत्रं समुच्चार्य शिवादि श्रीपादुकाभ्यां नमः।

शिवादि श्रीपादुकां पूजयामि तर्पयामि नमः।

ततः समुद्रा सचक्रकाः ससिद्धका सायुधाः सवाहनाः सपरिवाराः सशक्तिकाः सप्तमावरणार्चने देवतापूजिता स्तुष्यन्तु चाभीष्टसिद्धिंददातु।

॥इत्यावरणपूजा॥

पुनर्मूलेन पूजनं कुर्यात्। धेनुयोनिमुद्रे प्रदर्श्य सुलक्षणां कुमारीं सुवासनीं वटुकं च पूजयेद्यथाशक्ति दक्षिणां च दद्यात्॥

ॐ आत्म तत्त्वाय नमः। ॐ विद्या तत्त्वाय नमः। ॐ शिव तत्त्वाय नमः। अर्घ्यंदत्त्वा देवं ध्यायन् जपं कुर्यात्। जपदशांशहोमं तद्दशांश तर्पणंमार्जनादिकं विधेयम्।

## *होम द्रव्याणिः*

**शालीयान्नं तिलान्नं वा लाजा च मधु त्रयम्। पञ्चामृतं पीत पुष्पं पायसं जलजं तथा।।**
**पलाश पुष्पं विल्वस्य पत्रं पुष्पं फलं तथा। एतैर्द्रव्यैर्विशेषेण कथितं होम कर्मणि।।२।।**
**पूर्णाहुत्यानन्तरं तर्पणमार्जनबलिमपि चान्ते कुर्यात्। ब्राह्मण भोजनपि विदेयम्।**

।।इतिरुद्रयामले भैरवतंत्रे स्वर्णाकर्षण पूजा पद्धति समाप्ता।।

## ६. होम खण्डः

### *होमः*

*पूजामण्डपस्य ईशानभागे चतुरश्राकारं हस्तायाममङ्गुष्ठोन्नतं स्थण्डिलं परिकल्प्य मूलेन निरीक्ष्य, फट् इति सामान्यार्घ्योदकेन प्रोक्ष्य कुशेन ताडयित्वा, हुं इत्यवकुण्ठ्य स्थण्डिलोपरि मध्यमदक्षिणोत्तरेषु क्रमेण प्रागग्रास्तिस्रो रेखा विलिख्य तदुपरि मध्यमपश्चिमपूर्वेषु उदगग्रास्तिस्रो रेखा विलिख्य, तासु रेखासु उल्लेखक्रमेण—

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ब्रह्मणे नमः। ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः यमाय नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सोमाय नमः। ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः रुद्राय नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः विष्णवे नमः। ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः इन्द्राय नमः।**
इत्यभ्यर्चयेत्।।

ततः स्वदेहे षडङ्गन्यासं कुर्यात्। यथा—

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सहस्रार्चिषे हृदयाय नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः स्वस्तिपूर्णाय शिरसे स्वाहा।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः उत्तिष्ठपुरुषाय शिखायै वषट्।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः धूमव्यापिने कध्याय हुं।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सप्तजिह्वाय नेत्रत्रयाय वौषट्।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः धनुर्धराय अस्त्राय फट्।**

---

* उल्लेखनादिमुखान्तान्तं वैदिकप्रक्रियाजातं आपस्तम्बगृह्योक्तविधानेन अत्र मुद्रितम्, सूत्रान्तरानुयायिभिस्तु स्वस्वसूत्रोक्तक्रमेण अनुष्ठेयम्।

अनेनैव षडङ्गेन अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च स्थण्डिलमभ्यर्च्य तत्र अष्टकोणषट्कोणत्रिकोणात्मकमग्निचक्रं प्रवेशरीत्या विलिख्य त्रिकोणे दिगष्टकं विभाव्य तत्र स्वाग्रादिप्रादक्षिण्येन दिक्षु मध्ये च क्रमातः—



**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः पीतायै नमः।** **ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः श्वेतायै नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अरुणायै नमः।** **ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः कृष्णायै नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः धूम्रायै नमः।** **ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः तीव्रायै नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः स्फुलिङ्गिन्यै नमः।** **ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः रुचिरायै नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ज्वालिन्यै नमः** इति पीठशक्तीः समर्चयेत्।।

ततः पीठमध्ये—

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः तं तमसे नमः।** **ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः रं रजसे नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सं सत्वाय नमः।** **ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः आं आत्मने नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अं अन्तरात्मने नमः।** **ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः पं परमात्मने नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ह्रीं ज्ञानात्मने नमः।** इति पूज्येत्।।

ततः त्रिकोणे— **ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रीं वागीश्वरीवागीश्वराभ्यां नमः–** इति मन्त्रेण जनिष्यमानस्य वह्नेः पितरौ वागीश्वरीवागीश्वरौ संपूज्य तयोर्मिथुनीभावं भावयित्वा, अरणेः सूर्यकाताद्वा वह्निमुत्पाद्य द्विजगृहाद्वा आनीय मृत्पात्रे ताम्रपात्रे वा अग्निं स्थण्डिलाद्बहिः आग्नेय्यां ऐशान्यां नैर्ऋत्यां वा दिशि निधाय, **तस्मात्क्रव्यादांशमेकमग्निशकलं फट्** इति अस्त्रमन्त्रेण नैर्ऋत्यां निरस्य **अग्निं मूलेन** निरीक्ष्य प्रोक्ष्य च, अस्त्रेण कुशैस्ताडयित्वा, कवचेनावकुण्ठ्य, धेनुयोनिमुद्रे प्रदर्श्य, **ततः ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं रं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा** इति मूलाधारोद्धृतं संविदग्निं ललाटनेत्रद्वारा निर्गमय्य तं वागीश्वरबीजस्य वागीश्वरीयोन्यां प्रवेशबुद्ध्या बाह्याग्नौ संयोजयेत्।।

**ततः ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः कवचाय हुं** इति मन्त्रेण इन्धनैराच्छाद्य

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्। सुवर्णवर्गममलं समिद्धं विश्वतोमुखम्।।** इत्युपस्थाय।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः उत्तिष्ठ पुरुष हरित पिङ्गल लोहिताक्ष सर्वकर्माणि साधय मे देहि दापय स्वाहा** इति वह्निमुत्थाप्य ततः **ॐ ह्रीं** इति स्थण्डिलोपरि अग्निं त्रिवारं भ्रामयित्वा स्थण्डिले स्थापयेत्।

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा** इति प्रज्वाल्य, ज्वालिनीमुद्रां प्रदर्श्य, (प्राक्तोयं निधाय), **वागीश्वरीगर्भे धृतं ध्यात्वा**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं नमः अस्य होमाग्नेः गर्भाधानकर्म, पुंसवनकर्म, सीमन्तोन्नयनकर्म, जातकर्म, ललिताग्निरिति नाम्ना नामकरणकर्म कल्पयामि नमः,**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं नमः अस्य ललिताग्नेः अन्नप्राशनकर्म, चौलकर्म, उपनयनकर्म, गोदानकर्म, विवाहकर्म कल्पयामि नमः**—इति तत्तत्कर्मभावनया अक्षतैरभ्यर्चयेत्।।

ततः सामान्यार्घ्योदकेनाग्निं मूलेन परिषिच्य अग्निमलंकृत्य प्रागग्रैरुदगग्रैश्च कुशैः परिस्तीर्य उत्तरतो दर्भानास्तीर्य दर्वीं आज्यस्थालीं प्रोक्षणीं प्रणीतां इतरदर्वीं इध्मं च द्वन्द्वन्यञ्चि (अधोबिलं) पात्राणि सादयित्वा द्वौ दर्भौ प्रादेशमात्रे पवित्रे कृत्वा अद्भिरनुमृज्य, सामान्यार्घ्योदकेन षट् पात्राणि प्रोक्ष्य, प्रोक्षणीपात्रमादाय पुरतो निधाय, अक्षतैः सह सामान्यार्घ्योदकेन पूरयित्वा, हस्तयोः अङ्गुष्ठोपकनिष्ठिकाभ्यामुदगग्राभ्यां पवित्राभ्यां मूलेन त्रिः प्रागुत्पूय, मूलेन सप्तधा अभिमन्त्र्य, उत्तानानि पात्राणि कृत्वा, इध्मं विस्रस्य त्रिः प्रोक्ष्य, प्रोक्षणीपात्रं दक्षिणतो निधाय, **प्रणीतापात्रमादाय पुरतो निधाय, पवित्रे तस्मिन्निधाय, अक्षतैः सह अङ्कुशमुद्रया मूलेन सामान्यार्घ्योदकेन पूरयित्वा, वरुणाय नमः इति गन्धपुष्पाक्षतैरभ्यर्च्य दर्भैः प्रच्छाद्य पवित्रे आज्यपात्रे निधाय, अग्नेः दक्षिणतो** ब्रह्माणं दर्भेषु निषाद्य, अस्मिन् श्रीललिताहोमकर्मणि ब्रह्माणं त्वां वृणे। ओं ब्रह्मणे नमः सकलाराधनैः स्वर्चितम्। अपरेणाग्निं पवित्रान्तर्हितायामाज्यस्थाल्यां आज्यं निरूप्य उदीचोऽङ्गारान्निरूह्य तेषु आज्यमधिश्रित्य ज्वलता तृणेनावद्योत्य द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्य प्रत्यस्य त्रिः पर्यग्निकृत्वा उदगुद्वास्य अङ्गारान्प्रत्यूह्य आज्यस्थालीं स्वपुरतो निधाय मूलेन सप्तवारमभिमन्त्र्य ईक्षणप्रोक्षणताडनावकुण्ठानि कृत्वा उदगग्राभ्यां पवित्राभ्यां पुनराहारमाज्यं त्रिरुत्पूय पवित्रग्रन्थिं विस्रस्य अप उपस्पृश्य प्रागग्रं अग्नौ प्रहरति। अथ दर्व्यौ अग्नौ प्रतितप्य दर्भैः संमृज्य पुनः प्रतितप्य प्रोक्ष्य निधाय दर्भान् अद्भिः संस्पृश्य अग्नौ प्रहरति।।

इध्ममादाय परिधीन् परिदधाति—स्थूलं उदगग्रं पश्चात् अणीयांसं दीर्घं प्रागग्रं दक्षिणतः, अणिष्ठं ह्रसिष्ठं प्रागग्रं उत्तरतः अग्निपरिस्तरणयोर्मध्ये अन्योन्यसंस्पृष्टान् निधाय, मध्यमं परिधिं दक्षिणहस्तेनोपस्पृश्य अग्नेः दक्षिणपूर्व-उत्तरपूर्वदेशयोः आधारसमिधौ निधाय अथाग्निं परिषिञ्चति—अदितेऽनुमन्यस्व,

अनुमतेऽनुमन्यस्व, सरस्वतेऽनुमन्यस्व, देव सवितः प्रसुव इति परिषिच्य अग्निमलंकृत्य इध्ममादाय द्विरभिघार्य मूलमध्ययोः मध्यं मृगीमुद्रया गृहीत्वा अस्मिन् **श्रीललिताहोमकर्मणि ब्रह्मन् इध्ममाधास्ये ओं आधत्स्व इत्यनुज्ञातः हस्ताभ्यां इध्मं आदधाति। स्रुवेण आज्यमादाय तूष्णीं आधारावाघारयति।** यथा—

(इतरदर्व्या) **वायव्यादाग्नेयान्तं स्वाहा। प्रजापतय इदं न मम।**

(प्रधानदर्व्या) **नैर्ऋत्यादीशानान्तं स्वाहा। इन्द्रायेदं न मम।**

(उत्तरार्धपूर्वार्धे) **अग्नये स्वाहा। अग्नय इदं न मम।**

(दक्षिणार्धपूर्वार्धे) **सोमाय स्वाहा। सोमायेदम् न मम।**

(समं पूर्वेण मध्ये) **अग्नये स्वाहा। अग्नय इदम् न मम।**

**आरम्भप्रभृति एतत्क्षणपर्यन्तं मध्ये संभावितसमस्तदोषप्रायश्चित्तार्थं सर्वप्रायश्चित्तं होष्यामि। ओं भुर्भुवः सुवः स्वाहा। प्रजापतय इदम् न मम। अथाग्निं ध्यायेत्—**

**त्रिणयनमरुणत्पाबद्धमौलिं सुशुक्लांशुकमरुणमनेकाकल्पमम्भोजसंस्थम्।**
**अभिमतवरशक्तिं स्वस्तिकाभीतिहस्तं नमत कनकमालालंकृतांसं कृशानुम्।।**

(शारदातिलके—वैश्वानरं स्थितं ध्यायेत् समिद्धोमेषु देशिकः। शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु।।)

अथ अष्टकोणे स्वाग्रादिप्रादक्षिण्येन —

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः जातवेदसे नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सप्तजिह्वाय नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हव्यवाहनाय नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अश्वोदराय नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः वैश्वानराय नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः कौमारतेजसे नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः विश्वमुखाय नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः देवमुखाय नमः।** इत्यभिपूज्य।।

षट्कोणे षडङ्गं यथा

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सहस्रार्चिषे हृदयाय नमः।**
**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः स्वस्तिपूर्णाय शिरसे स्वाहा।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः उत्तिष्ठपुरुषाय शिखायै वषट्।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः धूमव्यापिने कवचाय हुम्।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सप्तजिह्वाय नेत्रत्रयाय वौषट्।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः धनुर्धराय अस्त्राय फट्।** इत्यभ्यर्च्य।

त्रिकोणे

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा** इति मन्त्रेण अग्निं पुष्पाक्षतैरर्चयेत्।

अथ अग्नेः सप्तजिह्वासु एकैकां आज्याहुतिं कुर्यात्। यथा—

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः हिरण्यायै नमः स्वाहा हिरण्याया इदं न मम** (ऐशान्यां)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः कनकायै नमः स्वाहा कनकाया इदं न मम** (प्राच्यां)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः रक्तायै नमः स्वाहा रक्ताया इदं न मम** (आग्नेय्यां)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः कृष्णायै नमः स्वाहा कृष्णाया इदं न मम** (नैरृत्यां)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सुप्रभायै नमः स्वाहा सुप्रभाया इदं न मम** (पश्चिमायां)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः अतिरक्तायै नमः स्वाहा अतिरक्ताया इदं न मम** (वायव्यायां)

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः बहुरूपायै नमः स्वाहा बहुरूपाया इदं न मम** (मध्ये)

ततस्तिस्र आहुतीर्जुहुयात्। यथा—

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा—अग्नय इद न मम।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः उत्तिष्ठपुरुष हरितपिङ्गळ लोहिताक्ष सर्वकर्माणि साधय मे देहि दापय स्वाहा—अग्नय इद न मम।**

**ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः चित्पिङ्गळ हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा—अग्नय इद न मम।** अथ अग्रेर्मध्यभागे स्थितायां दक्षिणोत्तरायतायां बहुरूपाख्यजिह्वायां, **ॐ ऐं ह्रीं श्रीं हस्त्रैं हस्क्ल्रीं हस्त्रौः। महापद्मवनान्तस्थे कारणानन्दविग्रहे। सर्वभूतहिते मातरेह्येहि परमेश्वरि।।** इति श्रीदेवीमावाह्य उपचारमन्त्रैः गन्धादीन् पञ्चोपचारानाचर्य पूजाक्रमेण जुहुयात्। यथा—

**ॐ ऐं ह्रीं श्रीं गणपतिमूलं महागणपतये स्वाहा** (त्रिः)।।

**ॐ ऐं ह्रीं श्रीं मूलं श्रीललितामहात्रिपुरसुन्दर्यै स्वाहा** (दशकृत्वः)।।

क— ५ हृदयाय नमः हृदयदेव्यै, ह—६ शिरसे स्वाहा शिरोदेव्यै, स-ॐ ऐं ह्रीं श्रीं शिखायै वषट् शिखादेव्यै, क-५ कवचाय हुं कवचदेव्यै, ह-६ नेत्रत्रयाय वौषट् नेत्रदेव्यै, स-४ अस्त्राय फट् अस्त्रदेव्यै स्वाहा।।

अः क- १५ अः ललितामहानित्यायै (त्रिः), तत्तिथिनित्यामन्त्रेण तत्तिथिनित्यायै, अः क १५ अः ललितामहानित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं अं ऐं सकलह्रीं नित्यक्लिन्ने मदद्रवे सौः अं कामेश्वरीनित्यायै स्वाहा।

ॐ ऐं ह्रीं श्रीं आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्वान् भगेश्वरि ऐं ब्लूं जं ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं आं भगमालिनीनित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं इं ओं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा इं नित्यक्लिन्नानित्यायै।।

ॐ ऐं ह्रीं श्रीं ईं ओं क्रों भ्रों क्रौं झ्रौं छ्रौं ज्रौं स्वाहा ईं भेरुण्डानित्यायै।।

ॐ ऐं ह्रीं श्रीं उं ओं ह्रीं वह्निवासिन्यै नमः उं वह्निवासिनीनित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं ऊं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ऊं महावज्रेश्वरीनित्यायै।।

ॐ ऐं ह्रीं श्रीं ऋं ह्रीं शिवदूत्यै नमः ऋं शिवदूतीनित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं ॠं ओं ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षें ह्रीं फट् ॠं त्वरितानित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं ऌं ऐं क्लीं सौः ऌं कुलसुन्दरीनित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं ॡं ह्स्क्ल्र्डैं ह्स्क्ल्र्डीं ह्स्क्ल्र्डौः ॡं नित्यानित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं एं ह्रीं फ्रें स्त्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीं एं नीलपताकानित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं ऐं भ्म्य्र्यूं ऐं विजयानित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं ओं स्वौं ओं सर्वमङ्गळानित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं औं ओं नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र र हुं फट् स्वाहा औं ज्वालामालिनीनित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं अं च्क्रौं अं चित्रानित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं अः पञ्चदशी ललितामहानित्यायै स्वाहा।।

ॐ ऐं ह्रीं श्रीं ऐं ग्लौं ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः श्रीविद्यानन्द-नाथात्मकचर्यानन्दनाथाय स्वाहा, उड्डीशानन्दनाथाय, प्रकाशानन्दनाथाय, विमर्शानन्दनाथाय, आनन्दानन्दनाथाय, षष्ठीशानन्दनाथाय, ज्ञानानन्दनाथाय, सत्यानन्दनाथाय, पूर्णानन्दनाथाय, मित्रेशानन्दनाथाय, स्वभावानन्दनाथाय, प्रतिभानन्दनाथाय, सुभगानन्दनाथाय स्वाहा।।

ॐ ऐं ह्रीं श्रीं परप्रकाशानन्दनाथाय, परशिवानन्दनाथाय, पराशक्त्यम्बायै, कौलेश्वरानन्दनाथाय, शुक्लदेव्यम्बायै, कुलेश्वरानन्दनाथाय, कामेश्वर्यम्बायै, भोगानन्दनाथाय, क्लिन्नानन्दनाथाय, समयानन्दनाथाय, सहजानन्दनाथाय, गगनानन्दनाथाय, विश्वानन्दनाथाय, विमलानन्दनाथाय, मदनानन्दनाथाय, भुवनानन्दनाथाय, लीलाम्बायै, स्वात्मानन्दनाथाय, प्रियानन्दनाथाय, (परमेष्ठिगुरु) अमुकानन्दनाथाय, (परमगुरु) अमुकानन्दनाथाय, (स्वगुरु) अमुकानन्दनाथाय स्वाहा।।

ॐ ऐं ह्रीं श्रीं अं आं सौः त्रैलोक्यमोहनचक्राय, अं अणिमासिद्ध्यै, लं लघिमासिद्ध्यै, मं महिमासिद्ध्यै, ईं ईशित्वसिद्ध्यै, वं वशित्वसिद्ध्यै, प्रां प्राकाम्यसिद्ध्यै, भुं भुक्तिसिद्ध्यै, इं इच्छासिद्ध्यै, पं प्राप्तिसिद्ध्यै, सं सर्वकामसिद्ध्यै, आं ब्राह्मीमात्रे, ईं माहेश्वरीमात्रे, ऊं कौमारीमात्रे, ॠं वैष्णवीमात्रे, ॡं वाराहीमात्रे, ऐं माहेन्द्रीमात्रे, औं चामुण्डामात्रे, अं महालक्ष्मीमात्रे, द्रां सर्वसंक्षोभिणीमुद्राशक्त्यै, द्रीं सर्वविद्राविणीमुद्राशक्त्यै, सः सर्वोन्मादिनीमुद्राशक्त्यै, क्रों सर्वमहाङ्कुशामुद्राशक्त्यै, ह्स्ख्फ्रें सर्वखेचरीमुद्राशक्त्यै, ह्सौः सर्वबीजमुद्राशक्त्यै, ऐं सर्वयोनिमुद्राशक्त्यै, ह्स्रैं ह्स्क्ल्रीं ह्स्रौः सर्वत्रिखण्डामुद्राशक्त्यै, प्रकटयोगिनीभ्यः, अं आं सौः त्रिपुराचक्रेश्वर्यै, अं अणिमासिद्ध्यै, द्रां सर्वसंक्षोभिणीमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सर्वाशापरिपूरकचक्राय, अं कामाकर्षिण्यै, आं बुद्ध्याकर्षिण्यै, इं अहङ्काराकर्षिण्यै, ईं शब्दाकर्षिण्यै, उं स्पर्शाकर्षिण्यै, ऊं रूपाकर्षिण्यै, ऋं रसाकर्षिण्यै, ॠं गन्धाकर्षिण्यै, ऌं चित्ताकर्षिण्यै, ॡं धैर्याकर्षिण्यै, एं स्मृत्याकर्षिण्यै, ऐं नामाकर्षिण्यै, ओं बीजाकर्षिण्यै, औं आत्माकर्षिण्यै, अं अमृताकर्षिण्यै, अः शरीराकर्षिण्यै, गुप्तयोगिनीभ्यः, ऐं क्लीं सौः त्रिपुरेशीचक्रेश्वर्यै, लं लघिमासिद्ध्यै, द्रीं सर्वविद्राविणीमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ॐ ऐं ह्रीं श्रीं ह्रीं क्लीं सौः सर्वसंक्षोभणचक्राय, कं—ङं अनङ्गकुसुमायै, चं ञं अनङ्गमेखलायै, टं-णं अनङ्गमदनायै, तं-नं अनङ्गमदनातुरायै, पं-मं अनङ्गरेखायै, यं-वं अनङ्गवेगिन्यै, शं-हं अनङ्गाङ्कुशायै, ळं क्षं अनङ्गमालिन्यै, गुप्ततरयोगिनीभ्यः. ह्रीं क्लीं सौः त्रिपुरसुन्दरीचक्रेश्वर्यै, मं महिमासिद्ध्यै, क्लीं सर्वाकर्षिणीमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ॐ ऐं ह्रीं श्रीं हैं ह्क्लीं ह्सौः सर्वसौभाग्यदायकचक्राय, कं सर्वसंक्षोभिण्यै, खं सर्वविद्राविण्यै, गं सर्वाकर्षिण्यै, घं सर्वाह्लादिन्यै, ङं सर्वसंमोहिन्यै, चं सर्वस्तम्भिन्यै, छं सर्वजृम्भिण्यै, जं सर्ववशंकर्यै, झं सर्वरञ्जिन्यै, ञं सर्वोन्मादिन्यै, टं सर्वार्थसाधिन्यै, ठं सर्वसंपत्तिपूरण्यै, डं

सर्वमन्त्रमय्यै, ढं सर्वद्वन्द्वक्षयंकर्यै, संप्रदाययोगिनीभ्यः, हैं ह्क्लीं ह्सौः त्रिपुरवासिनीचक्रेश्वर्यै, ईं ईशित्वसिद्ध्यै, ब्लूं सर्ववशंकरीमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ॐ ऐं ह्रीं श्रीं. ह्सैं ह्स्क्लीं ह्स्सौः सर्वार्थसाधकचक्राय, णं सर्वसिद्धिप्रदायै, तं सर्वसंपत्प्रदायै, थं सर्वप्रियंकर्यै, दं सर्वमङ्गळकारिण्यै, धं सर्वकामप्रदायै, नं सर्वदुःखविमोचिन्यै, पं सर्वमृत्युप्रशमन्यै, फं सर्वविघ्ननिवारिण्यै, बं सर्वाङ्गसुन्दर्यै, भं सर्वसौभाग्यदायिन्यै, कुलोत्तीर्णयोगिनीभ्यः, ह्सैं ह्स्क्लीं ह्स्सौः त्रिपुराश्रीचक्रेश्वर्यै, वं वशित्वसिद्ध्यै, सः सर्वोन्मादिनीमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ॐ ऐं ह्रीं श्रीं. ह्रीं क्लीं ब्लें सर्वरक्षाकरचक्राय, मं सर्वज्ञायै, यं सर्वशक्त्यै, रं सर्वैश्वर्यप्रदायै, लं सर्वज्ञानमय्यै, वं सर्वव्याधिविनाशिन्यै, शं सर्वाधारस्वरूपायै, षं सर्वपापहरायै, सं सर्वानन्दमय्यै, हं सर्वरक्षास्वरूपिण्यै, क्षं सर्वेप्सितफलप्रदायै, निगर्भयोगिनीभ्यः, ह्रीं क्लीं ब्लें त्रिपुरमालिनीचक्रेश्वर्यै, पं प्राकम्यसिद्ध्यै, क्रों सर्वमहाङ्कुशामुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ॐ ऐं ह्रीं श्रीं ह्रीं श्रीं सौः सर्वरोगहरचक्राय, अं + अः (१६) ब्लूं वशिनीवाग्देवतायै, कं-ङ क्ल्ह्रीं कामेश्वरीवाग्देवतायै, चं-ञ न्व्लीं मोदिनीवाग्देवतायै, टं-णं य्लूं विमलावाग्देवतायै, तं-नं ज्म्रीं अरुणावाग्देवतायै, पं-मं ह्स्ल्व्यूं जयिनीवाग्देवतायै, यं-वं झ्म्र्यूं सर्वेश्वरीवाग्देवतायै, शं-थ क्ष्म्रीं कौलिनीवाग्देवतायै, रहस्ययोगिनीभ्यः, ह्रीं श्रीं सौः त्रिपुरासिद्धाचक्रेश्वर्यै, भुं भुक्तिसिद्ध्यै, ह्स्ख्फ्रें सर्वखेचरीमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ॐ ऐं ह्रीं श्रीं यां रां लां वां सां द्रां द्रीं क्लीं ब्लूं सः सर्वजम्भनेभ्यः कामेश्वरीकामेश्वरबाणेभ्यः स्वाहा।

ॐ ऐं ह्रीं श्रीं थं धं सर्वसंमोहनाभ्यां कामेश्वरीकामेश्वरधनुभ्यां स्वाहा।।

ॐ ऐं ह्रीं श्रीं ह्रीं आं सर्ववशीकरणाभ्यां कामेश्वरीकामेश्वरपाशाभ्यां स्वाहा।

ॐ ऐं ह्रीं श्रीं क्रों क्रों सर्वस्थम्भनाभ्यां कामेश्वरीकामेश्वराङ्कुशाभ्यां स्वाहा।।

ॐ ऐं ह्रीं श्रीं ह्स्रैं ह्स्क्ल्रीं ह्स्रौः सर्वसिद्धिप्रदचक्राय, ऐं क-५ महाकामेश्वर्यै, क्लीं ह-६ महावज्रेश्वर्यै, सौः स-ॐ ऐं ह्रीं श्रीं महाभगमालिन्यै, ऐं क-५ क्लीं ह-६ सौः स-ॐ ऐं ह्रीं श्रीं श्रीमहात्रिपुरसुन्दर्यै, अतिरहस्ययोगिनीभ्यः, ह्स्रैं ह्स्क्ल्रीं ह्स्रौः त्रिपुराम्बाचक्रेश्वर्यै, इं इच्छासिद्ध्यै, ह्सौः सर्वबीजमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ॐ ऐं ह्रीं श्रीं पञ्चदशी सर्वानन्दमयचक्राय, मूलं श्रीललितामहात्रिपुरसुन्दर्यै स्वाहा। इति दशवारं, परापरातिरहस्ययोगिन्यै, पञ्चदशी महात्रिपसुन्दरीचक्रेश्वर्यै, पं प्राप्तिसिद्ध्यै, ऐं सर्वयोनिमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।।

ॐ ऐं ह्रीं श्रीं षोडश्युपासकानां–तुरीयविद्या तुरीयाम्बायै, सं सर्वकामसिद्ध्यै, ह्स्रैं ह्स्क्ल्रीं ह्स्रौः सर्वत्रिखण्डामुद्राशक्त्यै, महाषोडशी महात्रिपुरसुन्दरीपराभट्टारिकायै स्वाहा।।

**पञ्चपञ्चिकादिहोमे तत्तन्मन्त्रेण प्रदर्शितरीत्या होमः कर्तव्यः।।**

ततो होमावशिष्टेन आज्येन स्रुचं पूरयित्वा पुष्पं फलं अग्रे निधाय स्रुवेणाच्छाद्य मूलेन वौषट् इति उत्थितो जुहुयात्।। ततो बलिदानम् **(बलिदान खण्डः)**। ततो महाव्याहृतिहोमः। यथा—

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः भूरग्नये च पृथिव्यै च **महते च स्वाहा। अग्नये पृथिव्यै महत इदम् न मम।** ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः भुवो वायवे चान्तरिक्षाय च **महते च स्वाहा। वायवे अन्तरिक्षाय महत इदम् न मम।** ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः सुवरादित्याय च दिवे च महते च **स्वाहा। आदित्याय दिवे महत इदम् न मम।** ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः भुर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च **महते च स्वाहा। चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महत इदम् न मम।** इति चतस्र आहुतीराज्येन हुत्वा।

**ऐं ह्रीं श्रीं ओं इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यत्कृतं यदुक्तं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा। परब्रह्मण इदम् न मम।** इति ब्रह्मार्पणाहुतिं विदध्यात्।।

एतत्कर्मसमृद्ध्यर्थं जयादिहोमं करिष्ये। **चित्तं च स्वाहा। चित्तादेयम्। चित्तिश्च स्वाहा। चित्या इदम् न मम। आकूतं च स्वाहा। आकूतायेदम्। आकूतिश्च स्वाहा। आकूत्या इदम् न मम। विज्ञातं च स्वाहा। विज्ञातायेदम्। विज्ञानं च स्वाहा। विज्ञानायेदम्। मनश्च स्वाहा। मनस इदम् न मम। शक्करीश्च स्वाहा। शक्करीभ्य इदम् न मम। दर्शश्च स्वाहा। दर्शायेदम्। पूर्णमासश्च स्वाहा। पूर्णमासायेदम्। बृहच्च स्वाहा। बृहत इदम् न मम। रथन्तरं च स्वाहा। रथन्तरायेदम्। प्रजापतिर्जयानिन्द्राय कृष्णे प्रायच्छदुग्र पृतनाज्येषु तस्मै विशः समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव स्वाहा। प्रजापतय इदम् न मम। अग्निर्भूतानामधिपतिः स माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। अग्नय इदम् नं मम। इन्द्रो ज्योष्ठानामधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। इन्द्रायेदम्। यम पृथिव्या अधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। यमायेदम्। वायुरन्तरिक्षस्याधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। वायव इदम् नं मम। सूर्योदिवोऽधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। सूर्यायेदम्। चन्द्रमानक्षत्राणामधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। चन्द्रमस इदम् नं मम। बृहस्पतिर्ब्रह्मणोऽधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। बृहस्पतय इदम् नं मम। मित्रः सत्यानामधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। मित्रायेदम्। वरुणोऽपामधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। वरुणायेदम्। समुद्रः**

स्रोत्यानामधिपति स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। समुद्रायेदम्। अन्नँ साम्राज्यानामधिपतिः तन्माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। अन्नायेदम्। सोम ओषधीनामधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। सोमायेदम्। सविता प्रसवानामधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। सवित्र इदम्। रुद्र पशूनामधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। रुद्रायेदम्। अप उपस्पृश्य। त्वष्टा रूपाणामधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। त्वष्ट्र इदम्। विष्णु पर्वतानामधिपतिः स माऽवतु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। विष्णव इदम्। मरुतो गणानामधिपतयस्ते माऽवन्तु माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। मरुद्भ्य इदम्। पितर पितामहा परेवरे ततास्ततामहा इहमाऽवत। अस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। पितृभ्य इदम्। अप उपस्पृश्य। त्रमाऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँताषाड्टतधामाऽग्निर्गन्धर्वस्तस्यौ-षधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्मक्षत्रं पातु ता इदं ब्रह्मक्षत्रं पान्तु तस्मै स्वाहा। अग्नये गन्धर्वायेदम्। ताभ्यः स्वाहा। ओषधीभ्योऽप्सरोभ्य इदम्। सँहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। सूर्याय गन्धर्वायेदम्। ताभ्यः स्वाहा। मरीचिभ्योऽप्सरोभ्य इदम् न मम। सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो वेकुरयो नाम माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। चन्द्रमसे गन्धर्वायेदम्। ताभ्यः स्वाहा। नक्षत्रेभ्योऽप्सरोभ्य इदम् न मम। भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसः स्तवा नाम माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। यज्ञाय गन्धर्वायेदम्। ताभ्यः स्वाहा। दक्षिणाभ्योऽप्सरोभ्य इदम् न मम। प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नयो नाम माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। मनसे गन्धर्वायेदम्। ताभ्यः स्वाहा। त्रमाऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँक्सामभ्योऽप्सरोभ्य इदम् न मम। इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापोऽप्सरसो मुदा नाम माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। वाताय गन्धर्वायेदम्। ताभ्यः स्वाहा। अद्दभोऽप्सरोभ्य इदम् न मम। भुवनस्य पते यस्य त उपरि गृहा इह च। सनोरास्वाज्यानि रायस्पोषं सुवीर्यं संवत्सरीणाँ स्वस्ति स्वाहा। भुवनस्य पत्य इदम् न मम। परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवो नाम माऽवत्वस्मिन्

ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। मृत्यवे गन्धर्वायेदम्। ताभ्यः स्वाहा। विश्वस्मा अप्सरोभ्य इदम् न मम। सुक्षितिः सुभूतिर्भद्रकृथ्सुवर्वान्पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो नाम माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। पर्जन्याय गन्धर्वायेदम्। ताभ्यः स्वाहा। विद्युद्भ्योऽप्सरोभ्य इदम् न मम। दूरे हेतुरमृडयो मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवो नाम माऽवत्वस्मिन् ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याँ स्वाहा। मृत्यवे गन्धर्वायेदम्। ताभ्यः स्वाहा। प्रजाभ्योऽप्सरोभ्य इदम् न मम। चारु कृपणकाशी कामो गन्धर्वस्तस्याधयोऽप्सरसः शोचयन्तीर्नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा। कामाय गन्धर्वायेदम्। ताभ्यः स्वाहा। आधिभ्योऽप्सरोभ्य इदम् न मम। स नो भुवनस्य पते यस्य त उपरि गृहा इह च। उरु ब्रह्मणेऽस्मै क्षत्राय महिशर्म यच्छ स्वाहा। भुवनस्य पत्यै ब्रह्मण इदम् न मम। प्रजापते न स्वदेतान्यन्यो विश्वा जातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयँ स्याम पतयो रयीणां स्वाहा। प्रजापतय इदम् न मम। भूः स्वाहा। अग्नय इदम् न मम। भुवः स्वाहा। वायव इदम् न मम। सुवः स्वाहा। सूर्यायेदम्। यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टथ्स्विष्टकृद्विद्वान्थ्सर्वं स्विष्टं सुहुतं करोतु स्वाहा। अग्नये स्विष्टकृत इदम् न मम। चरुकर्मसु प्रधानदर्व्याज्येन निधानक्रमात् परिध्यञ्जनं कृत्वा लेपकार्यं कुर्यात्। आज्यस्थाल्या दक्षिणतः प्रधानदर्वीं निधाय, इतरदर्वीं मधये निधाय, पात्रसादनार्थदर्भानादाय, प्रधानदर्व्यामग्रं, इतरस्यां मध्यं, आज्यस्थाल्यां मूलमित्युदगपवर्गं क्रमेण त्रिरक्त्वा, अक्तस्य बर्हिषस्तृणमपादाय, प्रज्ञातं निधाय, दक्षिणोत्तराभ्यां पाणिभ्यां प्रधानदर्व्यां बर्हिः प्रतिष्ठाय, दक्षिणेन करेणाग्नौ प्रहरति। त्रिरुद्यम्य, अपात्ततृणमग्नौ प्रहरति। तस्त्रिरङ्गुल्या निर्दिश्य, अग्निमभिमन्त्रयते। अथ भूमिमुपस्पृश्य, परिधीन्प्रहरति। मध्यमं परिधिमग्नौ प्रहृत्य, अन्यौ परिधी हस्ताभ्यामादाय युगपदग्नौ प्रहरन्नुत्तरार्ध्यस्याग्रमङ्गारेपूपोहति। दर्वीद्वयेन संस्रावं परिधीनभिजुहोति (स्वाहा) वसुभ्यो रुद्रेभ्य आदित्येभ्यः संस्रावभागेभ्य इदम् न मम। ॐ भूर्भुवस्सुवः स्वाहा। प्रजापतय इदम् न मम।

अस्मिन् ललिताहोमकर्मणि अविज्ञातप्रायश्चित्तदीनि होष्यामि। अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु। अग्ने तदस्य कल्पय त्वँ हि रेथ्थ यथातथँ स्वाहा। अग्नय इदम् न मम। पुरुषसंमितो यज्ञो यज्ञ पुरुषसंमितः। अग्ने तदस्य कल्पय त्वँ हि वेत्थ यथातथँ स्वाहा। अग्नय इदम् न मम। यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्यते मर्तासः। अग्निष्टद्धोता ऋतुविद्विजानन्यजिष्ठो देवाँ ऋतुशो यजाति स्वाहा। अग्नय इदम् न मम। भूः स्वाहा। अग्नय इदम् न मम। भुवः स्वाहा। वायव इदम् न मम। सुवः स्वाहा। सूर्यायेदम्। ॐ भुर्भुवस्सुवः स्वाहा। प्रजापतय इदम् न मम

अस्मिन् ललिताहोमकर्मणि मध्ये संभावितसमस्तमन्त्रलोपतन्त्रलोपद्रव्यलोपक्रियालोपाज्यलोप-न्यूनातिरेकविस्मृतिविपर्यासप्रायश्चित्तार्थं सर्वप्रायश्चित्तं होष्यामि। ॐ भुर्भुवस्सुवः स्वाहा। प्रजापतय इदम् न मम। श्रीविष्णवे स्वाहा। विष्णवे परमात्मन इदम् न मम। नमो रुद्राय पशुपतये स्वाहा। रुद्राय पशुपतय इदम् अप उपस्पृश्यं। सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धामप्रियाणि।

**सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन स्वाहा। अग्नये सप्तवत इदम् न मम।** आज्यपात्रादीनुत्तरतो निधाय, प्राणायामं कृत्वा, अग्निं परिषिञ्चति। **अदितेऽन्वमँस्थाः। अनुमतेऽन्वमँस्थाः। सरस्वतेऽन्वमँस्थाः। देव सवित प्रासावीः।।**

ततः प्रणीतापात्रां स्वस्य पुरतः आदाय, **पूर्णमसि पूर्णं मे भूयाः। सदसि सन्मे भूयाः। सर्वमसि सर्वं मे भूयाः।।** इति अन्यजलं निनीय तज्जलं प्रागादिप्रदक्षिणं—प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम्। **दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम्। प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम्। उदीच्यां दिश्याप ओषधयो वनस्पतयो** मार्जयन्ताम्। ऊर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तमाम्—इति प्रतिदिशमुत्सृज्य पुरस्तात् अक्षतोपरि निस्राव्य, तेन—ब्राह्मणेष्वमृतं हितं येन देवाः पवित्रेणात्मानं पुनते सदा तेन सहस्रधारेण पावमान्यः पुनन्तु मा—इत्यात्मानं प्रोक्ष्य दक्षिणतो निषादितं ब्रह्माणं संपूज्य तस्य वरं दत्त्वा प्रागादिपरिस्तिरणमुत्तरे विसृजेत्। अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्। **सुवर्णवर्णममलं समिद्धं विश्वतोमुखम्।। इत्युपथ्य चिदग्निं, उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वहन प्रजानन्। आयुः प्रजाँ रयिमस्मासु धेहि अजस्रो दिदिहि नो दुरोणे।। ललिताग्निमात्मन्युद्वासयामि नमः इत्युद्वास्य हृदये अञ्जलिं दद्यात्।**

**तद्भूतिलिकं-त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् अगस्त्यस्य त्र्यायुषं यद्देवानां त्र्यायुषं तन्मेऽस्तु त्र्यायुषं। शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हि सीः।।**

इति त्रियायुषेण मन्त्रेण धारयेत्। इति शिवम्।।

## प्राणप्रतिष्ठा–मंत्रः

**अस्य श्री प्राणप्रतिष्ठा महा मन्त्रस्य ब्रह्मा विष्णु महेश्वरा ऋषयः।। ऋग्यजुस्सामाथर्वाणि छन्दांसि। चैतन्यं देवता आं बीजं ह्रीं शक्तिः क्रों कीलकम् प्राणप्रतिष्ठार्थे जपे विनियोगः**

**ॐ ऐं ह्रीं श्रीं अं कं खं गं घं ङं पृथिव्यप् तेजो वाय्वाकाशात्मने आं अंगुष्ठाभ्यां नमः।**

**इं चं छं जं झं ञं शब्दस्पर्शरूपरस गन्धात्ले ईं तर्जनीभ्यां नमः।।**

**ॐ ऐं ह्रीं श्रीं उं टं ठं डं ढं णं श्रीत्रत्वक्चक्षुर्जिह्व घ्राणात्मने ऊं मध्यमाभ्यां नमः।।**

**ॐ ऐं ह्रीं श्रीं एं तं थं दं घं नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां नमः।।**

**ॐ ऐं ह्रीं श्रीं ओं पं फं बं भं मं वचनादान विहरण बिसर्ग आनन्दात्मने औं कनिष्ठिकाभ्यां नमः।।**

**ॐ ऐं ह्रीं श्रीं अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहङ्कार चित्तान्तः करणात्मने अ करतलकरपृष्ठाभ्यां नमः।।**

**ॐ ऐं ह्रीं श्रीं अं कं खं गं चं ङं पृथिव्यप्तेजो वाय्वाकाशआत्मने आं हृदयाय नमः।।**

**ॐ ऐं ह्रीं श्रीं इं चं छं जं झं ञं शब्दस्पर्श रूप रसगन्धात्मने ईं शिरसे स्वाहा।।**

ॐ ऐं ह्रीं श्रीं उं टं ठं डं ढं णं श्रीत्रत्वक् चक्षुर्जिह्वा घ्राणग्त्मने ऊं शिखायै वषट्।।

ॐ ऐं ह्रीं श्रीं एं तं थं दं धं नं वाक्याणिपादपायूपस्थात्मने ऐं कवचाय हुं।।

ॐ पं फं बं भं मं वचनादान विहरण विसर्ग आनन्दात्मने औं नेत्रत्रयाय वौषट्।।

अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहंकारचित्तान्तः करणात्मने अ अस्त्राय फट्।।

भुर्भुवस्सुवरों इतिः दिग्बन्धः।।

ध्यानम्—

रक्ताम्बोधिस्थपोतोल्लसदरूण सरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमलिगुणमप्यं कुशं पञ्चबाणान् ।
बिभ्राणाऽसृक्कपालं त्रिणयनलसिता पीनवक्षोरुहाढ्या
देवी वालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ।।

लमितिपञ्चपूजा—

ॐ ऐं ह्रीं श्रीं आं ह्रीं क्रों यं रं लं वं शं षं सं हों ओं क्षं सं हंसः ह्रीं ओं हंसः
ॐ ऐं ह्रीं श्रीं श्रीमहात्रिपुरसुन्दर्याः प्राण इह प्राणः

ॐ ऐं ह्रीं श्रीं आं ह्रीं क्रों यं रं लं वं षं सं हों ओं क्षं सं ईसः ह्रीं ओं हंसः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौ स्त्रीमहात्रिपुरसुन्दर्याः जीव इह स्थितः

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौ श्रीमहात्रिपुरसुन्दर्याः सर्वेन्द्रियाणि

ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौ श्रीमहात्रिपुरसुन्दर्याः वाङ्मनश्चक्षुः श्रोत्र जिह्वाघ्राणा प्राणाः
इहैवागत्य अस्मिन् बिंबे (श्रीचक्रे) सुखं चिरं तिष्टग्तु स्वाहा।।
ॐ ऐं ह्रीं श्रीं ओं असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगं।
ज्योक्पश्येम सूर्यमुच्चरन्तमनुमते मृलया नस्स्वस्ति।
ओं क्षं सं हंसः ह्रीं ओं प्राणान् प्रतिष्ठापयामि नमः।।

## ७. बलिदान खण्डः

देव्यग्रे किञ्चित् वामे

किञ्चित् दक्षिणे च देव्याः ईशानादिकोमचतुष्टये देव्युत्तरे च पार्श्वे (मध्ये) अष्टस्थानेषु त्रिकोण वृत्तचतुरश्रात्मकानि त्रितारं उच्चारयन् भूगतजानुकः सन् अष्टमण्डलानि निर्माय स्ववामभागे—

## श्री अष्टदिग्बालकाःबलिदानम्

(सविस्तार रूपेण)

देव्यादक्षभागे सामान्योंदकेन षटकोण-वृत्त चतुराश्रात्मकम् मण्डलम् परिकल्पय।

**ॐ ऐं ह्रीं श्रीं व्यापक मण्डलाय नमः** – इतिगन्धाक्षतैरभ्यर्च्य।

### १. इन्द्रदिग्

आवाहनम कृत्वा।

**ॐ नमो भगवते रूद्राय पूर्व दिशाय! इन्द्राय! ऐरावतारूढाय! इन्द्रं वज्रहस्ताय! सायूधाय! पत्नी-पत्र परिवार सहिताय! ऐन्द्रिं दिशां दिग्देवताधिपतिं इन्द्रं ऐन्दि मण्डले आवाह्यामि। आवाहनादि षोऽशोपचार पूजां समर्पयामि।** इति गन्धाक्षतैरभ्यर्च्य। **इन्द्राय नमः आगच्छ! आगच्छ! बलिम् गृहण! हुँ फट स्वाहा।**

**इन्द्राय मण्डलम् बध्नामि! बध्नामि! रक्ष! रक्ष! माचल! माचल! माक्राम्य! माक्राम्य! ॐ ह्रां ह्रीं हूं ह्रीं फट स्वाहा। ॐ ह्रीं सर्व विघ्नकृत्भ्यः सर्व भूतेभ्यो हुँ फट स्वाहा।** इति मत्रं त्रिः पठित्वा।

**भो इन्द्राय-रक्ष! रक्ष! मम कुटुम्बम् रक्ष! रक्ष! मम गोशालाम् रक्ष! रक्ष! मम गृह्य् रक्ष! रक्ष! मम बन्धून् रक्ष! रक्ष! मम व्यापरम् रक्ष! रक्ष! भम धनकोषां रक्ष! रक्ष!**

**भो इन्द्राय! त्वम् कल्याण कर्त्ता! शान्तिकर्ता! मंगलकर्त्ता! शोभन कर्त्ता! सौभाग्य कर्त्ता! ऋणमोचन कर्त्ता। संकटमोचन कर्त्ता! रोग हरण कर्त्ता! आरोकय कर्त्ता! ऐश्वर्य प्रदान कर्त्ता! कुल सम्पन्न कर्त्ता! वश कर्त्ता धेनु कर्त्ता! दलकर्त्ता! पुष्टिकर्त्ता! तुष्टि कर्त्ता! सकल बल बन्धन विमुक्त कत्ता! सर्वंगर कर्ता! सर्वग्रहोच्चटन कर्त्ता! पुत्र पौत्र मित्रादि वृत्ति कर्त्ता मोहन कर्त्ता! सर्वकृत्य कारण कर्त्ता! सर्व लोकवशङ्कर कर्त्ता! सर्व राज वशङ्कर कर्त्ता! सर्व जन प्रमोदन कर्त्ता! सर्व ग्रहमैत्री कर्त्ता!**

**भो इन्द्रय! त्वम् ऐकाहिकम्! द्वयाहिकम्! त्रयाहिकम्! पंचाहिकम्! षष्टाहिकम्! सप्ताहिकम्! अष्टाहिकम्! चातुर्मीसिकम्! षण्मासिकम्! सांवत्सरिकम्! सांध्यहिकम्! प्रातमध्यियाह्किम्! शीदोषणउदकम्! वायुकम्! कंठिकम्! कुष्ठरोगंमुदररोग जठररोगम् मुखरोगम् प्रमेहमुक्त विक्षिप्तक विस्पोटकादि विनाशाय स्वाहा!** इति प्रार्थ्य। दक्षकारार्पितं वामकर तत्त्व मुद्रास्पृष्टं सलिलं बल्युपरि दत्वा वामपाष्णिघातकरास्फोटौ कुर्वाणः समुदञ्चितवक्त्रो वाण मुद्रया बलि भूतैग्रासितं विभाव्य! योनिमुद्रया प्रणयेत्।।

ततः पादौ प्राक्षाल्य! आचम्य, प्रदक्षिणनमस्कारं कृत्वा।

**ॐ ऐन्द्रीं दिशा सम्बन्धेन नमश्चक्राय स्वाहा। ॐ इन्द्रो मे बाले श्रितः बलं हृदये मयिअहममृते अमृतं ब्रहाणि** – इति प्रार्थ्य।।

**ॐ ऐं ह्रीं श्रीं अभीष्टसिद्धिं मे देहि शरणागतवत्सल भक्तया समर्पये तुभ्यं ऐन्द्री दिशा दिग्बालकबलिम्।।**

## २. अग्निदिग्

आवाहनम् कृत्वा

**ॐ नमो भगवते रुद्राय आग्नये आजारूढाय शक्ति हस्ताय पत्नी पुत्र परिवार सहिताय आग्नेयीं ददिश दिग्देवताधिपतये अग्निं आग्नेयमण्डले आवाह्यामि।** आवाहनादि षोडशोपचार पूजां समर्पयामि।

**भो आग्नेय नमः आगच्छ! आगच्छ! बलिं गृहण! गृहण! हुँ फट स्वाहा। अग्निमंण्डलम् बध्नामि। बध्नामि! रक्षं! रक्ष! माचल! माचल! माक्राम्य! माक्राम्य! ॐ ह्रा ह्रीं हुँ फट स्वाहा।। ॐ ऐं ह्रीं श्रीं ॐ सर्व विघ्नकृभ्द्यः सर्व भूतेभ्यो हुँ फट स्वाहा।**-इति त्रिः पठित्वा

**भो आग्नये रक्ष! रक्ष! मम कुटुम्भम् रक्ष! रक्ष! मम गोशालान् रक्ष! रक्ष! भम व्यपारम् रक्ष। रक्ष! मम धनकोषां रक्ष! रक्ष!**

**भो आग्नये त्वं कल्याणकर्त्ता! शान्ति कर्त्ता! मंगलकर्त्ता! शोभनकर्त्ता! सौभाग्य कर्त्ता! ऋृणमोचन कर्त्ता! संकटमोचनं कर्ता! रोगहरण कर्त्ता! आरोख्य कर्त्ता! ऐश्वर्य प्रदान कर्त्ता! कुल सपंन्न कर्त्ता! वश कर्त्ता! धेनुकर्त्ता! दल कर्त्ता! पुष्टि कर्त्ता! तुष्टि कर्त्ता! संकल बल बन्धन विमुक्त कर्त्ता! सर्व लोक वशङकरकर्त्ता! सर्वगंर कर्त्ता! सर्वग्रहोच्चाटन कर्त्ता! पुत्र पौत्र मित्रादि वृत्ति कर्त्ता! मोह्य कर्त्ता! सर्वकृत्य कारण कर्त्ता! सर्व राजवशंकर कर्त्ता! सर्वजन प्रमोद कर्त्ता! सर्वग्रहमैत्री कर्त्ता! भो आग्नेय! त्वं ऐकाहिकम्! द्वयाहिकम्! त्रयाहिकम्! पंचाहिकम्! षष्टादिकम् सप्ताहिकम्! अष्टाहिकम्! चातुर्मासिकम्! षण्मासिकम्! सांवत्सरिकम्! सांध्याछिकम्! प्रातमध्यिह्निकम्! शीदाषणउदकम्! वायुकम्! कंठिकम्!**

**कुष्ठरोगमुदररोग जठरोगम् मुखरोगम् प्रमेहमुक्ता विक्षिप्तक विस्फोटकादि विशाशाय स्वाहा।** इति प्रार्थ्य।

दक्षकरार्पितं वामकर तत्त्वमुद्रास्पृष्टं सलिलं बलियुपरि दत्वा वामपाष्णिघातकरास्फोटौ कुर्वाणः समुदश्चितवक्त्रो बाण मुद्रया बलिभूतैग्रासितं विभाष्य। योनि मुद्रया प्रणमेत। ततः पादौ प्राक्षाल्य। आचम्य। प्रदक्षिण नमस्कारं कृत्वा।

**ॐ आग्नेयीं दिशा सम्बन्धेन नमश्चक्राय स्वाहा। ॐ अग्निर्मे वाचि श्रितः वागहृदये हृदयं मयि अहममृते अमृतं ब्रह्मणि।** -इति प्रार्थ्य

**ॐ ऐं ह्रीं श्रीं अभीष्ट सिद्धि में देहि सरणागतवत्सल भक्तया समर्पये तुभ्यं आग्नेयीं दिशा दिग्देवताधिपति बलिम्।**

## ३. यमदिग् (दक्षिणः)

आवाहनम् कृत्वा

**ॐ नमो भगवते रूद्राय याम्यीं दिशाय महिषारूढाय शक्ति हस्ताय पत्नी-पुत्र परिवार सहिताय-यमम् याम्यीं मण्डले आवाह्यामि। आवाहमादि षोडसोपचोरपूजां समर्पयामि।**

**भो यमम् आगच्छ! आगच्छ! बलिंगृहण! गृहण! हुँ फट स्वाहा। दलं बध्नामि! बध्नामि! रक्ष! रक्ष! माचंल! माचल! माक्राम्य! माक्राम्य! ॐ ह्रां ह्रीं ह्रूं फट स्वाहा। ॐ ऐं ह्रीं श्रीं ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुँ फट स्वाहा–** इति मन्त्र त्रिपठित्वा

**यमाय रक्ष! रक्ष! मम कुटुम्बम् रक्ष! रक्ष! मम गोशालम् रक्ष! रंक्ष! मंम गृहम् रक्ष रक्ष। मम बन्धून रक्ष! रक्ष! मम व्यापारम् रक्ष! रक्ष! मम धनकोषां रक्ष! रक्षा यमाय! त्वं कल्याण कर्ता शन्तिकर्त्ता! मंगलकर्त्ता! शोभन कर्त्ता! सौभाग्य कर्त्ता! ऋण मोचन कर्त्ता! रोग हरण कर्त्ता! आरोख्य कर्त्ता! ऐश्वर्यप्रदान कर्त्ता! कुल संपन्न कर्त्ता! वश कर्त्ता! धेनु कर्त्ता! दल कर्त्ता! पुष्टि कर्त्ता! तुष्टिकर्त्ता! सकल बल बन्धन विमुक्त कर्त्ता! सर्वगंकर्त्ता! सर्वग्रहोच्चाटन कर्त्ता! पुत्र पौत्र मित्रादि वृत्ति कर्त्ता! मोहन कर्त्ता! सर्वकृत्यकारण कर्त्ता। सर्वलोकवशंकर कर्त्ता! सर्वराजवशंकर कर्त्ता! सर्वजनप्रमोदन कर्त्ता! सर्वग्रहमैत्री कर्त्ता!**

**एवं ऐहिकम्! द्वयाहिकम्! त्रयाहिकम्! पञ्चाहिकम्! षृष्ठाहिकम्! सप्ताहिकम् अष्टाहिकम्! चातुर्मासिकम्! षणमासिकम्! सम्वत्सरिकम्! संध्यहिकम्! प्रातमध्याहिकम् शीतोष्णमुदकम्। वायुकं। कंठिकम्।**

**कुष्ठरोगमुदररोगम् जंठरोगम् मुखरोगम् प्रमेहमुक्ता विक्षिप्तविस्फोटकादि विनाशाय स्वाहा।** दक्षकापिव्तम् वामकर तत्त्वमुद्रास्ष्टं सलिलं बाल्युपरि दत्वा वाम पार्ष्णिधात करास्फोटौ कर्वाणः समुदञ्चितवक्त्रो बाणमुद्रया बलि भूतैग्रसितं विभाष्य योनिमुद्रया प्रणमेत् ततः पादौ प्रक्षाल्य। आचम्य। प्रदक्षिण नमस्कारं कृत्वा।

**ॐ याम्यीं दिशा सम्बन्धेन नमश्चक्राय स्वाहा। सूर्यो में चक्षुषि श्रितः चक्षुर्हदये हदयं मयि अहममृते अमृतं ब्रह्मणि–** इति प्रार्थ्य

**ॐ ऐं ह्रीं श्रीं अभीष्ट सिद्धि में देहि शरणागतवत्सल भक्तया समर्पये तुभ्यं याभ्यीं दिशा दिग्बालकबलिम्।।**

## ४. नित्रृति दिग्

आवहनम् कृत्वा

**ॐ नमो भगवते रूद्राय नैत्रृतीं दिशाय प्रेतारूढाय! खडगहस्ताय! सायुधाय! पत्नी पुत्र परिवार सहिताय दिग्देवताधिपतिं नैत्रृतीं मण्डले आवहायमि। बध्मामि! बध्नामि! रक्ष! रक्ष! माचल! माचल!**

**माक्राम्य! माक्राभ्य! ॐ ऐं ह्रीं श्रीं ॐ ह्रीं सर्व विघ्नकृद्भ्दः सर्वभूतेभ्यो हुँ फटस्वाहा।** इति मन्त्र त्रिः पठित्वा।

**भो नैऋत्याधिपतये! रक्ष! रक्ष! मम कुटुम्बम् रक्ष! रक्ष! ममगृहम् रक्ष! रक्ष! मम बन्धून रक्ष! रक्ष! मम धनकोषां रक्ष! रक्ष!**

**नैऋत्यदिशाधिपतये! त्वम् कल्याण कर्त्ता! शान्ति कर्त्ता! मंगलकर्त्ता! शोभन कर्त्ता! सौभाग्य कर्त्ता! ऋणमोचनं कर्ता! संकटमोचन कर्ता! रोग हरण कर्त्ता! आरोख्य कर्त्ता! ऐश्वर्य प्रदान कर्त्ता! कुल संपन्न कर्त्ता! वश कर्त्ता! धेनुकर्त्ता! दल कर्त्ता! सकल बलबन्धन विमुक्त कर्त्ता! सर्वंगर कर्त्ता! सर्व ग्रहोच्चाटन कर्त्ता पत्र पौत्र मित्रादि वृत्ति कर्त्ता! मोहन कर्त्ता! सर्व कृत्य कारण कर्त्ता! सर्वलोकवशंकर कर्त्ता! सर्व राज वशंकर कर्त्ता सर्वजन प्रमोदन कर्त्ता! सर्वग्रहमैत्री कर्त्ता! त्वम् ऐकाहिकम् दयाहिकम्। त्रयाहिकम्। पञ्चाहिकम्! षष्टाहिकम्! सप्ताहिकम् अष्टाहिकम्! चातुर्मासिकम्! षण्मासिकम्! सावत्सरिकम्! सन्ध्यान्हिकम्! प्रातमध्याहिकम्! शीतोषणमुदकम्। वायुकम्! कठिकम्! कृष्ठरोग मुद्ररोगम् जठरोगम् मुखरोगम् प्रमेहमुक्ता विक्षिप्तकविस्फोटकादि विनाशाय स्वाहा।** दक्षाकरार्पितं वामकर तत्त्व मुद्रास्पष्ट सलिलं बल्योपरि दत्वा वामपार्ष्णिघात करास्फोटौ कुर्वाणः समुदञ्चितवक्त्रो बाण मुद्रया भूतैर्ग्रासितं विभाव्य योनिमुद्रया प्रणमेत् **नैऋतीं दिशा सम्बन्धेन नमश्चक्राय स्वाहा ॐ दिशो में श्रोत्रे श्रिताः श्रोत्रः हृदये हृदयं मयि अहममृतं अमृतं ब्रह्मणि।** इति प्रर्थ्य

**अभीष्ट सिद्धिमें दहि शरणागतवत्सल भक्तया समर्पये तुभ्यं नैऋतीं दिग्बालकबलिम्**

## ५. वरूणदिग्

आवाहनम् कृत्वा यथा

**ॐ नमो भगवते रूद्राय बारूणीं दिशाय मकरारूढाय पाश हस्ताय सायुधाय पत्नी पुत्र परिवार सहिताय दिग्देवताधिपतिं वरूणं वरूण मण्डले आवाह्यामि। आवाहनादि षोडशोपचारपुजां समर्पयामि। भो वरूणाय नमः आगच्छ! आगच्छ! मण्डलम् बध्नामि बध्नामि! बलिम् गृहण! गृंहण! हुँ फट स्वाहा। ॐ ऐं ह्रीं श्रीं ॐ ह्रीं सर्वविघ्नकृत्भ्यः सर्वभूतेभ्यो हुँ फट स्वाहा–** इतिमन्त्रं त्रिः पठित्व।

**भो वरूणाय रक्ष रक्ष! मम कुटुम्बम् रक्ष रक्ष! मम गोशालाम् रक्ष! रक्ष! ममगृहम् रक्ष! रक्ष! मम बन्धून् रक्ष रक्ष। मम व्यापरम् रक्ष रक्ष। मम धनकोषां रक्ष रक्ष भो वरूणं त्वं कलयाण कर्त्ता! आयुषकर्त्ता मंगलकर्त्ता। शोभन कर्त्ता! सौभाग्य कर्त्ता! ऋणमोचनकर्त्ता! संकटमोचन कर्त्ता! आरोख्य कर्त्ता! ऐश्वर्य प्रदान कर्त्ता कुल संपन्न कर्त्ता! धन-धान्य विर्त्ति कर्त्ता! वशकर्त्ता! धेनुकर्त्ता! दल कर्त्ता! पुष्टि कर्त्ता! तुष्टिकर्त्ता! सकलबल बन्धन विमुक्त कर्त्ता! सर्वंगर कर्त्ता! सर्वग्रहोच्चाटन**

**कर्त्ता! पुत्र पौत्र मित्रादि वृत्ति कर्त्ता! मोहन कर्त्ता! सर्वकृत्यकारण कर्त्ता! सर्वलोकवशंकर कर्त्ता! सर्वग्रहमैत्रोकर्त्ता!**

**त्वम् ऐकाहिकम्! द्वायाहिकम् त्रयाहिकम्! पंचाहिकम्! षष्टाहिकम्! सप्ताहिकमष्टाहिकम चार्तुमसिकम्! षणमसिकम्! सांवत्सरिकम्! संध्याहिन्कम् प्रातमाध्याहिन्कम्! शीतोष्णमुदकम्! वायुकम! कंठिकम् कुष्ठरोग मुदररोग जठररोगं मुखरोगं प्रमेहमुत्ता विक्षिप्त विस्फोटकादि विनाशायस्वाह।** दक्षकरार्पितं वामकरतत्त्वमुद्रास्प्टष्टं सलिलं बल्युपरि दत्वा बामपार्ष्णिधात करास्पोटौ कुर्वाणः समुदञ्चितवक्त्रो बाणमुद्रया बलि भूतैर्ग्रासितं विभाष्य। योनिमुद्रया प्रणमेत्।

ततः पादौ प्रक्षाल्य। आचम्य प्रदक्षिणनमस्कारं कृत्वा।

**वारूणीं दिशा सम्बन्धेन नमश्चक्राय स्वाहा। आपो मे रेतसि श्रिताः रेतो हुदये हृदयं मयि अहममृते अमृतं ब्रह्माणि** इति प्रार्थ्य।

**ॐ ऐं ह्रीं श्रीं अभीष्ट सिद्धि में देहि शरणागतवत्सलभक्तया समर्पयेतुभ्यं**

## वारूणीम् दिग्बालकबलिम्

## ६. वायु दिग्

आवहनम् कृत्वा यथा

**ॐ नमो भगवते रूद्राय वायव्य दिशाय मृगारूढाय पाशहस्ताय सायुधाय पत्नी पुत्र परिवार सहिताय वायवीं दिग्देवतधिपतिं वायुं वायवी मण्डले आवाह्यामि। आवाहाना षोडशोपचारपूजां समर्पयामि भो वायवे! आगच्छ! आगच्छ! रक्ष बलिम् गृहण गृहण रक्ष! माचल! माचल! माक्राम्य! माक्राम्य! ॐ ह्रां ह्रीं हूँ फट स्वाहा। ॐ ऐं ह्रीं श्रीं सर्व वघ्नकृत्भ्यः सर्व भूतेभ्यो हुँ फट स्वाहा।**

इति मन्त्रं त्रिः पठित्व

**भो वायुं! रक्ष रक्ष!**

**मम कुटुम्बम् रक्ष रक्ष! मम गोशालम् रक्ष रक्ष! ममगृहं रक्ष रक्ष! मय बंन्धून रक्ष रक्ष! मम व्यापारम् रक्ष रक्ष! मम धनकोषां रक्ष रक्षा भो वायुं त्वं कल्याण कर्त्ता! शान्ति कर्त्ता। पुष्ठि कर्त्ता! तुष्टि कर्त्ता! आयुषकर्त्ता! मंगलकर्त्ता शोभनकर्त्ता! सौभाग्यकर्त्ता! ऋणमोचन कर्त्ता! संकटमोचन कर्ता! आरोख्य कर्त्ता! ऐश्वर्य प्रदान कर्त्ता! सर्वग्रहोचाटनकर्त्ता! सर्वगंकरकर्त्ता! सर्वरोग हरण कर्त्ता। कुलवृत्ति कर्त्ता सकल बल बन्धन विमुक्तकर्ता। पुत्र पौत्र मित्रादि वृत्तिकर्त्ता। सर्व कृत्य कारण कर्त्ता। सर्वलोक वशंकरकर्त्ता। सर्व राज बशंकर कर्त्ता! सर्वजन प्रमोदन कर्त्ता। सर्वग्रहमैत्रीकर्त्ता! त्वं ऐकादिकम्। द्वयाहिकम्। त्रयाहिकम्। पञ्चादिकम्। प्रष्टाहिकम् सप्ताहिकमष्टाहिकम्। चातुर्मासिकम्। षाष्मासिकम्। सांवत्सठिकम्। संध्याह्निकम्। प्रातमध्याह्निकम्। शीतोष्णमुदकम्।**

**वायुकं कंठिकम्। कुष्ठरोगमुदररोगं जठररोगं मुखरोगं प्रमोदमुक्ता विक्षिप्तकविस्फोटादि विनाशायस्वहा–** दक्षकरार्पितं वामकरतत्त्व मुद्रा स्प्टष्टं सलिलं बल्योपरिदत्वा वामपार्ष्णिघात करास्फोटौ कुर्वाणः समुदञ्चितवक्त्रो ब्यणमुद्रया बलि भूतैर्ग्रसितं विभाष्य योनि मुद्रया प्रणमेत—

**ततः पादौप्रक्षल्य। आचम्य** प्रदकषिण नमस्कारं कृत्वा।

**वायवी दिशा सम्बन्धेन नमश्चक्राय स्वाहा वायुर्मे प्राणे श्रितः प्राणो हृदये हृदयं मयि अहममृतं अमृतं ब्रह्माणि–** इति प्रार्थ्य।

**ॐ ऐं ह्रीं श्रीं अभीष्ट सिद्धि में देहि वणागतवत्सल भक्तया समर्पये तुभ्यं वायवीं दिशा दिग्बालकबलिम्।**

## ७. कुबेर दिग्

आवाहनम् कृत्वा।

**ॐ नमो भगवते रूद्राय कौबेर दिशाय पुष्पकारूढाय वाणहस्ताय सायुधाय पत्नी पुत्र परिवार सहिताय कौबेर दिशाधिपति कुबेरम् कौबेर मण्डले आवाहायामि-आवाहनादि षोडशोपचारान् समर्पयामि। भो कुबेराय आगच्छ आगच्छ। बलिम् गृह्य गृहण। मण्डलम् बध्नामि! बध्नामि! माचल! माचल! माक्राम्य! माक्राम्य! ॐ ह्रीं ह्रीं हूँ फट स्वाहा। ॐ ऐं ह्रीं श्री ॐ ह्रीं सर्वभूतकृद्धः सर्व भूतेभ्यो हुँ फट स्वाहा**

इति मन्त्र त्रिः पठित्वा। **भो कुबेराय रक्ष रक्ष। मम कुटुम्बम् रक्ष! रक्ष! मम गोशालाम् रक्ष! रक्ष! मम गृहं रक्ष रक्ष। मम बन्धून् रक्ष रक्ष। मम व्यापारम् रक्ष! रक्ष! मम धनकोषां रक्ष! रक्ष!**

**भो कौबेर त्वम् कल्याण कर्त्ता शान्ति कर्त्ता। पुष्टि कर्त्ता! तुष्टिकर्ता! धन-धान्य वित्तिकर्ता आयुष् कर्त्ता। मंगल कर्त्ता। शोभनकर्त्ता! सौभाग्य कर्त्ता! ऋणभोचन कर्त्ता! संकटमोचन कर्त्ता! कुलवृर्त्ति कर्त्ता! सर्व रोग हरण कर्त्ता! आरोख्य कर्त्ता! ऐश्वर्यप्रदान कर्त्ता! वश कर्त्ता! धेनु कर्त्ता! सकल बल बन्धंन विमुक्त कर्त्ता सर्वंगकर कर्त्ता! सर्वग्रहोच्चाटन कर्त्ता! पुत्र पौत्र मित्रादि वृत्ति कर्त्ता! सर्वकृत्यकारण कर्त्ता! सर्वलोक वशंकर्त्ता। सर्व राज वशंकर्त्ता! सर्व जन प्रमोदन कर्त्ता! सर्वग्रहमैत्री कर्त्ता!**

**भो कुबरं त्वम् ऐहिकम्। द्वयाहिकम्। त्रयाहिकम्। पञ्चाहिकम्। षष्टाहिकम्। सप्ताहिकमष्टाहिकम्। चातुर्मासिकम् षणमासिकम् सांवत्सरिकम्। सन्ध्याह्निकम्। प्रातः माध्याह्निकम् शीतोष्णामुदकम्। वायुकं। कंठिकम्। कुष्ठरोगमुदररोग जठररोगं मुखरोगं प्रमेहमुक्ता विक्षिप्तविस्फोटकादि विनाशाय स्वाहा–** दक्षकरार्पितं वाम करतत्त्व मुद्रास्पृष्टं सलिलं बल्युपरिदत्वा वामपार्ष्णिघात करास्फोटौकुर्वाणः समुदञ्चितवक्त्रोबाण मुद्रया बलिं भूतैर्ग्रासितं विभाष्य यो निमुद्रया प्रणमेत ततः पादौ

प्राक्षाल्य। आचम्या प्रदक्षिणनमस्कारं कृत्वा **कौबेरी दिशा सम्बन्धेन नमश्चक्राय स्वाहा। चन्द्रमा मे मनसि श्रितः मनो हृदये हृदयं मयि अहममृते अमृतं बह्माणि–** इति प्रार्थ्य।

**ॐ ऐं ह्रीं श्रीं अभीष्ट सिद्धि में देहि शराणागतवत्सले भक्तया समर्पये तुभ्यं कौ बेरी दिशा दिग्वालक बलिम्।**

## ८. ईशानदिग

आवाहनम् कृत्वा

**ॐ नमो भगवते रूद्राय ईशान्य दिशाय वृषभारूढाय त्रिशूलहस्ताय सायुधाय पत्नी-पुत्र परिवार सहिताय ऐशनीं दिशा दिग्देवताधिपतिं ईशानं ऐशानीं मण्डले आवाहयामि। आवहनादि षोडशोपाचार पूजां समपर्यमि। ईशानाय आगच्छ! आगच्छ! बलिमूगृहण गृहण! ऐशानीं मण्डलम् बध्नामि! बध्नामि! माचल! माचल! माक्राम्य! माक्राम्य! ॐ ह्रीं ह्रीं हूँ हुँ फट स्वाहा। ॐ ऐं ह्रीं श्रीं ॐ ह्रीं सर्व विघ्नकृद्धः सर्वभूतेभ्यो हुं फट स्वाहा–** इति मन्त्रं त्रिःपठित्वा

**भो ईशानम् रक्ष! रक्ष! मम कुटुम्बम् रक्ष। रक्ष! गोशालाम् रक्ष! रक्ष! मम गृहं रक्ष! रक्ष! मम बन्धून् रक्ष! रक्ष! मम व्यापारम् रक्ष रक्ष मम धन कोषां रक्ष! रक्ष!**

**भो ईशानं त्वं! कल्याण कर्त्ता शन्ति कर्त्ता! शोभन कर्त्ता! मंगल कर्त्ता! सौभाग्यकर्त्ता! ऋणमोचन कर्त्ता! संकटमोचन कर्त्ता! सर्वरोगहरणकर्त्ता! आरोख्य कर्त्ता! ऐश्वर्य प्रदान कर्त्ता! कुलसम्पन्नकर्त्ता! वंशकर्त्ता! धेनुकर्त्ता! दल कर्त्ता! पुष्टि कर्ता तुष्टि कर्त्ता! सकल बल बन्धन विमुक्त कर्त्ता! सर्वंगकर कर्त्ता! सर्वग्रहोच्चाडन कर्त्ता! पुत्र पौत्र मित्रादि वृत्ती कर्त्ता! मोहम कर्त्ता! सर्वकृत्यकारण कर्त्ता! सर्वलोकवशंकर कर्त्ता! सर्व राजवशं कर्त्ता! सर्वजन प्रमोदन कर्त्ता! सर्वग्रहमैत्री कर्त्ता!**

**ईशानं त्वम् ऐहिकम्! द्व्याहिकम्! त्रयाहिकम् पंञ्चाहिकम्! षष्टाहिकम्! सप्ताहिकमष्टाहिकम्! चातुर्मासिकम्! षण्मासिकम्! सांवत्सरिकम् सांध्याहिन्कम्! प्रातमाध्याहिन्कम्! शीतोष्णमुदकम्! वायुक! कंठिकम्! कुष्ठरोग मुदररोगं जठररोगं मुखरोगं प्रत्येहमुक्ता विक्षिप्तकविस्पोटादि विनाशाय स्वाहा।** दक्षकरार्पितं वामकर तत्त्वमुद्रास्पृष्टं समिलं बल्युपरिदत्वावामपार्ष्णिघात करास्पोटौ कुर्वाणः समुदञ्चितवक्त्रोबाणमुद्रया बलिं भूतैर्ग्रासितं विभाष्य योनिमद्रया प्रणमेत् ततः पादौ प्रक्षाल्य आचम्य, प्रदक्षिणनमस्कार कृत्वा। **ऐशनीं दिशासबन्धेन नमश्चक्राय स्वाहा। ईशानो मे मन्यौ श्रितः मन्युर्हृदये हृदयं मयि अहममृते अमृतं ब्रह्मणि!** इति प्रार्थ्य।

**ॐ ऐं ह्रीं श्रीं अभीष्ट सिद्धि मे देहि शरणागतवत्सल भक्तया समर्पयेतुभ्यं ऐशनीं दिशा दिग्बालकबलिम्**

## सामूहिक प्रार्थना

**सर्वदिग्बालकाधिपतया:! रूद्राया: रात्रीज्वर! द्वन्द्वज्वर प्रातज्वर! अग्निज्वर! शीतज्वर! दिवाज्वर! सायंज्वर! स्फितंकाज्वर! मतिंज्वर! मण्डज्बर! पापिज्वर! मतिप्रयोगादिज्वर! विमाशायस्वाहा अक्षिशूल कुक्षिशूल! कर्णशूल! घ्राणशूल! दन्तशूल! गण्डशूल शिश्शूल! शिरोर्द्धशूल! पादशूल! पादर्ध्वशूल। स्वाङ्गशूलविनाशायस्वाहा। सर्वव्याधि विनाशायस्वाहा सर्वशत्रुविनाशायस्वाहा। आपहृत शोकादि विनाशाय स्वाहा। आत्मा रक्षे। प्राण रक्षे! अग्नि रक्षे! प्रथमं अग्नि रक्षेतेशावंक बध्नामि ॐ ह्रां ह्रीं देहि स्वाहा ॐ इन्द्राय देहिस्वाहा- अनेन बलिदानने भवन्तः सर्वात्मका अष्टदिग्बालका: सुप्रीता: सुप्रन्ना: वरदोभवन्तु।**

## *कुरुकुल्ला बलि:*

देव्यग्र भागस्थंमण्डलं—

**ओं कुरुकुल्लाबलिचक्राय नमः** इति संपूज्य

**ॐ ऐं ह्रीं श्रीं ओं कुरुकुल्ले ह्रीः मम सर्वजनं वशनामय हो स्वाहा** इति मन्त्रेण त्रिखण्डमुद्रया समावाह्य

हैः स्थापनादि परमीकरणान्त मुद्राः

**तयैव विद्यया गन्धपुष्पाक्षत धूपदीपैः संपूज्य।**

पात्रत्रयं एकं वा सान्नव्यजनाम्बु गन्धपुष्पं साधारं संस्थाप्य विशेषार्घ्यबिन्दुं दत्वा, **श्रीकुरुकुल्लादेव्याः बलिद्रव्याय नमः** इति बलिद्रव्यं संपूज्य, वामादिक्रमेण **ओं कुरुकुल्ले स्वाहा श्री कुरुकुल्ले एष ते बलिः नमः** इति विशेषार्घ्य उद्धृत जलधारां वामकराङ्गुलीभिः प्रथमपात्रे दद्यात्

**ॐ ऐं ह्रीं श्रीं कुरुकुल्लाया: ओं कुरुकुल्ले ह्रीः स्वाहा**

**श्रीकुरुकुल्ले एष ते बलिः नमः** इति द्वितीयपात्रे तथैव विशेषार्घ्य धारां दद्यात्।

**ॐ ऐं ह्रीं श्रीं कुरुकुल्लाया: ओं कुरुकुल्ले ह्रीं: मम सर्वजनं वशमानय हो स्वाहा श्रीकुरुकुल्ले एष ते बलिः नमः**

इति तृतीयपात्रे विशेषार्घ्यंधारां दद्यात् इत्थं बलित्रयं कृत्वा, नाराचमुद्रया बलिं ग्राहयित्वा, पञ्चविंतिशवर्ण कुरुकुल्लाविद्यया पुष्पांजलिं दत्वा प्रणमेत्॥

(इति कुरुकुल्लाबलि:)

## वाराही बलिः

देव्यग्रे किंचिद्दक्षिणे द्वितीयमण्डले

**वाराहीबलिमण्डलाय नमः** इति संपूज्य तत्र वाराहीं तद्विद्यया समावाह्य आवहनादि परमीकरणान्तं तत्तत् मुद्रया विधाय—

तत्विद्यया गन्धपुष्पाक्षत धूपदीपैः संपूज्य
तदग्रे बलिपात्रमेकं सान्नव्यंजानांबु गन्धपुष्पं
साधारं संस्थाप्य विशेषार्घ्यबिन्दुं दत्वा।

**ॐ ऐं ह्रीं श्रीं श्रीवाराहीबलिद्रव्याय नमः** इति संपूज्य श्रीवाराहीविद्यां उच्चार्य—

**श्रीवाराही एत ते बलिर्नमः** इति विशेषार्घ्यधारां वामकरअंगुलीभिः दत्वा पुनः तद्विद्यया तां संपूज्य नाराचमुद्रया बलिं ग्राहयित्वा योनिमुद्रया प्रणमेत्

(इति वाराही बलिः)

## वटुक बलिः

अवशिष्ट षण्मण्डलेषु **ओं ऐं ह्रौं व्यापकमण्डलाय नमः** इति प्रतिमण्डलं संपूज्य

ईशानदिग्गते मण्डले ओं बटुक भैरवाय नमः इति बटुक भैरवं आवाह्य, वां इत्यादिना सकलीकृत्य कपालयोनिमुद्रे प्रदर्श्य, प्रोक्तमन्त्रेण गन्धादीन संपूज्य तदग्रे बलिपात्रं निधाय

**ॐ ऐं ह्रीं श्रीं बटुक भैरवबलिद्रव्याय नमः** इति बलिं संपूज्य

**ॐ ऐं ह्रीं श्रीं एह्येहि देवीपुत्र बटुकनाथ कपिलजटाभारभासुर पिङ्गलत्रिणेत्र ज्वालामुख सर्वविघ्नान् नाशय नाशय सर्वोपचारसहितं बलिं गृह्ण गृह्ण स्वाहा**

इति मन्त्रमुच्चरन्

प्रागुक्तरूपं बटुकं ध्यायन्—

**वामाङ्गुष्ठ**–अनामिकाभ्यां विशेषार्घ्यधारादानेन बलिं उत्सृज्य नाराचमुद्रया ग्राहयित्वा पुष्पांजलिं आदाय

**ॐ ऐं ह्रीं श्रीं बलिदानेन संतुष्टो बटुकः सर्वसिद्धिदः। शान्तिं करोतु मे नित्यं भूतवेतलसेवितः।।**

इति पुष्पांजलिं दत्वा प्रणमेत्

**(इति बटुक बलिः)**

## योगिनी बलिः

**आग्नेयमण्डले यां योगिनीभ्यो नमः** इति योगिनीः आवाह्य ध्यात्वा यां इत्यादिना सकलीकृत्वा योनिमुद्रया प्रणम्य— **यां योगिनीभ्यो नमः**

इदि गन्धादि दीपान्तैः उपचारैः अभ्यर्च्य प्रागवत् बलिपात्रं निधाय

**ॐ ऐं ह्रीं श्रीं योगिनी बलिद्रव्याय नमः** इति संपूज्य

**ॐ ऐं ह्रीं श्रीं सर्वयोगिनीभ्यः सर्व भूतेभ्यः सर्वभूत अधिपाय डाकिनीभ्यः शाकिनीभ्यः त्रैलोक्यनिवासिभ्यः इमां पूजां बलिं गृहण गृहण स्वाहा** इति वामकराङ्गुष्ठ-तर्जनीमध्य अनामाभिः योन्याकारेण योजिताभिः बिन्दुधारादानेन बलिं उत्सृज्य नाराचमुद्रया ग्राहयित्वा पुष्पाञ्जलिं आदाय या काचित् योगिनी रौद्रा सौम्या घोरतर परा, खेचरी भूचरी व्योमचरी भूतास्तु मे सदा।।

**ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा। पाताले वा जलेवा सलिलपवनयोः यत्र कुत्र स्थिता वा, क्षेत्रे पीठोपपीठेषु च कृत पदाः धीपदीपादिकेन।**

**प्रोता देव्यः सदा नः शुभबलि विधिना पान्तु वीरेन्द्रवन्द्याः।।**

पुष्पाञ्जलिं दत्वा योनिमुद्रया प्रणमेत्।

## क्षेत्रपाल बलिः

**अथ निर्ऋतिमण्डले क्षें क्षेत्रपालाय नमः क्षेत्रपाल इहागच्छ आगच्छ** इति समावाह्य क्षामिन्यादि सकलीकृत्य

**ॐ ऐं ह्रीं श्रीं ऊँ क्षें क्षेत्रपालाय नमः**

इति गन्धादि दीपान्तै, उपचारैः अभ्यर्च्य तत्र प्रागवात् बलिपात्रं निधाय।

**क्षेत्रपालबलिद्रव्याय नमः** इति बलि द्रव्य संपूज्य क्षेत्रपालं ध्यायेत्

क्षेत्रपालं ध्यायन्—

**क्षां क्षीं क्षूं क्षै क्षौं क्षः स्थान क्षेत्रपाल, धूपदीपादिसहितं बलिं गृह्ण गृह्ण स्वाहा**–इति वामकराङ्गुष्ठ तर्जनीभ्यां अर्घ्योदक घारादानेन बलिं

उत्सृज्य, नाराचमुद्रया बलिं ग्राहयित्वा—पुष्पाञ्जलिं आदाय।

**ॐ ऐं ह्रीं श्रीं योऽस्मिन् क्षेत्रे निवासी च क्षेत्रपाल सकिंकरः। प्रीतोऽयं बलिदानेन सर्वरक्षां करोतु मे।।**

इति पुष्पाञ्जलिं दत्वा योनिमुद्रया प्रणमेत्।

## सर्वभूतबलिः

उत्तरे मण्डले

**ॐ ऐं ह्रीं श्रीं सर्वभूतेभ्यो नमः**

**सुरासुरनराद्याः सर्वभूताः इहागच्छत आगच्छत इत्यावाह्य नानारूपाः ध्यायन् रां इत्यादिना सकलीकृत्य ह्रीं** इति गन्धादिदीपान्तैः अभ्यर्च्य प्राग्वत् बलिपात्रं निधाय

**ॐ ऐं ह्रीं श्रीं सर्वभूतबलिद्रव्याय नमः** इति संपूज्य

**ॐ ऐं ह्रीं श्रीं ओं ह्रीं सर्वविघ्नकर्तृभ्यो**

**सर्वभूतेभ्यो हुं फट् स्वाहा** इति वामकरस्य अङ्गुलीभिः सर्वाभिः अर्घ्योदक धारादानेन बलिं उत्सृज्य नाराचमुद्रया बलिं ग्राहयित्वा पुष्पाञ्जलिं आदाय।

**भूता ये विविधाकारा दिव्या भूम्यन्तरिक्षगाः। पातालतल संस्थाश्च शिवयोगेन भाविताः।।**

**क्रूराद्याः शतसंख्याका पाषण्डाद्या व्यवस्थिता ध्रुवाद्याः सत्यसंधाश्च शिवयोगेन भाविताः।।**

**तृप्यन्तु प्रीतमनसः भूता गृह्णन्तु इमां बलिं।**

इति पुष्पाञ्जलिं दत्वा योनिमुद्रया प्रणमेत्।

## राजराजेश्वरबलिः

**ऊर्ध्वाम्नायी चेत् राजराजेश्वरबलिं दद्यात्।।**

**सर्वभूतबलिस्थानान् उत्तरतः प्राग्वत् मण्डलं कृत्वा ऐं ह्रीं व्यापकमण्डलाय नमः इति संपूज्य**

**ॐ ऐं ह्रीं श्रीं अमुकस्थान क्षेत्रपाल राजराजेश्वर इमां पूजां बलिं गृह्ण गृह्ण स्वाहा इति मन्त्रेण तं आवाह्य,** षां इत्यादिना सकलीकृत्य, क्षेत्रपालं ध्यात्वा गन्धादिभिः संपूज्य, तत्र प्राग्वत् बलिपात्रं निधाय राजराजेश्वरबलिद्रव्याय नमः इति संपूज्य।

**ॐ ऐं ह्रीं श्रीं अमुकस्थान क्षेत्रपाल राजराजेश्वर इमां पूजां बलिं गृह्ण गृह्ण स्वाहा इति वामकर मध्यमअङ्गुष्ठाभ्यां अर्घ्योदन धारादानेन बलिं उत्सृज्य नाराचमुद्रया बलिं गृहीत्वा पुष्पाञ्जलिं आधाय**

**अनेन बलिदानेन वटुवर्गसमन्वितः। राजराजेश्वरो देवः सर्वदा मे प्रसीदतु।।**

**इति प्रार्थ्य पुष्पाञ्जलिं दत्वा योनिमुद्रया प्रणमेत्।**

इति राजराजेश्वर बलिः

।।श्रीगुरुभ्यो नमः।।

''परिरक्षणीय परिवेदक परमार्थरत्न''

# श्रीविद्यामहार्णवः

(सचित्र-सम्पूर्ण-सपर्यापद्धति ग्रन्थः)

श्रीप्रकाशानन्दनाथ
श्री प्रकाशाम्बा लहरी
चिन्तामणिः

क्रियाशक्तिः

## तृतीयो भागः

## ११. स्तोत्र-प्रकरणम्

दाक्षिणात्य
परमहंस-परिव्राजक
**श्री श्री श्री ज्ञानानन्देन्द्रसरस्वतीयति-विरचितः**

वाराणसी, चेन्नै, हैदराबाद एवं बेंगलूर

# ११. एकादश-मुद्राकल्पतरङ्गः



**१२१ कालकर्णिका**–अंगुष्ठावन्नतौ कृत्वा मुष्ट्योः संलग्नयोर्द्वयोः। तावेवाभिमुखौ कुर्यात् मुद्रैषा-कालकर्णिका।।



**१२२ विस्मयमुद्रा** – दक्षिणा निबिडा मुष्टिर्नासिं कार्पित तर्जनी। मुद्रा विस्मय संज्ञा स्यात् विस्मयावेश कारिणी।।



**१२३ नादःमुद्रा** – मुष्टिरूर्ध्वी-कृतांगुष्ठा दक्षिणा नाद मुद्रिका।।



**१२४ बिन्दुःमुद्रा** – तर्जन्यं-गुष्ठसंयोगादग्रतो बिन्दु मुद्रिका।।



**१२५ लेलिहा**– तर्जना-मध्यमानामाः समं कुर्यादधोमुखम्। अनामायां क्षिपेद्वृद्धां ऋज्वीं कृत्वा कनिष्ठिकाम लेलिहा नाम मुद्रेयं जीवन्यासे प्रकीर्तिता।।



**१२६ महायोनिः**– तर्जन्य-नामिता-मझ्मातनिष्ठा क्रमयोगतः। अंगुष्ठाग्रेतु निक्षिप्य करयो योंजयत्येव कनिष्ठा मूलयोंगतः। अंगुष्ठाग्रेतु निःक्षिप्य महायोनिः प्रकीर्तिता।।



**१२७ मुण्डमुद्रा**– मध्यमेनाथ तर्जन्यां अंगुष्ठाग्रेण योजयेत्। दक्षिणं योजयेत्पाणिं वाममुष्टौ तु साधकः। दर्शयेद्दक्षिणे भागे मुण्डमुद्रेय मुच्यते।।



**१२८ अर्धयोनि** – संयुक्तास्त्वंगुलीः सवा प्रसार्यांगुष्ठपर्वणा। अग्रेण च कनिष्ठाया अग्रेणापि च योजयेत्। करस्य दक्षिणस्येयं अर्धयोनिमः प्रकीर्तिता।।



**१२९ भगः**– द्वयोर्मले त्वंगुष्ठाग्रमंगुलीश्च कनिष्ठयोः। नियोज्य प्रसृती कृत्य द्वेपाणी योजयेत् पुनः। भगमुद्रा च सा ख्याता लक्ष्मी वाणी शिवा प्रिया।



**१३० पुटकः**– सर्वांगुलीनामग्रौघं दक्षिणस्य करस्य च। संयोज्यैकत्र पुरतो निर्देशः पुटकः स्मृतः।।



**१३१ परमीकरणी**– अन्योन्यग्रथितांगुष्ठा प्रसारित परांगुली। महामुद्रेयमुदिता परमीकरणे बुधैः।।



**१३२ भूतिनी** – बद्धा तु योनिमुद्रां वै मध्यमे कुठिले कुरु। अंगुष्ठेन तदग्रेतु मुद्रेयं भूतिनी मता।।

## क्रियाशक्तिः

श्रीगणेशाय नमः    श्रीसरस्वत्यै नमः    श्रीगुरुभ्यो नमः

# श्रीविद्यामहार्णवः

## श्रीप्रकाशानन्दनाथ श्रीप्रकाशाम्बा लहरी

## चिन्तामणिः

## क्रियाशक्तिः

## तृतीयो भागः

## स्तोत्र-प्रकरणम्

### १. वेद खण्ड

#### १. रुद्रप्रश्नः

ओं नमो भगवते रुद्राय।।

नमस्ते रुद्र मन्यव उतोत इषवे नमः। नमस्ते अस्तु धन्वने वाहुभ्यामुत ते नमः। या त इषुश्शिवतमा शिवं बभूव ते धनुः। शिवा शरव्या या तव तया नो रुद्र मृडय। या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तयानस्तनुवा शन्तमया गिरिशन्ताभि चाकशीहि। यामिषुङ्गिरिशन्त हस्ते (१) विबर्ष्यस्त वे। शिवाङ्गिरित्रताङ्कुरु मा हिँ्सीः पुरुषञ्जगत्। शिवेन वचसा त्वा गिरिशाच्छा वदामसि। यथा नस्सर्वमिज्जगदयक्ष्मँ्सुमना असत्। अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्। अहीँ्श्च सर्वाञ्जम्भयन्थ्सर्वाश्च यातुधान्यः। असौ यस्ताम्रो अरुण उत बभ्रुस्सुमङ्गलः। येचेमाँ्रुद्रा अभितो दिक्षु (१) श्रितास्सहस्रशोऽवैषाँ्हेडईमहे। असौ योऽवसर्पति नीलग्रीवो विलोहितः। उतैनङ्गोपा अदृश न्नदृशन्नुदहार्यः। उतैनंविश्वा भूतानि स दृष्टो मृडयाति नः। नमो अस्तु नीलग्रीवाय सहस्राक्षायमीढुषे। अथोये अस्यसत्वानोऽहन्तेभ्योऽकरन्नमः। प्रमुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम्। याश्च ते हस्त इषवः (१) परा ता भगवो वप। अवतत्य धनुस्त्वँ्सहस्राक्षशतेषुधे। निशीर्य शल्यानां

मखा शिवोनस्सुमना भव। विज्यन्धुनः कपर्दिनो विशल्यो बाणवाँ उत। अनेशुन्नस्येषव आभुरस्य निषथिः। या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्मान् विश्वतस्त्वमयख्मया परिब्भुज नमस्ते अस्त्वायुधायानातताय धृष्णवे। उमाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने। परि ते धन्वनो हेति रस्मान्वृणक्तु विश्वतः। अतो य इषुधिस्तवारे अस्मन्नि धेहि तम्।।(४)

नमस्ते अस्तु भगवन्विश्वेश्वाराय महादेवाय त्र्यम्बकाय त्रिपुरान्तकाय त्रिकालाग्निकालाय कालाग्निरुद्राय नीलकण्ठाय मृत्युञ्जयाय सर्वेस्वराय सदाशिवाय श्रीमन्महादेवाय नमः।।

नमो हिरण्यबाहवे सेनान्ये दिशाञ्च पतये नमो नमो वृख्क्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो नम स्सस्पिञ्जराय त्विषीमते पथीनां पतये नमो नमो बभ्लुशाय विव्याधिनेऽन्नानाम्पतये नमो नमो हरिकेशायोयवीतिने पुष्टानां पतये नमो नमो भवस्य हेत्यै जगतां पतये नमो नमो रुद्रायाततताविने ख्वेत्राणां पतये नमोनम स्सूतायाहन्त्यायवनानाम्पतये नमोनमः (५) रोहिताय स्थपतये वृख्क्षाणां पतये नमो नमो मन्त्रिणे वाणिजाय कख्क्षाणां पतये नमो नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो नम उच्चैर्घोषायाक्रन्दयते पत्तीनां पतये नमो नमः कृथ्स्नवीताय धावते सत्वनां पतये नमः।। (६)

नमस्सहमानायननिव्याधिन आव्याधिनीनांपतये नमो नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो नमो निषङ्गिण इषधिमते तस्कराणां पतये नमो नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो नमो अत्र अज्ञेयमूलमिमं मन्त्रमाधुनिकाः पठन्ति। निचेरवे परिचरायारण्यानांपतये नमो नम स्सृकाविभ्यो जिघाँसद्भ्यो मुष्णतां पतये नमो नमोऽसिमद्भ्यो नक्तञ्चरद्भ्यः प्कृन्तानां पतये नमो नम उष्णीषिणे गिरिचराय कृलुञ्चानाम्पतये नमो नमः (७) इषुमद्भ्यो धन्वाविभ्यश्च वो नमो नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च रो नमो नम आयच्छद्भ्यो विसृजद्भ्यश्च रो नमो नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमो नम आसीनेभ्यश्शयानेभ्यश्च वो नमो नम स्स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नम स्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो नम स्सभाभ्यस्सभापतिभ्यश्च वो नमो नमो अश्वेभ्योऽश्वपतिभ्यश्च वो नमः (८)

नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम उगणाभ्यस्तृँहतीभ्यश्च वो नमो नमो गृथ्सेभ्यो गृथ्सपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमो महद्भ्यः ख्वुल्लकेभ्यश्च वो नमो नमो रथिभ्योऽरथेभ्यश्च वो नमो नमो रतेभ्यः (९) रथपतिभ्यश्च वो नमो नम स्सेनाभ्य स्सेनानिभ्यश्च वो नमो नमः ख्वत्तृभ्यस्सङ्ग्रहीतृभ्यश्च वो नमो नम स्तख्क्षभ्यो रथकारेभ्यश्च वो नमो नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो नमो मृगयुभ्यश्श्वनिभ्यश्च वो नमो नम श्श्वभ्य श्श्वपतिभ्यश्च वो नमः।। (१०)

नमो भवाय च रुद्राय च नमश्शर्वाय च पशुपतये च नमो नीलग्रीवायच शितिकण्ठायच नमः कपर्दिने च व्युप्तकेशाय च नमस्सहस्राख्षाय च शतधन्वने च नमो गिरिशाय च शिपिविष्टाय च नमो मीढुष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय चन मो बृहते च वर्षीयसे च नमो वृद्धाय च सँवृध्वने च (११) नमो

अग्रियाय च प्रथमाय च नम आशवे चाजिराय च नम श्शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नमस्स्रोतस्याय च द्वीप्याय च।।(१२)

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजायचापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्नियाय च नमस्सोभ्याय च प्रतिग्रर्याय च नमो याम्याय च खेम्याय च नम उर्वर्याय च खल्याय च नमश्लोक्याय चावसान्याय च नमो वन्याय च कख्याय च नमश्श्रवाय च प्रतिश्रिवाय च (१३) नम आशुषेणाय चाशुरथाय च नमश्शूराय चावभिन्दते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमश्श्रुताय च श्रतसेनाय च।। (१४)

नमो दुन्दुभ्याय चाहनन्याय च नमो घृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषङ्गिणे चेषुधिमिते च नमस्तीख्णेषवे चायुधिने च नमस्स्वयुधाय च सुधन्वने च नमास्स्रुत्याय च पथ्याय च नमः काठ्याय च नीप्याय च नमस्सूद्याय च सरस्याय च नमो नाद्याय च वैशन्ताय च (१५) नमः कूप्याय चावट्यायच नमो वर्ष्याय चावर्ष्याय च नमो मेध्याय च विद्युत्याय च नम ईध्रियाय चातप्याय च नमो वात्यायच रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च।।(१६)

नमस्सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमश्शङ्गाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय च दूरेवधाय च नमो हन्त्रे च हनीयसे च नमो वृख्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमश्शम्भवे च मयोभवे च नमश्शङ्कराय च मयस्कराय च नम श्शिवाय च शिवितराय च (१७) नमस्तीर्थ्याय च कूल्याय च नमः पार्याय चावार्याय च नमः प्रतरणाय चोत्तरणाय च नम आतार्याय चालाद्याय च नमश्शष्प्याय च फेन्याय च नमस्सिकत्याय च प्रवाह्याय च।।(१८)

नम इरिण्याय च प्रपथ्याय च नमः किँ्शिलाय च ख्षयणाय च नमः कपर्दिने च पुलस्तये च नमो गोष्ठ्याय च गृह्याय च नमस्तल्प्याय च गेह्याय च नमः काट्याय च गह्वरेष्ठाय नमो ह्वदय्याय च निवेष्प्याय च नमः पाँ्सव्याय च रजस्याय च नमश्शुष्क्याय च हरित्याय च ननो लोप्याय चोलप्याय च (१९) नम ऊर्व्याय च सूर्म्याय च नमः पर्ण्याय च पर्णशद्याय च नमोऽपगुरमाणाय चाभिघ्निते च नम आक्खिदते च प्रक्खिदते च नमो वः किरिकेभ्यो देवानाँ्हृदयेभ्यो नमो विख्षीणकेभ्यो नमो बिचिन्वत्केभ्यो नम आनिर्हतेभ्यो नम आमीवत्केभ्यः।।(२०)

द्रापे अन्धसस्पते दरिद्रन्नीललोहित। एषां पुरुषाणा मेषां पशूनां माभेर्माऽरो मो एषा ङ्किञ्चनाममत्। या तेरुद्र शिवा तनूश्शिवा विश्वाहभेषजी। शिवा रुद्रस्य भेषजी तया नो मृड जीवसे। इमाँ्रुद्राय तवसे कपर्दिने ख्षयद्वीराय प्रभरामहे मतिम्। यथा नश्शमसद् द्विपदेचतुष्पदे विश्वं पुष्टङ्गामे अस्मिन् (१२) अनातुरम्। मृडा नो रुद्रोत नो मयस्कृधि ख्षयद्वीराय नमसा विधेम ते। यच्छञ्च योञ्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ। मानो महान्त मुत मानो अर्भकं मान उख्षन्त मुत मा न उख्षितम्। मा नोवधीः पितरं मोत मातरं प्रिया

मानस्तनुवः (२२) रुद्र रीरिषः। मानस्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषु रीरिषः। वीरान्मानो रुद्र भामितोवधीर रहविष्मन्तो नमसा विधेम ते। आरात्ते गोघ्न उत पुरुषघ्ने ख्खयद्वीराय सुम्नमस्मे ते अस्तु। रख्षा च नो अधिचि देव ब्रह्यधा च नश्शर्म यच्छद्विबरहाः। स्तुहि (२३) श्रुतङ्गर्तसदँयुवानं मृगन्न भींममुपहत्लुमुग्रम्। मृडा जरित्रे रुद्र स्तवानो अन्यन्ते अस्मन्निवपन्तु सेनाः। परिणो रुद्रस्य हेतिर्वृणक्तु परित्वेषस्य दुर्मति रघायोः। अवस्थिरि मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय। मीढुष्टम शिवतम शिवो न स्मुमना भव। परमेवृख्ष, आयुधन्निधाय कृत्तिंवसान आचर पिनाकम् (२४) बिभ्रदागहि। विकिरिदविलोहित नमस्ते अस्तु भगवः। यास्ते सहस्र्ँहेतयोऽन्यमस्मन्निवपन्तु ताः। सहस्त्राणि सहस्त्रधा बाहुवोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखा कृधि। (२५)

**सहस्त्राणि सहस्त्रशो ये रुद्रा अधिभूम्याम्। तेषाँ्सहस्त्रयोजनेऽव धन्वानि तन्मसि। अस्मिन्महत्यर्णवेऽन्तरिख्षे भवा अवि। नीलग्रीवाश्शितिकण्ठा दिवँ्रुद्रा उपश्रिताः ये वृख्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः। ये भूताना मधिपतयो विशिखासः कपर्दिनः। ये अन्नेषु विविध्यन्ति पात्रेषु विवतो जनान्। ये पथांपथिरख्षय ऐलबृदायव्युधः। ये तीर्थानि (२६) प्रचरन्ति सृकावन्तो निषङ्गिणः। य एतावन्तश्च भूयाँ्सश्च दिशो रुद्रा वितस्थिरे। तेषाँ्सहस्त्रयोजनेऽव धन्वानि तन्मसि। नमो रुद्रेभ्यो ये पृथिव्यांँयेऽन्तरिख्षे ये दिवि येषामन्नँवातो वर्षमिषवस्तेभ्यो दशप्राचीर्दशदख्षिणा दशप्रतीची र्दशोदीचीर्दशोर्ध्वा स्तेभ्यो नमस्तेनो मृडयन्तु ते यन्द्विष्मो यश्च नोद्वेष्टितँवो जंभे दधामि। (२७) (११)**

**नमस्तेरुद्र नमो हिरण्यबाहवे नमस्सहमानाय नम आव्याधिनीभ्यो नमो भवाय नमो ज्येष्ठाय नमो दुन्दुभ्याय नमस्सोमाय नम इरिण्याय द्रापे सहस्त्राण्ये कादश (११) नमस्ते रुद्र नमो भवाय द्रापे सप्तविँ्शतिः (२७) नमस्ते रुद्र तँवो जंभे दधामि।।**

हरिः ओ (३) म्।।

।।रुद्रप्रश्नस्समाप्तः।।

## २. पुरुष सूक्तं

**१. ह्रीं श्रीं क्लीं ॐ नमो नारायणाय क्लीं नमः**

**२. ह्रीं श्रीं क्लीं सहस्त्रशीर्षा पुरुषः कएईलह्रीं सहस्त्राक्षः सहस्त्रपात् हसकहलह्रीं सभूमिं विश्वतो-वृत्वा सकलह्रीं अत्यतिष्टद्दशाङ्गुलम् क्लीं नमः।**

**३. ह्रीं श्रीं क्लीं पुरुष एवेदँ्सर्वम्-कएईलह्रीं यद्भूतं यच्च भव्यम् हसकहलह्रीं उतामृतत्वस्येशानः सकलह्रीं यदन्नेनानिरोहति क्लीं नमः।**

४. ह्रीं श्रीं क्लीं एतावानस्य महिमा कएईलह्रीं अतो ज्यायाँश्चपूरुषः। हसकहलह्रीं पादोऽस्य विश्वा भूतानि सकलह्रीं त्रिपादस्यामृतं दिवि क्लीं नमः।

५. ह्रीं श्रीं क्लीं त्रिपादूर्ध्व उदैत्पुरुषः कएईलह्रीं पादोऽस्येहाऽऽभवात्पुनः हसकहलह्रीं ततो विष्वङ्व्यक्रामत् सकलह्रीं साशनानशने अभि क्लीं नमः।

६. ह्रीं श्रीं क्लीं तस्माद्विराडजायत कएईलह्रीं विराजो अधि पुरूषः हसकहलह्रीं सजातो अत्यरिच्यत सकलह्रीं पश्चाद्भूमिमथो पुरः क्लीं नमः।

७. ह्रीं श्रीं क्लीं यत्पुरुषेण हविषा कएईलह्रीं देवा यज्ञमतवन्वत हसकहलह्रीं वसन्तो अस्यासीदाज्यम् सकलह्रीं ग्रीष्म इध्मश्शरदधविः क्लीं नमः।

८. ह्रीं श्रीं क्लीं सप्तास्यासन्परिघयः कएईलह्रीं त्रिःसप्तसमिघः कृताः हसकहलह्रीं देवा यद्यज्ञंतन्वानाः सकलह्रीं अबध्नन् पुरुषं पशुम् क्लीं नमः।

९. ह्रीं श्रीं क्लीं तं यज्ञं वर्हिषि प्रौक्षन् कएईलह्रीं पुरुषं जातमग्रतः सहकहलह्रीं तेन देवा अयजन्त सकलह्रीं साध्या ऋषयश्च ये क्लीं नमः।

१०. ह्रीं श्रीं क्लीं तस्माद्यज्ञात्सर्वहुतः कएईलह्रीं संभृतं पृषदाज्यम् हसकहलह्रीं पशूँस्ताँश्चक्रे वायव्यान् सकलह्रीं आरण्यान् ग्राम्यांश्चये क्लीं नमः।

११. ह्रीं श्रीं क्लीं तस्माद्यज्ञात्सर्वहुतः कएईलह्री ऋचः सामानि जज्ञिरै हसकहलह्रीं छन्दाँसि जज्ञिरे तस्मात् सकलह्रीं यजुस्तस्मादजायत क्लीं नमः।

१२. ह्रीं श्रीं क्लीं तस्मादश्वा अजायन्त कएइलह्रीं ये के चोभयादतः हसकहलह्रीं गावोह जज्ञिरे तस्मात् सकलह्रीं तस्माज्जाता अजावयः क्लीं नमः।

१३. ह्रीं श्रीं क्लीं यत्पुरुपं व्यदधुः कएईलह्रीं कतिधा व्यकल्पयन् हसकहलह्रीं मुखंकिमस्य कौ बाहू सकलह्रीं कावूरूपादावुच्यते क्लीं नमः।

१४. ह्रीं श्रीं क्लीं ब्राह्मणोऽस्यमुखमासीत् कएईलह्रीं बाहुराजन्यः कृतः हसकहलह्रीं ऊरू तदस्य यद्वैश्यः सकलह्रीं पद्भ्याँशूद्रो अजायत क्लीं नमः।

१५. ह्रीं श्रीं क्लीं चन्द्रमा मनसो जातः कएईलह्रीं चक्षोः सूर्यो अजायत-हसकहलह्रीं मुखादिन्द्रश्चाग्निश्च सकलह्रीं प्राणाद्वायुरजायत क्लीं नमः।

१६. ह्रीं श्रीं क्लीं नाभ्याआसीदन्तरिक्षम् कएईलह्रीं शीर्ष्णो द्यौः समवर्तत हसकहलह्रीं पद्भ्यां भूमिर्दिशः श्रोत्रात् सकलह्रीं तथा लोकाँअकल्पयन् क्लीं नमः।

१७. ह्रीं श्रीं क्लीं वेदाहमेतं पुरुषं महान्तम् कएईलह्रीं आदित्यिवर्णं तमसस्तु पारे हसकहलह्रीं सर्वाणि रूपाणि विचित्यधीरः सकलह्रीं नामानि कृत्वाऽभिवदन् यदास्ते क्लीं नमः।

१८. ह्रीं श्रीं क्लीं धाता पुरस्ताद्यमुदाजहार कएईलह्रीं शक्रः प्रविद्वान्प्रदिशश्चतस्रः हसकहलह्रीं तमेवं विद्वानमृत इह भवति सकलह्रीं नान्यः पन्था अयनाय विद्यते क्लीं नमः
१९. ह्रीं श्रीं क्लीं यज्ञेन यज्ञमयजन्त देवाः कएईलह्रीं तानिधर्माणि प्रथमान्यासन् हसकहलह्रीं तेह नाकं महिमानः सचन्ते सकलह्रीं यत्र पूर्वे साध्या सन्ति देवाः क्लीं नमः।
२०. ह्रीं श्रीं क्लीं ओं नमो नारायणाय वीं नमः।

## ३. श्रीसूक्तम्

१. ह्रीं श्रीं हिरण्यवर्णां हरिणीं कएईलह्रीं सुवर्णरजतस्रजां हसकहलह्रीं चन्द्रांहिरण्मयीं लक्ष्मीं सकलह्रीं जातवेदो म आवह श्री नमः।
२. ह्रीं श्रीं तां म आवह जातवेदो कएईलह्रीं लक्ष्मीमनपगामिनीम् हसकहलह्रीं यस्यां हिरण्यं बिन्दैयं सकलह्रीं गामश्वं पुरुषानहम् श्रीं नमः।
३. ह्रीं श्रीं अश्वपूर्वा रथमध्यां कएईलह्रीं हस्तिनाद प्रबोधिनीम् हसकहलह्रीं श्रियं देवीमुपह्वये सकलह्रीं श्रीर्मा देवीजुषताम् श्रीं नमः।
४. ह्रीं श्रीं कांसोस्मितां हिरण्यप्राकाराम् कएईलह्रीं आर्द्रा ज्वलन्तीं तृप्तां तर्पयन्तीं हसकहलह्रीं पद्मेस्थितां पद्मवर्णां सकलह्रीं तामिहोपह्वये श्रियम् श्रीं नमः
५. ह्रीं श्रीं चन्द्रां प्रभासां यशसा ज्वलन्तीं कएईलह्रीं श्रियं लोके देवजुष्टामुदाराम्-हसकहलह्रीं तां पद्मिनीम् शरणमहं प्रपद्ये सकलह्रीं अलक्ष्मीर्मे नश्यतां त्वां वृणे श्री नमः।
६. ह्रीं श्रीं आदित्यवर्णे तपसोधिजातो कएईलह्रीं वनस्पतिस्तव वृक्षोऽथ बिल्वः हसकहलह्रीं तस्य फलानि तपसानुदन्तु सकलह्रीं मायान्तरायाश्च बाह्या अलक्ष्मीः श्रीं नमः।
७. ह्रीं श्रीं उपैतु मां देवसखः कएईलह्रीं कीर्तिश्च मर्णिना सह हसकहलह्रीं प्रादुर्भूतोऽस्मिन् राष्ट्रेऽस्मिन् सकलह्रीं कीर्तिमृद्धिं ददातु मे श्रीं नमः।
८. ह्रीं श्रीं क्षुत्पिपासाऽमलां ज्येष्ठां कएईलह्रीं अलक्ष्मीं नाशयाम्यहम् हसकहलह्रीं अभूतिमसमृद्धिं च सकलह्रीं सर्वां निर्णुद मे गृहात् श्रीं नमः।
९. ह्रीं श्रीं गन्धद्वारां दुराधर्षां कएईलह्रीं नित्यपुष्टां करीषिणीं हसकहलह्रीं ईश्वरींसर्वभूतानां सकलह्रीं तामिहोपह्वये श्रियम् श्रीं नमः।
१०. ह्रीं श्रीं मनसः काममाकूतिं कएईलह्रीं वाचः सत्यमशीमहि हसकहलह्रीं पशूनां रूपमन्नस्य सकलह्रीं मयि श्रीः श्रयतां यशः श्रीं नमः।

१ १. ह्रीं श्रीं कर्दमेन प्रजा भूता कएईलह्रीं मयि संभव कर्दम हसकहलह्रीं श्रियं वासय मे कुले सकलह्रीं मातरं पद्ममालिनीं श्रीं नमः।

१ २. ह्रीं श्रीं आपः सृजन्तु स्निग्धानि कएईलह्रीं चिक्लीत वस मे गृहे हसकहलह्रीं निच देवीं मातरँ सकलह्रीं श्रियं वासय मे कुले श्रीं नमः।

१ ३. ह्रीं श्रीं आर्द्रां पुष्करिणीं पुष्टिं कएईलह्रीं सुवर्णां हेममालिनी हसकहलह्रीं सूर्यां हिरण्मयीं लक्ष्मीं सकलह्रीं जातवेदो म आवह श्रीं नमः।

१४. ह्रीं श्रीं आर्द्रा यः करिणीं यष्टिं कएईलह्रीं पिङ्गलां पद्ममालिनीं हसकहलह्रीं चंन्द्रां हिरण्मयीं लक्ष्मीं सकलह्रीं जायवेदो म आवह श्रीं नमः।

१५. ह्रीं श्रीं तां म आवह जातवेदः कएईलह्रीं लक्ष्मीमनपगामिनीम् हसकहलह्रीं यस्यां हिरण्यं प्रभूतं सकलह्रीं गावोदास्योश्वान् विन्देयं पुरुषानहम श्रीं नमः।

१६. ह्रीं श्रीं या लक्ष्मी सिन्धु संभवा कएईलह्रीं भूति धेनु पुरो वसुः हसकहलह्रीं पद्मा विश्वा वसुर्देवी सकलह्रीं सदानो जुषतां गृहं श्रीं नमः।

१७. ह्रीं श्रीं पद्मानने पद्मऊरू कएईलह्रीं पद्माक्षी पद्मसंभवे हसकहलह्रीं तन्मे भजसि पद्माक्षी सकलह्रीं येन सौख्यं लभाम्यहं श्रीं नमः।

१८. ह्रीं श्रीं अश्वदायि गोदायी कएइलह्रीं धनदायि महाधने हसकहलह्रीं धनं मे जुषतां देवि सकलह्रीं सर्व कामाश्च देहि मे श्रीं नमः।

१९. ह्रीं श्रीं भद्रं नो अपिवातय मनाः कएईलह्रीं मरुतां ओजसे स्वाहा हसकहलह्रीं इन्द्रो विश्वस्य राजति सकलह्रीं शंनो भवद्विपदे शंचतुष्पदे श्रीं नमः।।

## ४. नारायणसूक्तम्

तच्छँयोरावृणीमहे। गातुँयज्ञाय। गातुँयज्ञपयये। दैवीस्वस्तिरस्तुनः। स्वस्तिर्मानुषेभ्यः। ऊर्ध्वञ्जिगातुभेषजम्। शन्नो अस्तु द्विपदे। शञ्चतुष्पदे।।

ओम् शान्तिश्शान्तिः।।

सहस्त्रशीर्षन्देवँविश्वाख्यं विश्विशम्भुवम्। विश्वन्नारायणन्देवमख्यरं परमं पदम्। विश्वतः परमान्नित्यं विश्वन्नारायण ँहरिम्। विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति। पतिं विश्वस्यात्मेश्वर ँशाश्वत ँशिवमच्युतम्। नारायणं महाज्ञेयं विश्वात्मानं परायणम्। नारायणपरो ज्योतिरात्मा नारायणः परः नारायणपरंब्रह्म तत्वन्नारायणः परः। नारायणपरोध्याताध्यानन्नारायणः परः। यच्च किञ्चिज्जगथ्सर्व दृश्यते श्रूयतेऽपिवा (१) अन्तर्बहिश्चतथ्सर्वं व्याप्य नारायणस्थितः। अनन्तमव्ययङ्कवि ँसमुद्रेऽन्तंविश्वशम्भुवम्। पद् मकोशप्रतीकाश ँहृदयञ्चाप्यधोमुखम्। अधोनिष्ठ्या वितस्त्यान्ते

नाभ्यामुपरि तिष्ठति। ज्वालमालाकुलं भातीविश्वस्यायतनमहत्। सन्तत्ँशिलाभि स्तुलम्बत्याकोशसन्निभम्। तस्यान्ते सुषिर ँसूख्ष्मन्तस्मिन्थ्सर्वंप्रतिष्ठितम्। तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः। सोऽग्रमुग्विभजन्तिष्ठन्नाहारमजरः कविः। तिर्य गूर्ध्वमघश्शायी रश्मयस्तस्य सन्तता। सन्तापयति स्वन्देहमापादतलमस्तगः। तस्य मध्ये वह्निशिखा अणीयोर्ध्वाव्यवस्थितः। नीलतोयदमध्यस्था द्विद्युल्लेखेव भास्वरा। नीवारशूकवत्तन्वी पीतांभास्वत्यणूपमा। तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः। सब्रह्म सशिवस्सहरिस्सेन्द्रस्सोऽख्वरः परमस्स्वराट्।। (२)

ऋतँसत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्व रेतं विरूपाखं विश्वरूपाखं विश्वरूपाय वै नमो नमः।।

नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्।।

विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजा ँसि यो अस्कभायदुत्तर ँसधस्थँविचक्रमाणस्त्रेधोरुगायो विष्णो रराटमसि विष्णोः पृष्टमसि विष्णो श्शज्ञ्स्त्रेस्थो विष्णोस्स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवेत्वा।।

## ५. भूसूक्तम्

भूमिर्भूम्नाद्यौर्वरिणाऽन्तरिख्षं महित्वा। उपस्थेते देव्यदितेऽग्निमन्नादमन्नाद्यायादधे। आऽयङ्गौः पृश्निरक्रमीदसनन्मातरं पुनः। पितरञ्च प्रयन् थ्सुवः। त्रि ँशद्धामविराजति वाक्पतङ्गाय शिश्रिये। प्रत्यस्यवहद्युभिः। अस्य प्राणादपानत्यन्तश्चरति रोचता। व्यक्ख्यन्महिषस्सुवः। यत्त्वाक्रुद्धः परोवपमन्युनायदवर्त्या। सुकल्पमग्ने तक्त्व पुनस्त्वोद्दीपयामसि। यत्तेमन्युपरोप्तस्य पृथिवीमनुदध्वसे। आदित्याविश्वे तद्देवा वसवश्च समाभरन्। मनोज्योतिर्जुषतामाज्यँविच्छिन्नँयज्ञ ँसमिमन्दधातु। बृहस्पतिस्तनुतामिमन्नो विश्वेदेवा इहमादयन्ताम्।।

मेदिनीदेवी वसुन्धरा स्याद्वसुधा देवी वासवी। ब्रह्मवर्चसः पितृणां श्रोत्रञ्चक्षुर्मनः।। देवी हिरण्यगर्भिणी देवी प्रसोदरी। रसने सत्यायने सीद।। समुद्रवदी सावित्रीहनो देवी मह्यकी। महाधरणी महोऽर्यतिस्थ। श्रृङ्गेश्रृङ्गे यज्ञेयज्ञे विभीषणी। इन्द्रपत्नी व्याजनी सुरसितइह।। वायुपरी जलशयनी स्वयन्धारा सत्यन्धोपरि मेदिनी। सोपरिधत्तङ्गाय।। विष्णुपत्नीं महीं देवीं माधवप्रियाम्। लक्ष्मीप्रियसखीं देवीं नमा ्युतवल्लभाम्।। धनुर्धरायैविद्महे सर्वसिध्यैच धीमहि। तन्नो धरा प्रचोदयात्।। इक्षुशालियवसस्य फलाढ्यां पारिजाततरुशोभितमूले। स्वर्णरत्नमणिमण्टपमध्ये चिन्तयेत् सकललोकधरित्रीम् श्यामां विचित्रां नवरत्नभूषितां चतुर्भुजां तुङ्गपयोधरान्विताम्। इन्दीवराक्षीं नवशालिमञ्जरीं शुकं दधानां वतुधां भजामहे।। सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रासखायस्सरख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधिवाचि।।

## ६. दुर्गासूक्तम्

जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। सनः पर्षदतिदुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः।। तामग्निवर्णां तपसा ज्वलंतीं वैरोचनीं कर्मफ़लेषु जुष्टाम्। दुर्गोंदेवीँ शरणमहं प्रपद्ये सुतरसितरसे नमः।। अग्ने त्वं पारयानव्यो अस्मान्थ्स्वस्तिभिरतिदुर्गाणि विश्वा। पूश्च पृथ्वीबहुलान ऊर्वी भवा तोकाय तनयाय शँयोः।। विश्वानिनो दुर्गहा जातवेदस्मिन्धुन्ननावा दुरितातिपरर्षि। अग्ने अत्रिबन्म नसा गृणानोऽस्माकं बोध्यविता तनूनाम्।। पृतनाजितँ सहमानमुग्रमग्निँ हुवेम परमाथ्सधस्थात्। सनः पर्षदतिदुर्गाणि विश्वा ख्वामद्देवो अतिदुरितात्यग्निः।। प्रत्लोषिकमीड्यो अध्वरेषुसनाच्च होता नव्यश्च सथ्सि। स्वाञ्चाग्ने तनुवं पिप्रयस्वास्मभ्यञ्च सौभगमायजस्व।। गोभिर्जुष्टमयुजोनिषिक्तं तवेन्द्रबिष्णोरनुसञ्चरेम। नाकस्य पृष्ठमभिसँवसानो वैष्णवीं लोक इहमादयान्ताम्।। दुरितात्यग्निश्चत्वारिच।।

## ७. सुधासूक्तम पौराणिकम्

सुधासूक्त प्रवक्ष्यामिसुश्रोणी प्रियसुन्दरी । समुद्रमध्यदानेतु-क्षीरोदेसागरोद्भवे ।।१।।
तत्रोत्पन्नासुधादेवी कन्यकारूपधारिणी । अष्टादशभुजादेवीरक्तान्तायतलोचना ।।२।।
शङ्गं खङ्गं धनु श्चैवकपालं परशुवरम् । शक्तिं तथागदां घण्टां दधाना स्वोन्तरैर्भजैः ।।३।।
चक्रं मुष्टिं शरंचैव तोमरं मुशलं हलं । अभयं भिण्डिपालं च त्रिशूलं दक्षिणैः करैः ।।४।।
त्रिणेत्र दीर्घ तन्वङ्गी कालाग्नि शदृशंप्रभा । मण्डलं वेष्टयित्वात् फेनामृत विभूषणा ।।५।।
गोमूत्रा क्षीरवर्णाभा बहुरूपा सुधापरा । त्रायन्त्या सुरा न्नित्या देवानामभयङ्करी ।।६।।
यासुधायामहादेवी योमदस्समहेश्वरः । योवर्णा स्सभवे द्वह्मयोगन्धस्सजनार्दना ।।७।।
इच्छायां मन्मथोदेवोलालने रत्नभैरवा । स्वादौ स्समास्थित स्सूर्यशशंभो ब्रह्महुताशनौ ।।८।।
क्षारेतु वैमरू ह्वेव फेनोवै भैरवस्मृतः । तदाह्लादेपरा शक्तिरानन्दो मोक्ष उच्यते ।।९।।
द्रव्यं गङ्गासमाख्यातं घटं तत्सप्तसागरम् । घटमूलेस्थितो ब्रह्म घटमध्ये तु माधवः ।।१०।।
घटकण्ठे स्थितशशंभु घटाग्रे सर्वदेवता । घटमूले स्थितो वाणी घटमध्येरमास्थिता ।।११।।
घटकण्ठे स्थितागौरी घटाग्रे सर्वदेवता । द्रव्यं त्वं सुरलोकेस्तु त्रैलोक्यस्यप्रियङ्करी ।।१२।।
एह्येहि वारूणीदेवी महासिद्धि कुरुप्रिये । अपवित्रं परित्यज्य साधके सिद्धिमर्प्यय ।।१३।।
सर्वमन्त्रमयीदेवी सुधादेवी नमोस्तुते ।। एवं अभिमन्त्रय।।

इतिविशेषार्ध्य विधिः विशेषार्ध्यपात्रं शङ्ख चनचालये।

## ८. भावनोपनिषत्

स्वाविद्यापदतत्कार्यं श्रीचक्रोपरि भासुरम्। बिन्दुरूपशिवाकारं रामचन्द्रपदं भजे।।१।।

ॐ भद्रं कर्णेभिश्शृणुयाम देवाः, भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिः, व्यशेम देवहितं यदायुः ।
स्वस्ति न इन्द्रो वृद्धश्रवाः, स्वस्ति नः पूषा विश्ववेदाः ,
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः, स्वस्ति नो बृहस्पतिर्दधातु ।

।।ओं शान्तिश्शान्तिश्शान्तिः।।

हरिः ॐ।। आत्मानमखण्डमण्डलाकारमावृत्य सकलब्रह्माण्डमण्डलं स्वप्रकाशं ध्यायेत्। श्रीगुरुः सर्वकारणभूता शक्तिः।।१।। तेन नवरन्ध्ररूपो देहः।।२।। नवचक्ररूपं श्रीचक्रम्।।३।। वाराही पितृरूपा कुरुकुल्ला बलिदेवता माता।।४।। पुरुषार्थाः सागराः।।५।। देहो नवरत्नद्वीपः।।६।। त्वगादिसप्तधातुरोमसंयुक्तः।।७।। संकल्पाः कल्पतरवस्तेजः कल्पकोद्यानम्।। रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड्तवः।।९।। ज्ञानमर्घ्यं ज्ञेयं हविर्ज्ञाता होता ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम्।।१०।। नियतिः शृङ्गारादयो रसा अणिमादयः।।११।। कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमया ब्राहम्याद्यष्ट शक्तयः।।१२।। आधारनवकं मुद्राशक्तयः।। पृथिव्यप्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थानि मनोविकारः कामाकर्षिण्यादिषोडश शक्तयः।।१४।। वचनादानगमनविसर्गानन्दहानोपादानोपेक्षाख्य-बुद्धयोऽनङ्गकुसुमाद्यष्टौ।।१५।। अलंबुसा कुहूर्विश्वोदरा वारणा हस्तिजिह्वा यशोवती पयस्विनी गान्धारी पूषा शंखिनी सरस्वतीडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः सर्वसंक्षोभिण्यादिचतुर्दश शक्तयः।।१६।। एता दश वह्निकलाः सर्वज्ञत्वाद्यन्तर्दशारदेवताः। शीतोष्णसुखदुः-खेच्छासत्वरजस्तमोगुणा वशिन्यादिशक्तयोऽष्टौ। शब्दस्पर्शरूपरसगन्धाः पञ्चतन्मात्राः पञ्च पुष्पबाणा मन इक्षुधनुः। वश्यो बाणो रागः पाशः। द्वेषोऽङ्कुशः। अव्यक्त महत्तत्वाहंकार इति कामेश्वरी-वज्रेश्वरी-भागमालिन्योऽन्तस्त्रिकोणगा देवताः। पञ्चदशतिथिरूपेण कालस्य परिणामा-वलोकनस्थितिः पञ्चदशनित्याः। श्रद्धानुरूपा धीर्देवता। तयोः कामेश्वरी सदानन्दघना परिपूर्णस्वात्मैक्य-रूपा देवता। सलिलमिति लौहित्यकारणं सत्त्वम्। कर्तव्यमकर्तव्यमिति भावनायुक्त उपचारः। अस्ति नास्तीति कर्तव्यताउपचारः। बाह्याभ्यन्तःकरणानां रूपग्रहणयोग्यतास्त्वित्यावाहनम्। तस्य बाह्याभ्यन्तःकरणानामेकरूपविषयग्रहणमासनम्। रक्तशुक्लपदैकीकरणं पाद्यम्। उज्ज्वलदामोदा-नन्दासनदानमर्घ्यम्। स्वच्छं स्वतःसिद्धमित्याचमनीयम्। चिच्चन्द्रमयीति सर्वाङ्गस्रवणं स्नानम्।

चिदग्निस्वरूपपरमानन्दशक्तिस्फुरणं वस्त्रम्। प्रत्येकं सप्तविंशतिधा भिन्नत्वेनेच्छाज्ञानक्रियात्मक-ब्रह्मग्रन्थिमद्रसतन्तुब्रह्मनाडी ब्रह्मसूत्रम्। स्वव्यतिरिक्तवस्तुसङ्गरहितस्मरणं विभूषणम्। सच्चित्सुखपरिपूर्णतास्मरणं गन्धः। समस्तविषयाणां मनसः स्थैर्येणानुसन्धानं कुसुमम्। तेषामेव सर्वदा स्वीकरणं धूपः। पवनावच्छिन्नोर्ध्वज्वलनसच्चिदुल्काकाशदेहो दीपः। समस्तयातायातवर्ज्यं नैवेद्यम्। अवस्थात्रयाणामेकीकरणं ताम्बूलम्। मूलाधारादाब्रह्मरन्ध्रपर्यन्तं ब्रह्मरन्ध्रादामूलाधारपर्यन्तं गतागतरूपेण प्रादक्षिण्यम्। तुर्यावस्था नमस्कारः। देहशून्यप्रमातृतानिमज्जनं बलिहरणम्। सत्वमस्ति कर्तव्यमकर्तव्यमौदासीन्यनित्यात्मविलापनं होमः। स्वयं तत्पादुकानिमज्जनं परिपूर्णध्यानम्। एवं मुहूर्तत्रयं (मुहूर्तद्वयं मुहूर्तमात्रं वा) भावनापरो जीवन्मुक्तो भवति। तस्य देवतात्मैक्यसिद्धिः। चिन्तितकार्याण्ययत्नेन सिध्यन्ति। स एवं शिवयोगीति कथ्यते। कादिमतेनान्तश्चक्र भावना प्रतिपादिता। जीवन्मुक्तो भवति। य एवं वेद।। इत्युपनिषत्।। ॐ भद्रं कर्णेभिरिति शान्तिः।।

हरिः ॐ तत्सत्।।

इत्यथर्वणवेदे भावनोपनिषत्संपूर्णा।।

## ९. *भावनोपनिषत्प्रयोगः*

**अथ भावनोपनिषदा मुक्त्यै या भावनाः कथिताः। भास्कररायो रचयति तासामेवं प्रयोगविधिम्।।**

मूलेन प्राणनायम्य,

**ऋष्यादिन्यासत्रयं कृत्वा।। गुरुध्यानम्।। गुरुत्रयम्।।**

### *न्यासः*

**अस्य श्रीभावनोपनिषत्महामन्त्रस्य ३ आनन्दभैरवाय ऋषये नमः-शिरसि। ३ पङ्क्त्यै छन्दसे नमः-मुखे। श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः–हृति। ३ ऐं बीजाय नमः–गुह्ये। ३ सौः शक्तये नमः–पादयोः। ३ क्लीं कीलकाय नमः–नाभौ।** (उक्तबीजशक्तिकीलकानि नाभिगुह्यपादेषु प्रायशो न्यस्तव्यानीति, मूलविद्याखण्डत्रयेणापि न्यस्तव्यानीति च केषांचिदभिमतम्)। ३ श्रीललितामहात्रिपुरसुन्दरीप्रसादसिद्ध्यर्थे जपे विनियोगः—करसम्पुटे।।

**ऐं ह्रीं श्रीं मूलविद्यया सर्वाङ्गे त्रिः व्यापकम्।।**
**ऐं ह्रीं श्रीं क ए ई ल ह्रीं अङ्गुष्ठाभ्यां नमः।।**
**ऐं ह्रीं श्रीं ह स क ह ल ह्रीं तर्जनीभ्यां नमः।।**
**ऐं ह्रीं श्रीं स क ल ह्रीं मध्यमाभ्यां नमः।।**
**ऐं ह्रीं श्रीं क ए ई ल ह्रीं अनामिकाभ्यां नमः।।**

ऐं ह्लीं श्रीं ह स क ह ल ह्लीं कनिष्ठिकाभ्यां नमः।।
ऐं ह्लीं श्रीं स क ल ह्लीं करतलकरपृष्ठाभ्यां नमः।।

एवं हृदयादिन्यासः, यथा—

ऐं ह्लीं श्रीं क ए ई ल ह्लीं हृदयाय नमः।।
ऐं ह्लीं श्रीं ह स क ह ल ह्लीं शिरसे स्वाहा।।
ऐं ह्लीं श्रीं स क ल ह्लीं शिखायै वषट्।।
ऐं ह्लीं श्रीं क ए ई ल ह्लीं कवचाय हुम्।।
ऐं ह्लीं श्रीं ह स क ह ल ह्लीं नेत्रत्रयाय वौषट्।।
ऐं ह्लीं श्रीं स क ल ह्लीं अस्त्राय फट्।।

भूर्भुवस्सुवरोम् इति दिग्बन्धः।।

विवेकवृत्त्यवच्छिन्न चिच्छक्तिरूपसुषुम्नात्मने श्रीगुरवे नमः।। इति ब्रह्मरन्ध्रं स्पृष्ट्वा,

| | | |
|---|---|---|
| दक्षश्रोत्ररूप | पयस्विन्यात्मने | प्रकाशानन्दनाथाय नमः। |
| वामश्रोत्ररूप | शंखिन्यात्मने | विमर्शानन्दनाथाय नमः। |
| जिह्वारूप | सरस्वत्यात्मने | अनन्तानन्दनाथ नमः। |
| दक्षनेत्ररूप | पूषात्मने | श्री ज्ञानानन्दनाथाय नमः। |
| वामनेत्ररूप | गान्धार्यात्मने | श्रीसत्यानन्दनाथाय नमः। |
| ध्वजरूप | गुह्यात्मने | श्रीपूर्णानन्दनाथाय नमः। |
| दक्षनासारूप | पिङ्गलात्मने | स्वभावानन्दनाथाय नमः। |
| वामनासारूप | इडात्मने | प्रतिभानन्दनाथाय नमः। |
| पायुरूप | अलंबुसात्मने | स्वभावनन्दनाथाय नमः। |

इति तत्तत्स्थानानि संस्पृश्य।

१. नवचक्ररूपश्रीचक्रात्मने देहाय नमः।
पितृरूपास्थ्याद्यवयवात्मने वाराह्यै नमः।
मातृरूपमांसाद्यवयवात्मने बलिदेवतायै कुरुकुल्लायै नमः।

इति त्रिर्व्यापकम्।

| | | |
|---|---|---|
| २. देहपश्चाद्भागरूप | धर्मात्मने | इक्षुसागराय नमः |
| देहदक्षिणभागरूप | अर्थात्मने | सुरासागराय नमः। |
| देहप्राग्भागरूप | कामात्मने | घृतसागराय नमः। |
| देहोदग्भागरूप | मोक्षात्मने | क्षीरसागराय नमः। |

देहात्मने नवरत्नद्वीपाय नमः। न्तिः व्यापकम्।

| | | |
|---|---|---|
| ३. | मांसात्मने | पुष्परागरत्नाय नमः। |
| | रोमात्मने | नीलरत्नाय नमः। |
| | त्वगात्मने | वैडूर्यरत्नाय नमः। |
| | रुधिरात्मने | माणिक्यरत्नायै नमः। |
| | शुक्लात्मने | मौक्तिकरत्नाय नमः। |
| | मज्जात्मने | मरकतरत्नाय नमः। |
| | अस्थ्यात्मने | वज्ररत्नाय नमः। |
| | मेदआत्मने | गोमेदकरत्नाय नमः। |
| | ओजआत्मने | पद्मरागरत्नाय नमः। |
| ४. | मांसाधिदेवतायै | कालचक्रेश्वर्यै नमः। |
| | रोमाधिदेवतायै | मुद्राचक्रेश्वर्यै नमः। |
| | त्वगधिदेवतायै | मातृकाचक्रेश्वर्यै नमः। |
| | रुधिराधिदेवतायै | रत्नचक्रेश्वर्यै नमः। |
| | शुक्लाधिदेवतायै | दशाचक्रेश्वर्यै नमः। |
| | मज्जाधिदेवतायै | गुरुचक्रेश्वर्यै नमः। |
| | अस्थ्यधिदेवतायै | तत्त्वचक्रेश्वर्यै नमः। |
| | मेदोऽधिदेवतायै | ग्रहचक्रेश्वर्यै नमः। |
| | ओजोऽधिदेवनायै | मूर्तिचक्रेश्वर्यै नमः। |
| ५. | संकल्पात्मभ्यः | कल्पतरुभ्यो नमः। |
| | तेजआत्मने | कल्पकोद्यानाय नमः। |

६. मधुररसात्मने वसन्तर्तवे नमः।
अम्लरसात्मने ग्रीष्मर्तवे नमः।
तिक्तरसात्मने वर्षर्तवे नमः।
कटुरसात्मने शरदृतवे नमः।
कषायरसात्मने हेमन्तर्तवे नमः।
लवणरसात्मने शिशिरर्तवे नमः।

७. इन्द्रियात्मभ्योऽश्वेभ्यो नमः।
इन्द्रियार्थात्मभ्यो गजेभ्यो नमः।
करुणात्मिकायै तोयपरिखायै नमः।
ओजःपुञ्जात्मने माणिक्यमण्डपाय नमः।
ज्ञानात्मने विशेषार्घ्याय नमः।
ज्ञेयात्मने हविषे नमः।
ज्ञात्रात्मने होन्ते नमः।
चिदात्मने श्रीमहात्रिपुरसुन्दर्यै नमः।

इति तत्तदनुसन्धानपूर्वकं मनसा नत्वा,

८. ज्ञातृज्ञानज्ञेयानां नामरूपविलापनानुसन्धानेन चिन्मात्रूपताविभावनेन क्षणं विश्रम्य पञ्चदश नित्या यजेत्।।

हृदि हस्तं निधाय,

**चत्वारिंशदधिकचतुर्दशशतश्वासात्मने प्रतिपत्तिथिरूप *कामेश्वरीनित्यायै* नमः।**
**तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने द्वितीयातिथिरूप *भगमालिनीनित्यायै* नमः।**
**तदुत्तरचत्वाविंशदधिकचतुर्दशशतश्वासात्मने तृतीयातिथिरूप *नित्यक्लिन्नानित्यायै* नमः।**
**तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने चतुर्थीतिथिरूप *भेरुण्डानित्यायै* नमः।**
**तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने पञ्चमीतिथिरूपव *ह्लिवासिनीनित्यायै* नमः।**
**तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने षष्ठीतिथिरूप *वज्रेश्वरीनित्यायै* नमः।**
**तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने सप्तमीतिथिरूप *शिवदूतीनित्यायै* नमः।**
**तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने अष्टमीतिथिरूप *त्वरितानित्यायै* नमः।**

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने नवमीतिथिरूप *कुलसुन्दरीनित्यायै* नमः।
तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने दशमीतिथिरूप *नित्यानित्यायै* नमः।
तदुत्तरचत्वारिंशदधिकचतुर्दशशत्श्वासात्मने एकादशीतिथिरूप *नीलपताकानित्यायै* नमः।
तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने द्वादशीतिथिरूप *विजयानित्यायै* नमः।
तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने त्रयोदशीतिथिरूप *सर्वमङ्गानित्यायै* नमः।
तदुत्तरचत्वारिंशदधिकिचतुर्दशशतश्वासात्मने चतुर्दशीतिथिरूप *ज्वालामालिनीनित्यायै* नमः।
तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने पौर्णमासीतिथिरूप *चित्रानित्यायै* नमः।
नित्यामन्त्रानपि तत्तदादौ केचित्पठन्ति। *इयं नित्याभावना सर्वान्ते एव वा कार्या।* चतुरश्राद्यरेखायै नम इति वक्ष्यमाणस्थानेषु व्यापकं न्यस्य।

| | | |
|---|---|---|
| ९. दक्षांसपृष्ठरूप | शान्तरसात्मने | अणिमासिद्ध्यै नमः। |
| दक्षपाण्यङ्गुल्यग्ररूप | अद्भुतरसात्मने | लघिमासिद्ध्यै नमः। |
| दक्षस्फिग्रूप | करुणारसात्मने | महिमासिद्ध्यै नमः। |
| दक्षपादाङ्गुल्यग्ररूप | वीररसात्मने | ईशित्वसिद्ध्यै नमः। |
| वामपादाङ्गुल्यग्ररूप | हास्यरसात्मने | वशित्वसिद्ध्यै नमः। |
| वामस्फिग्रूप | बीभत्सरसात्मने | प्राकाम्यसिद्यै नमः। |
| वामपाण्यङ्गुल्यग्ररूप | रौद्ररसात्मने | भुक्तिसिद्ध्यै नमः। |
| वामांसपृष्ठरूप | भयानकरसात्मने | इच्छासिद्ध्यै नमः। |
| चूलीमूलरूप | शृङ्गाररसात्मने | प्राप्तिसिद्ध्यै नमः। |
| चूलीपृष्ठरूप | नियत्यात्मने | सर्वकामसिद्ध्यै नमः। |

चतुरश्रमध्यरेखायै नम इति। तदन्तर्व्यापकं न्यस्य

| | | |
|---|---|---|
| पादाङ्गुष्ठद्वयरूप | कामात्मने | ब्राह्म्यै नमः। |
| दक्षपार्श्वरूप | क्रोधात्मने | माहेश्वर्यै नमः। |
| मूर्द्धरूप | लोभात्मने | कौमार्यै नमः। |
| वामपार्श्वरूप | मोहात्मने | वैष्णव्यै नमः। |
| वामजानुरूप | मदात्मने | वाराह्यै नमः। |
| दक्षजानुरूप | मात्सर्य्यात्मने | इन्द्राण्यै नमः। |

**दक्षबहिंरसरूप पुण्यात्मने चामुण्डायै नमः।**
**वामबहिरंसरूप पापात्मने महालक्ष्म्यै नमः।**
**चतुरश्रान्त्यरेखायै नम इति** तदन्तर्व्यापकं न्यस्य।
**पादाङ्गुष्ठद्वयरूपसहस्रदलकमलात्मने सर्वसंक्षोभिणीमुद्रायै नमः।**
**दक्षपार्श्वरूपमूलाधारात्मने सर्वविद्राविणीमुद्रायै नमः।**
**मूर्धरूपस्वाधिष्ठानात्मने सर्वाकर्षिणीमुद्रायै नमः।**
**वामपार्श्वरूपमणिपूरात्मने सर्ववशङ्करीमुद्रायै नमः।**
**वामनाजानुरूपनाहतात्मने सर्वोन्मादिनीमुद्रायै नमः।**
**दक्षजानुरूपाविशुद्धात्मने सर्वमहांकुशामुद्रायै नमः।**
**दक्षान्तरांसरूपत्रियोन्यात्मने सर्वखेचरीमुद्रायै नमः।**
**वामान्तरांसरूपज्ञानात्मने सर्वबीजमुद्रायै नमः।**
**द्वादशान्त[र]रूपोर्ध्वसहस्रदलकमलात्मने सर्वयोनिमुद्रायै नमः।**
**पादाङ्गुष्ठरूपाधारनवकात्मने सर्वत्रिखण्डामुद्रायै नमः।**
**हृद्रूपत्रैलोक्यमोहनचक्रेश्वर्यै त्रिपुरायै नमः।**
इति तत्तत्स्थानानि स्पृष्ट्वैताः सर्वाः स्वात्माभिन्नत्वेन विभाव्य स्वात्मनः परिच्छेदराहित्यं विभावयेत्।
**प्रकटयोगिनीरूपस्वात्मात्मने अणिमासिद्ध्यै नमः।**
**अपरिच्छिन्नस्वात्मात्मने सर्वसंक्षोमिणीमुद्रायै नमः।**
इति प्रयोगपूर्वकं वा विभावयेत्। **षोडशदलपद्माय नम** इति तदन्तर्व्यापकं न्यस्य।

**१०. दक्षश्रोत्रपृष्ठरूपपृथिव्यात्मने कामाकर्षिणीनित्याकलायै नमः।**
**दक्षांसरूपावारात्मने बुद्ध्याकर्षिणीनित्याकलायै नमः।**
**दक्षकूर्पररूपतेजआत्मने अहंकाराकर्षिणीनित्याकलायै नमः।**
**दक्षकरपृष्ठरूपवाय्वात्मने शब्दाकर्षिणीनित्याकलायै नमः।**
**दक्षोरुरूपाकाशात्मने स्पर्शाकर्षिणीनित्याकलायै नमः।**
**दक्षजानुरूपश्रोत्रात्मने रूपाकर्षिणीनित्याकलायै नमः।**
**दक्षगुल्फरूपत्वगात्मने रसाकर्षिणीनित्याकलायै नमः।**
**दक्षपादतलरूपचक्षुरात्मने गन्धाकर्षिणीनित्याकलायै नमः।**

वामपादतलरूपजिह्वात्मने चित्ताकर्षिणीनित्याकलायै नमः।
वामजानुरूपवागात्मने स्मृत्याकर्षिणीनित्याकलायै नमः।
वामोरुरूपपाण्यात्मने नामाकर्षिणीनित्याकलायै नमः।
वामकरपृष्ठरूपपादात्मने बीजाकर्षिणीनित्याकलायै नमः।
वामकूर्पररूपपाय्वात्मने आत्माकर्षिणीनित्याकलायै नमः।
वामांसरूपोपस्थात्मने अमृताकर्षिणीनित्याकलायै नमः।
वामश्रोत्रपृष्ठरूपविकृतमनआत्मने शरीराकर्षिणीनित्याकलायै नमः।
हृद्रूपसर्वाशापरिपूरकचक्रेश्वर्यै त्रिपुरेश्वर्यै नमः।
गुप्तयोगिनीरूपस्वात्मात्मने लघिमासिद्ध्यै नमः।
अपरिच्छिन्नरूपस्वा!त्मात्मने सर्वविद्राविणीमुद्रायै नमः।

११. अष्टदलपद्माय नम इति व्यापकं न्यस्य।
दक्षशङ्खरूपवचनात्मने अनङ्गकुसुमायै नमः। (कपालास्थि)
दक्षजत्रुरूपादानात्मने अनङ्गमेखलायै नमः। (स्कन्धसन्धि)
दक्षोरुरूपगमनात्मने अनङ्गमदनायै नमः।
दक्षगुल्फरूपविसर्गात्मने अनङ्गमदनातुरायै नमः।
वामगुल्फरूपानन्दात्मने अनङ्गरेखायै नमः।
वामोरुरूपहानाख्यबुद्ध्यात्मने अनङ्गवेगायै नमः।
वामशङ्खरूपोपेक्षाख्यबुद्ध्यात्मने अनङ्गमालिन्यै नमः।
हृद्रूपसर्वसंक्षोभभणचक्रेश्वर्यै त्रिपुरसुन्दर्यै नमः।
गुप्ततरयोगिनीरूपस्वात्मात्मने महिमासिद्ध्यै नमः।
अपरिच्छिन्नरूपस्वात्मात्मने सर्वाकर्षिणीमुद्रायै नमः।

१२. चतुर्दशारचक्राय नम इति व्यापकं न्यस्य।
ललाटमध्यभागरूपालंबुसात्मने सर्वसंक्षोभिणीशक्त्यै नमः।
ललाटदक्षभागरूपकुह्वात्मने सर्वविद्राविणीशक्त्यै नमः।
दक्षगण्डरूपविश्वोदरात्मने सर्वाकर्षिणीशक्त्यै नमः।
दक्षांसरूपवारणात्मने सर्वाह्लादिनीशक्त्यै नमः।

दक्षपार्श्वरूपहस्तिजिह्वात्मने सर्वसम्मोहिनीशक्त्यै नमः।
दक्षोरुरूपयशोवत्यात्मने सर्वस्तम्भिनीशक्त्यै नमः।
दक्षजङ्घारूपपयस्विन्यात्मने सर्वजम्भिनीशक्त्यै नमः।
वामोरुरूपपूषात्मने सर्वरञ्जिनीशक्त्यै नमः।
वामपार्श्वरूपशङ्खिन्यात्मने सर्वोन्मादिनीशक्त्यै नमः।
वामांसरूपसरस्वत्यात्मने सर्वार्थसाधिनीशक्त्यै नमः।
वामगण्डरूपेडात्मने सर्वसम्पत्तिपूरणीशक्त्यै नमः।
ललाटवामभागरूपपिङ्गलात्मने सर्वमन्त्रमयीशक्त्यै नमः।
ललाटपृष्ठभागरूपसुषुम्नात्मने सर्वद्वन्द्वक्षयंकरीशक्त्यै नमः।
हृद्रूपसर्वसौभाग्यादायकचक्रेश्वर्यै त्रिपुरवासिन्यै नमः।
सम्प्रदाययोगिनीरूपस्वात्मात्मने ईशितासिद्ध्यै नमः।
अपरिच्छिन्नरूपस्वात्मात्मने सर्ववशङ्करीमुद्रायै नमः।

१३. बहिर्दशारचक्राय नम इति व्यापकं न्यस्य।

दक्षाक्षिरूपप्राणात्मने सर्वसिद्धिप्रदादेव्यै नमः।
नासामूलरूपापानात्मने सर्वसम्पत्प्रदादेव्यै नमः।
वामनेत्ररूपव्यानात्मने सर्वप्रियङ्करीदेव्यै नमः।
कुक्षीशकोणरूपोदानात्मने सर्वमङ्गलकारिणीदेव्यै नमः।
कुक्षिवायुकोणरूपसमानात्मने सर्वकामप्रदादेव्यै नमः।
वामजानुरूपनागात्मने सर्वदुःखविमोचिनीदेव्यै नमः।
गुदरूपकूर्मात्मने सर्वमृत्युप्रशमनीदेव्यै नमः।
दक्षजानुरूपकृकरात्मने सर्वविघ्नविनाशिनीदेव्यै नमः।
कुक्षिनिर्ऋतिकोणरूपदेवदत्तात्मने सर्वाङ्गसुन्दरीदेव्यै नमः।
कुक्षिवह्निकोणरूपधनञ्जयात्मने सर्वसौभाग्यदायिनीदेव्यै नमः।
हृद्रूपसर्वार्थसाधकचक्रेश्वर्यै त्रिपुराश्रियै नमः।
कुलकौलयोगिनीरूपस्वात्मात्मने वशितासिद्ध्यै नमः।
अपरिच्छिन्नरूपस्वात्मात्मने सर्वोन्मादिनीमुद्रायै नमः।

**१४. अन्तर्दशारचक्राय नम** इति व्यापकं न्यस्य।

| | |
|---|---|
| **दक्षनासारूपरेचकाग्न्यात्मने** | **सर्वज्ञादेव्यै नमः।** |
| **दक्षसृक्वीणीरूपपाचकाग्न्यात्मने** | **सर्वशक्तिप्रदादेव्यै नमः।** |
| **दक्षस्तनरूपशोषकाग्न्यात्मने** | **सर्वैश्वर्यप्रदादेव्यै नमः।** |
| **दक्षवृषणरूपदाहकाग्न्यात्मने** | **सर्वज्ञानमयीदेव्यै नमः।** |
| **सीवनीरूपप्लावकाग्न्यात्मने** | **सर्वव्याधिविनाशिनीदेव्यै नमः।** |
| **वामवृषणरूपक्षारकाग्न्यात्मने** | **सर्वाधारस्वरूपादेव्यै नमः।** |
| **वामस्तनरूपोद्गारकाग्न्यात्मने** | **सर्वानन्दमयीदेव्यै नमः।** |
| **वामनासारूपजृम्भकाग्न्यात्मने** | **सर्वरक्षास्वरूपिणीदेव्यै नमः।** |
| **नासाग्ररूपमोहकाग्न्यात्मने** | **सर्वेप्सितफलप्रदादेव्यै नमः।** |
| **हृद्रूपसर्वरक्षाकरचक्रेश्वर्यै** | **त्रिपुरमालिन्यै नमः।** |
| **निगर्भयोगिनीरूपस्वात्मात्मने** | **प्राकाम्यसिद्ध्यै नमः।** |
| **अपरिच्छिन्नरूपस्वात्मात्मने** | **महाङ्कुशामुद्रायै नमः।** |

**१५. अष्टकोणचक्राय नम** इति व्यापकं न्यस्य।

| | |
|---|---|
| **चिबुकदक्षभागरूपशीतात्मने** | **वशिनीवाग्देवतायै नमः।** |
| **कण्ठदक्षभागरूपोष्णात्मने** | **कामेश्वरीवाग्देवतायै नमः।** |
| **हृदयदक्षभागरूपसुखात्मने** | **मोदिनीवाग्देवतायै नमः।** |
| **नाभिदक्षभागरूपदुःखात्मने** | **विमलावाग्देवतायै नमः।** |
| **नाभिवामभागरूपेच्छात्मने** | **अरुणावाग्देवतायै नमः।** |
| **हृदयवामभागरूपसत्त्वगुणात्मने** | **जयिनीवाग्देवतायै नमः।** |
| **कण्ठवामभागरूपरजोगुणात्मने** | **सर्वेश्वरीवाग्देवतायै नमः।** |
| **चिबुकवामभागरूपतमोगुणात्मने** | **कौलिनीवाग्देवतायै नमः।** |
| **हृद्रूपसर्वरोगहरचक्रेश्वर्यै** | **त्रिपुरासिद्धायै नमः।** |
| **रहस्ययोगिनीरूपस्वात्मात्मने** | **भुक्तिसिद्ध्यै नमः।** |
| **अपरिच्छिन्नरूपस्वात्मात्मने** | **खेचरीमुद्रायै नमः।** |

१६. हृदयत्रिकोणाधोभागरूपपञ्चतन्मात्रात्मकेभ्यः सर्वजृम्भनबाणेभ्यो नमः।

| | |
|---|---|
| तद्दक्षभागरूपमनआत्मकाभ्यां | सर्वमोहनधनुर्भ्यां नमः। |
| तदूर्ध्वभागरूपरागात्मकाभ्यां | सर्ववशङ्करपाशाभ्यां नमः। |
| तद्वामभागरूपद्वेषात्मकाभ्यां | सर्वस्तम्भकराङ्कुशाभ्यां नमः। |

१७. त्रिकोणचक्राय नमः। इति व्यापकं न्यस्य।




| | |
|---|---|
| हृदयत्रिकोणाग्रभागरूपमहत्तत्त्वात्मने | कामेश्वरीदेव्यै नमः। |
| तद्दक्षकोणरूपाहङ्कारात्मने | वज्रेश्वर्यै देव्यै नमः। |
| तद्वामकोणरूपाव्यक्तात्मने | भगमालिनी देव्यै नमः। |
| हृद्रूपसर्वसिद्धिप्रदचक्रेश्वर्यै | त्रिपुराम्बायै नमः। |
| अतिरहस्ययोगिनीरूपस्वात्मात्मने | इच्छासिद्ध्यै नमः। |
| अपरिच्छिन्नरूपस्वात्मात्मने | बीजमुद्रायै नमः। |

१८. बिन्दुक्राय नम इति व्यापकं न्यस्य।

हृन्मध्यरूपनिरुपाधिकसंविन्मात्ररूप कामेश्वराङ्कनिलयायै सच्चिदानन्दैकब्रह्मामिकायै परदेवतायै ललितायै महात्रिपुरसुन्दर्यै नमः। निरुपाधिकचैतन्यमेव सच्चिदानन्दार्त्मकमन्तःकरणप्रतिबिम्बितम् सदाऽहमेवेत्यनुसन्धानं ललिताया लौहित्यमिति विभाव्य अभेद-सम्बन्धेन चित्त्वादिधर्म्मविशिष्टसंविदश्च तादात्मयसम्बन्धरूपं कामाङ्कयन्त्रणं विशेषणं विभाव्य उपाध्यभावरूपशुक्लत्वेनोपलक्षिता सती शुद्धसंविदेव शुक्लचरणः। चित्वविशिष्टसंवित्प्राथमिकपराहन्तात्मकवृत्तिरूपेण रागेणोपलक्षिता सती रक्तचरणः। अहमाकारवृत्तिनिरूपिता विषयता चरणयोर्मिथो विशेषणविशेष्यभावरूपैव तदुभयसामरस्यमिति विभाव्य।

| | |
|---|---|
| हृद्रूसर्वानन्दमयचक्रेश्वर्यै | महात्रिपुरसुन्दर्यै नमः। |
| परापररहस्ययोगिनीरूपस्वात्मात्मने | प्राप्तिसिद्ध्यै नमः। |
| अपरिच्छिन्नरूपस्वात्मात्मने | योनिमुद्रायै नमः। |

इति तत्तत्स्थानस्पर्शपूर्व्वकं सम्यगनुसन्धायोपचारान् समर्पयेत्।

**तद्यथा–**

आसनम्।। **एवमपरिच्छिन्नतया भाविताया ललितायाः स्वे महिम्न्यव प्रतिष्ठितमासनम् अनुसन्दधामि।**

पाद्यम्।। **वियदादिस्थूलप्रपञ्चरूपपादगतस्य नामरूपात्मकमलस्य सच्चिदानन्दैकरूपत्वभावनाजलेन क्षालनं पाद्यं भावयामि।**

अर्घयम्।। **सूक्ष्मप्रपञ्चरूपहस्तगतस्य तस्य क्षालनमर्घ्यं चिन्तयामि।**

आचमनीयम्।। **भावनारूपाणामपामपि कबलीकाररूपमाचमनं विभावयामि।**

स्नानम्।। **सत्वचित्त्वानन्दत्वाद्यखिलावयवावच्छेदेन भावनाजलसम्पर्करूपं स्नानमनुचिन्तयामि।**

वस्त्रम्।। **तेष्वेवावयवेषु प्रसक्ताया भावनात्मकवृत्तिविशेष्यतायाः प्रोञ्छनं वृत्तिविषयत्वभावनेन वस्त्रं कल्पयामि।**

आभरणम्।। **निर्विषयत्वनिरञ्जनत्वाशोकत्वामृतत्वाद्यनेकधर्म्मरूपाण्याभरणानि धर्म्यभेदभावनेन समर्पयामि।**

गन्धम्।। **स्वशरीरघटकपार्थिवभागानां जडतापनयेन चिन्मत्रतावेशेषरूपं गन्धं प्रयच्छामि।**

पुष्पाणि।। **आकाशभागानां तथा भावनेन पुष्पाणि ददामि।**

धूपम्।। **वायव्यभागनां तथा भावनया धूपयामि।**

दीपम्।। **तैजसभागानां तथाकरणनोद्दीपयामि।**

नैवेद्यम्।। **अमृतभागांस्तथा विभाव्य निवेदयामि।**

ताम्बूलम्।। **षोडशान्तेन्दुमण्डलस्य तथा भावनेन ताम्बूलकल्पमाचरामि।**

स्तोत्रम्।। **परापश्यन्त्यादि निखिल शब्दानां नादद्वारा ब्रह्मण्युपसंहारचिन्तनेन स्तुवीमि।**

प्रदक्षिणम्।। **विषयेषु धावमानानां चित्तवृत्तीनां विषयजडतानिरासेन ब्रह्मणिविलापनेन प्रदक्षिणीकरोमि।**

नमस्कारः।। **तासां विषयेभ्यः परावर्तनेन ब्रह्मैकप्रवणतया प्रणमामि।**

होमम्।। **विहिताविहितविषया वृत्तय उत्पन्ना अहं त्वं गुरुर्देवतेत्यादयः ताः सर्व्वाश्चक्रराजस्थानन्तशक्तिकदम्बरूपास्तत्तत्सूक्ष्मरूपा ये ये संस्कारराश्च तत्सर्वं चिन्मात्रमेवेति विभावनया निर्व्युत्थानं स्वात्मनि जुहोमि।** इति उपचर्य्य जुहुयात्।

तर्पणम्।। **प्रकृतभावनासु ये गुरुचरणादिशक्तिकदम्बान्ता विषयास्ते सर्वेऽपि चिन्मात्ररूपा न परस्परं भिद्यन्त इति भावनया तर्पयामि।**

ब्रह्मविभावनम्।। **तिथिचक्रमुक्तरूपं कालचक्रं देशचक्रं च सर्व्वमस्ति भाति प्रियञ्च न तु नामरूपवत् अतः सर्वं ब्रह्मैवेति विभावयामि।।**

अथवा

पूर्व्वलिखितां नित्याभावनामिहैव श्वासविलापनफलिकां कुर्य्यात्।।

प्रणव चिन्तनम्।।तेन मनःपवनात्मनामैक्यनिफालनेन त्रीन् मुहूर्त्तान् द्वावेकं वामुहूर्तमवच्छिन्नं व्यापयेत्।

तस्य देवतात्मैक्यसिद्धिः चिन्तितकार्याण्ययत्नेन सिद्ध्यन्सि।। ततोऽवतीर्य्य प्रणायामत्रयं ऋष्यादिन्यासत्रयञ्च कृत्वा। गुरुं स्तुवीतेति सर्वं शिवम्।।

अथर्वशिरसि प्रोक्ताभवनानां सतां मुदे। इति भास्कररायेण प्रयोगविधिरीरितः।।

भावनोपनिषत्प्रयोगविधिः समाप्तः।

## १०. अरुणोपनिषत्

ओं भद्रं कर्णेभिरिति शान्तिः।।

प्रश्नयो नाम मुनयः सर्वे चक्रसमाश्रया। सेवमानाश्चक्रविद्यां देवगन्धर्वपूजताम्।। अग्नीषोमात्मकं चक्रमग्नीषोममयं जगत्। अग्नावन्तर्बभौ भानुरग्नीषोममयं स्मृतम्।। त्रिखण्डं मातृकाचक्रं सोमसूर्यानलात्मकम्। त्रिककोणं बैन्दवं सौम्यमष्टकोणं च मिश्रकम्।। चक्रं चन्द्रमयं चैव दशारद्वितयं तथा। चतुर्दशारं वह्नेस्तु चतुश्चक्रं च भानुमत्।। एतत्प्रसादादिन्द्राद्यावसवोऽष्टौ मरुद्गणाः। ये ये समृद्धा लोकेऽस्मिन् त्रिपुराचक्रसेवका। पुरत्रयं च चक्रस्य सोमसूर्यानलात्मकम्। महालक्ष्म्याः पुरं चक्रं तत्रैवास्ते सदाशिवः।। इमा नुकं भुवना सीषधेम।।१।। इन्द्रश्च विश्वे च देवाः ।।२।। यज्ञं च नस्तत्वं च प्रजां च। आदित्यैरिन्द्रः सह सीषधातु।।३।। आदित्यैरिन्द्रः सगणो मरुद्भिः। अस्माकं भूत्वविता तनूनाम्।४। आप्लवस्व प्रप्लवस्व।।५।। आण्डी भव ज मा मुहुः।।६।। सुखादीन्दुः खनिधनाम्।।७।। प्रति मुञ्चस्व स्वां पुरम्।।८।। मरीचयः स्वायंभुवाः।।९।। ये शरीराण्यकल्पयम्।।१०।। ते ते देहं कल्पयन्तु।।११।। मा च ते ख्यास्म तीरिषत्।।१२।। उत्तिष्ठत मा स्वप्त। अग्निच्छध्वं भारताः। राज्ञः सोमस्य तृप्तासः। सूर्येण सयुजोषसः।।१३।। युवा सुवासाः।।१४।। अष्टाचक्रा नवद्वारा।।१५।। देवानां पूरयोध्या।।१६।। तस्यां हिरण्मयः कोशः। स्वर्गो लोको ज्योतिपावृतः यो वै तां ब्रह्मणो वेद। अमृतेनाबृतां पुरीम्। तस्मै ब्रह्म च ब्रह्मा च। आयुः कीर्तिं प्रजां ददुः।।१८।। विभ्राजमानां हरिणीम्। यशसा संपरीवृताम्। पुरं हिरण्मयी ब्रह्मा। विवेशापराजिता।।१९।। पराङेस्यज्यामयी। पराङेत्यनाशकी।।१०।। इह चामुत्र चान्वेति। विद्वान् देवासुरानुभयान्।।११।। यत्कुमारी मन्द्रयते। यद्योषिद्यत्पतिव्रता। अरिष्टं यत्किंचित्क्रियते। अग्निस्तदनुवेदधति।।२२।। अश्रृतासः श्रृतासश्च। यज्वानो येऽप्ययज्वनः। स्वर्यन्तो नापेक्षन्ते।।२३।। इन्द्रमग्निं च ये विदुः। सिकता इव संयन्ति। रश्मिभिः समुदीरिताः। अस्माल्लोकादमुष्माच्च।।२४।। ऋषिभिरदात् पृश्निभिः ओं भद्रं कर्णेभिरिति शान्तिः।।

।।इत्यरुणोपनिषित्।।

## ११. कौलोपनिषत्

**शन्नः कौलिकः शन्नो वारुणी शन्नः शुद्धिः शन्नोऽग्निश्शन्नः सर्वं समभवत्। नमो ब्रह्मणे नमः पृथिव्यै नमोऽद्भ्यो नमोऽग्नये नमो वायवे नमो गुरुभ्यः। त्वमेव प्रत्यक्षे सैवासि। त्वामेव प्रत्यक्ष तां वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्। ओं शान्तिः शान्तिः शान्तिः। अथातो धर्म्मजिज्ञासा। ज्ञानं बुद्धिश्च। ज्ञानं मोक्षैककारणम्। मोक्षस्सर्वात्मतासिद्धिः। पञ्च विषयाः प्रपञ्चः। तेषां ज्ञानस्वरूपाः। योगो मोक्षः। अधर्म्मकारणाज्ञानमेव ज्ञानम्। प्रपञ्च ईश्वरः। अनित्यं नित्यम्। अज्ञानं ज्ञानम्। अधर्म्म एव धर्म्मः। एष मोक्षः। पञ्च बन्धा ज्ञानस्वरूपाः। पिण्डाज्जननम्। तत्रैव मोक्षः। एतजज्ञानम्। सर्वेन्द्रियाणां नयनं प्रधानम्। धर्म्मविरुद्धाः कार्य्याः। धर्म्मविहिता न कार्य्याः। सर्वं शाम्भवीरूपम्। आम्नाया न विद्यन्ते। गुरुरेकः। सर्वैक्यताबुद्धिमन्ते। आमन्त्रसिद्धेः। मदादिस्त्याज्यः। प्राकठ्यं न कुर्यात् न कुर्य्यात्पशुसम्भाषणम्। अन्यायोन्यायः। नगणयेत्कमपि। आत्मरहस्यं न वदेत्। शिष्याय वदेत्। अन्तः शाक्तः। बहिः शैवः। लोके वैष्णवः। अयमेवाचारः। आत्मज्ञानान्मोक्षः। लोकान्न निन्द्यात्। इत्यध्यात्मम्। व्रतं न चरेत्। न तिष्ठेन्नियमेन। नियमान्न मोक्षः। कौल प्रतिष्ठां न कुर्य्यात्। सर्वसमो भवेत्। स मुक्तो भवति। पठेदेतानि सूत्राणि प्रातरुत्थाय देशिकः। आज्ञासिद्धिर्भवेत्तस्य इत्याज्ञा पारमेश्वरी।। यश्चाचारविहीनोऽपि यो वा पूजां न कुर्वते। यदि ज्येष्ठं न मन्येतनन्दते नन्दने वने।।**

**शन्नः कौलिकः।०।**

**ओं शान्तिः शान्तिः शान्तिः।।**

## १२. श्रीकौलोपनिषत् भाष्यञ्च

**ओं शन्नः कौलिकः शन्नो वारुणी शन्नश्शुद्धिः शन्नोग्निश्शन्नस्सर्वं समभवत्।**
**श्रीगुरुचरणाब्जकिरणविसरणनिर्द्धूतहृद्गतावरणः ।**
**भास्करराय: कौलोपनिषदमाथर्वणीं विकासयति।।**

वक्ष्यमाणातिरहस्यार्थोपदेशे अवश्यंभाविविघ्ननिरासाय देवताः प्रार्थयते शन्नः कौलिक इत्यादिना।।

कुलमार्गप्रवर्तकः कौलिकः परशिवः शं-विघ्ननिराकरणपूर्वकं स्वात्मानन्दप्रापकः, नः-अस्माकं, समभवत्-भूयात्, वारुणी-प्रथमाभिमानिनी महती-देवता च, शन्नो-भूयात्।। शुद्धि- द्वितीयभिमानिनी देवतापि शन्नो-भूयात् अग्निस्तेजः किंबहुना सर्वमपि सुखकरं भवतु।।

**नमो ब्रह्मणे नमः पृथिव्यै नमोद्भ्यो नमोग्नये नमो वायवे नमो गुरुभ्यः त्वमेव प्रत्यक्षं सैवासि त्वामेव प्रत्यक्षं तां वदिष्यामि ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवतु अवतु मां अवतु वक्तारं ओं शान्तिश्शान्तिश्शान्तिः।**

परब्रह्मणे पृथिव्यादिचतुष्टयदेवताभ्यः परमशिवादिस्वगुरुपर्यन्तेश्यश्च नमः।। भूतचतुष्टयमाकाशस्याप्युपलक्षमं। प्रत्यक्षं अहं प्रत्ययव्याजेन सर्वैरनुभूयमानं ब्रह्म सैव त्वमेवासि। त्रिपुरसुन्दरीरूपकौलोपनिषदसि अत एव हे कौलोपनिषत् त्वामेव तदभिन्नामहं वदिष्यामि। ऋतशब्दो ब्रह्मपरः। सत्यशब्दोपि तथैव। आदरे वीप्सा। स्पष्टमन्यत्। शान्तिश्शान्ति श्शान्तिरिति विघ्नशान्ति प्रार्थनेयम्।

**अथातोधर्मजिज्ञासा। ज्ञानं बुद्धिश्च ज्ञानं मोक्षैककारणम्। मोक्षस्सर्वात्मतासिद्धिः। पञ्च विषयाः प्रपञ्चः। तेषां ज्ञानिस्वरूपाः। योगो मोक्षः।**

अथ ब्रह्मजिज्ञासानन्तरं अतः धर्मिज्ञानस्य जातत्वात् धर्मजिज्ञासा धर्मस्य विमर्शशक्तेः ज्ञानाय विचारः कर्तव्य (इत्यर्थः)।।

ज्ञानं बुद्धिश्च, ब्रह्मापरोक्षानुभवो ज्ञानं। तज्जनकन्तु शाब्दं, परोक्षज्ञानं बुद्धिः। यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रवर्तते।। इत्यादौ द्वैविध्यव्यवहारदर्शनात् तदुभयमपिधिर्मस्वरूपमेवेत्यर्थः।। चकारादनुक्तानां चैतन्यादिधर्माणां नागानन्दादिभिर्गणितानां परिग्रहः।। ज्ञानं मोक्षैककारणं स्पष्टोर्थः।। मोक्षस्सर्वात्मतासिद्धिः। सर्वस्य स्वात्माभेदस्सर्वात्मता तस्यास्सिद्धिस्तद्विषयसंविलासाज्ञाननिवृत्तिः। तेन देवीभागवते कथितार्थस्यश्लोकभागवतस्य *"सर्वं खल्विदमेवाहं नान्यदस्ति सनातनं"* इत्यस्य समानार्थकज्ञानं मोक्षजनकं इति ध्वनितं। तादृशज्ञानजन्यमखण्डं वृत्त्यान्तरं पञ्चविषयाः प्रपञ्च इति सर्वपदं विवृणोति। शब्दादिविषयपञ्चकं प्रपञ्चपदेनोच्यते।। तेषां भूतसूक्ष्मत्वेन स्थूलभूतानां तदभेदात् षट्त्रिंशत्तत्त्वानामपि तत्रान्तर्भावात्। सर्वत्र पञ्चभूतानि षष्ठं किंचिन्नविद्यते।। इति वासिष्टात्।। तेषां ज्ञानस्वरूपा इति जडजातं निर्दिश्य चेतनजातं निर्दिशति।। ज्ञश्चासावनश्चज्ञानं। विषयान् जानाति प्राणिति चेत्यर्थः।। तादृशस्वरूपा जीवा इति यावत्।। योगो मोक्ष इति योगोवृत्तिनिरोधः मोक्षोपि।।

**अधर्मकारणाज्ञानमेव ज्ञानं।**

धर्मरहितत्वादधर्मः परब्रह्म तस्य यत् कारणाज्ञानं तद्विषयकमूलाज्ञानमेव ज्ञानं एवकारोभिन्नक्रमः विषया जीवा योगो मुक्तिरविद्येत्येतत्सर्वज्ञानमेव शक्तेर्भिन्नं नास्त्येवेत्यर्थः। भेदस्य मिथ्यात्वादिति भावः। प्रपञ्चईश्वरः भेदव्याप्यस्य नियम्यनियन्तृभावस्यापि व्यापकविरुद्धोपलब्ध्यामिथ्यात्वात्। प्रपञ्च एवेश्वरः।

**अनित्यं नित्यं।**

अनित्यत्वेन भासमानं घटादिकमपि नित्यशक्तिरूपमेव।

**अज्ञानं ज्ञानं।**

अवस्थारूपमज्ञानमपि ज्ञानरूपमेव शक्तिरेवत्यर्थः।।

**अधर्म एव धर्मः।**

शक्तिरूपो धर्मोपि न पदार्थान्तरं किन्तु धर्माधारधर्मिरूप ब्रह्मैव।

**एष मोक्षः।**

एष एव पन्था मोक्षस्य नान्यः।

**पञ्चबन्धा ज्ञानस्वरूपाः।**

अनात्मनि आत्मबुद्धिः आत्मनि अनात्मताबुधिः इत्यादि ज्ञानान्येव बन्धरूपणि। *ज्ञानं बन्धः* इति शिवसूत्रात्। जीवानां परस्परे भेदः ईश्वरात् भेदः चैतन्यात् भेदः इति ज्ञानत्रयेण सह पञ्च।

**पिण्डाज्जननं।**

ईदृशबधसद्भावादेव पिण्डाण्डसम्बन्धरूपं जननं भवति।

**तत्रैव मोक्षः।**

परन्तु कौलज्ञानमहिम्ना मोक्षोपि तत्रैव पिण्डाण्ड एव भवति। न पुनश्शताधिकनाड्युत्क्रमणं देवयानगतिः ब्रह्मणा सह मुक्तिरित्येवं रूपो विळम्बः।। तस्य *तावदेव चिरं, न तस्य प्राणा उत्क्रामन्ति* इत्यादि श्रुत्यन्तरादिति।

**एतत् ज्ञानम्।**

प्रथमं शास्त्रसिद्धान्तमुक्त्वा ज्ञाननिष्कर्षमाह एतत् वक्ष्यमांण ज्ञानसर्वस्वं।

**सर्वेन्द्रियाणां नयनं प्रधानं।**

ब्रह्मप्रतिनयेत्। षड्भिरपीन्द्रियैर्जन्येषु प्रत्यात्मकज्ञानेषु अहमिदं जानामीत्यदिप्रकारकेषु अहन्तया भासमानं ब्रह्मैव प्रधानं। *तमेव भान्तमनुभाति सर्वमिति* श्रुत्या तदितरस्य सर्वस्याप्यनुभासमानतोक्तेः। ईद्दशविवेचनं सर्ववृत्तिषु यथास्यात्तथा यतेत। एकेन्द्रियिजन्यमपि ज्ञानं विवेचनमन्तरेण प्रधानं नयेत्। ग्राह्यग्राहकसंवित्तिसामान्ये सर्वदेहिनां। विशेषोयं तु सम्बन्धसामान्ये सावधानता।। इति वचनात् अविवेचनाभाव एव ज्ञानसर्वस्वमित्यर्थः।

**धर्मविरुद्धाः कार्याः।**

इतः प्रभृति उपासककर्तव्यप्रकाराननुशास्ति। तादृशविवेचकज्ञानाधारैकरसिकानां चित्तस्थैर्याद्यर्थं कर्मकालेपि संविदादिसेवनं धर्मशास्त्रविरुद्धं प्रतिकर्नु युक्तं।

**धर्मविहिता न कार्याः।** *करणाकरणयोरभ्यन्द्रज्ञानमिदं न त्वात्यनतिक विधिदनिषेधरूपम्।*

धर्मशास्त्रविहिता अपि ज्योतिष्टोमादयः तादृशधाराविरोधसम्भावनायां प्रतिकर्तुं युक्ताः। गौतमेनापि चत्वारिंशत्संस्कारान् बहिरङ्गानष्टावन्तरंगांश्चोक्त्वा आन्तरशुद्ध्युत्तरं बहिरङ्गानामनावश्यकतोक्ता। मनुनापि सर्वान् धर्मान् विस्तरेणोक्त्वा शास्त्रान्ते ब्रह्माभ्यासं विधाय तत्पराणां स्वपूर्वोक्तधर्मानादर उक्तः। तादृश स्मृतेरियमेव श्रुतिर्मूलम्॥

**सर्वं शाम्भवीरूपम्।**

विहिताचरण इव निषिद्धाचरणेपि त्रिपुरसुन्दर्या भावनस्याविशेषात्। तत्भावनवैषम्यवतां भ्रष्टानामेव विधिनिषेधकृतो बन्धः इति भावः। अतएव भगवद्वाक्यम्।

**मत्कर्म कुर्वतां पुंसां कर्मलोपो भवेद्यदि।**
**तत्कर्म ते प्रकुर्वन्ति त्रिंशत्कोट्यो महर्षयः॥** इति॥

**आम्नाया न विद्यन्ते॥**

ज्ञातत्वात् तं प्रति वेदा अपि न प्रवर्तन्ते। अतएवोक्तं भगवत्पादैरध्यासभाष्ये ***अविद्यावद्विषयाणि शास्त्राणीति।*** उक्तयोरभ्यनुज्ञयोर्हेत्वर्थवादरूपे सूत्रे।

**गुरुरेकः।**

एकस्य यतोक्तलक्षणलक्षितस्य गुरोरुपास्त्या अयमर्थो लभ्यते। गुरुबाहुल्येनोपदेशबैषम्ये संशयावश्यम्भावात्। अतएव परशुरामकल्पसूत्रे एकगुरूपास्तिरसंशयः इति।

*लब्ध्वा कुलगुरुं सम्यक् न गुर्वन्तरमाश्रयेत्।* इति

कुलार्णवोक्तनिषेधस्येयं श्रुतिर्मूलम्। लब्ध्वेत्युक्त्यैव कौलिके गुरवोऽनन्ता इति शक्तिरहस्यवचनं तादृशगुरोरलाभाभिप्रायम्।

**सर्वैक्यताबुद्धिमन्ते।**

ऐक्यमिति स्वार्थे घ्यञ्। एवं रीत्या वर्तमानः साधकोष्यन्तकालेप्यद्वैतबुद्धिमेव लभते।

**आमन्त्रसिद्धेः।**

अधिकारोयं। इत आरम्भ मन्त्रसिद्धिपूर्वकाले ये नियमा अनुष्ठेयास्तेधर्माः कथ्यन्ते इत्यर्थः। तेन वक्ष्यमाणेष्वेकस्याप्यनादरे सिद्धिहानिरेवेति भावः।

**मदादिस्त्याज्यः।**

मादकद्रव्यसेवनजन्यो विकारविशेषो मदः। विकारान्तराण्यादिपदग्राह्याणि। अरिषड्वर्गश्च सन्तन्याज्य एव। मन्त्रसिध्युत्तरन्तु स्वतएव कामक्रोधादयो न प्रसरन्ति। विकार विशेषास्तु पूर्वमेवाभ्यनुज्ञाताः। तथाच यावन्न चलते दृष्टिः, आगलान्तं पिबेत् द्रव्यं। इति वचनयोर्मन्त्रसाधकसिद्धमन्त्रपरत्वेन व्यवस्थासिद्धेरविरोधः॥

**प्राकट्यं न कुर्यात्।**

स्वकीयमन्त्रदीक्षोपास्तिरहिता धर्मान्तरेष्वत्यन्तादरशीलाः स्वीयमन्त्रोपासकाभासाश्च सर्वेपि बहिर्मुखाः तैर्यथा न्यायमेदुपासक इति न ज्ञायेत तथोपास्तिं गोपयेत्। इदञ्च दीक्षान्तरेष्वपि तुल्यं। नैनमदीक्षितावृतयन्तं पश्यन्ति। इत्यादि तत्तत्प्रकरणगतवचनात्। यद्यप्यस्यादीक्षाया वेदेष्वारण्यककाण्डे विहितत्वादेव रहस्यतासिद्धा क्रत्वंगप्रवर्ग्यादिवत्। तथापि पुनः कण्ठरवेण तद्विधानं रहस्यान्तरेभ्यो वैलक्षण्यार्थं। धर्मान्तरेषु रहस्यभङ्गे क्रतुवैगुण्यमात्रमिहतु तथात्वे नरक एवेति। तथाच भगवान्परशुरामः **प्राकट्यान्निरयः**। इति।

**न कुर्यात्पशुसम्भाषणं।**

बहिर्मुखास्सर्वेपि पशवः विद्याहीनत्वात् एतदुपास्तेरेवविद्यात्वात्। *न शिल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते।* इत्यादि वचनात्। तैस्सह सम्यक् स्वहृदयज्ञापनपर्यन्तं भाषणं न कार्यं। तेनापातभाषणस्य न निषेधः।

**अन्यायो न्यायः।**

यदि कश्चिद्वावदूकः पूर्वोत्तरमीमांसान्यायैः कौलिकाचारं दूषयेत् तथापि न मनागपि कोपः कार्यः इत्याशयेनाह अन्याय इति। अल्पार्थो नञ्। अल्पबलो न्यायः पूर्वपक्षन्याय इति यावत्। सोपि न्याय एव। न हिं पूर्वपक्षोपि न्यायोपन्यासमन्तरेण प्रवर्तने अतस्तादृशन्यायसिद्धोपि न्याय एवायं पन्थाः। न चैवं सति सिद्धान्तन्यायेनापवादात्कथमाश्वासः। सिद्धान्तानामृषिभेदेन बहुविधत्वेन तदभिमानिभिस्तथा तथोपपादनस्य परस्परविरुद्धस्य पूर्वोत्तरतन्त्रस्थ देवाताधिकरणादिषु बहुशो दर्शनात्। वादिनो दौर्बल्यं न तु न्यायस्येति भावः। तर्काप्रनिष्ठानादिति भगबान् व्यासः। अचिन्त्याः खलु ये भावा न नांस्तर्केण योजयेत् इति च। ईदृशन्यायानां चित्तसमाधानैकफलकानां सम्प्रदायाविरोधेनैवोपन्यासस्योचितत्वात्। यथा श्रुतिस्मृतिसिम्प्रदायानामुत्तरोत्तरस्य दुरबलत्वेपि प्रकृततन्त्रे वैपरीत्यमूह्यम्। न चायं सुतरामन्यायः धर्मशास्त्रविद्भिरपि उत्तरोत्तरेण पूर्वपूर्वसंकोचस्य बहुशः स्वीकारात्।

**न गणयेत्कमपि।**

ब्रह्माणमपि स्वसिद्धान्तविरोधवादिनिं न गणयेत्। अतीव दृढं विश्वसेदित्यर्थः। अतएव *विश्वासभूयिष्ठं प्रामाण्यमिति* कल्पः।

**आत्मरहस्यं न वदेत्।**

प्राकट्यापत्तेर्मित्रायापि नैव वदेदित्यर्थः।

**शिष्याय वदेत्।**

अतएव *कर्णात्कर्णोपदेशेन सम्प्राप्तमवनीतलं।* इति स्मृतिः। ईदृशसम्प्रदायैकज्ञेयत्वेनैवेदृशार्थविषये श्रुतिस्मृत्यपेक्षया सदाचारस्यैव बलवत्त्वं। व्याकरणापेक्षया सत्प्रयोगरूपाचारस्येवेत्यादिकमूह्यं।

**अन्तःशाक्तः बहिश्शैवः लोके वैष्णवः।**

अप्राकठ्येपि कर्तव्यतामेव विवृणोति। शक्तेरुपास्तिरन्तःकरणैकवेद्या कार्या।

*कुचन्दनेन शाक्तानां भ्रूमध्ये बिन्दुरिष्यते।*

इति चिह्नानि विदितान्यपि विभूतिधारणादिशैवचिह्नैराच्छादितानि एव कार्याणि। शिवस्यापि शक्त्यभेदात्। *"मामेव पौरुषं रूपं गोपिकानयनामृतम्"* इत्यादि वचनैर्विष्णुस्वरूपस्य परशिवावरोधत्रिपुरसुन्दरीप्रकटरूपान्तरात्मकतया सभासु विष्णुनामाम्रेडनादिना विष्णूपास्तिमेव प्रकटयेत् इति सूत्रत्रयार्थः। अतएव विष्णुशिवशक्तीनामुत्तरोत्तरफलाधिक्यं उत्तरोत्तररहस्याभिप्रायेणोक्तं रहस्यनामसाहस्रे।

**अयमेवाचारः।**

सन्त्यन्येपि कौलिकानामाचारास्तन्त्रेषु विहिताः तेषां सर्वेषां मध्ये प्राकट्याभावरूपाचारः एवातीवमुख्य इत्यर्थः।

**आत्मज्ञानान्मोक्षः।**

कर्मवेदेतीवाचारएवासक्तस्सन्नात्मानुसन्धाने न प्रमाद्येत अपितूभयमपि सम्यगनुतिष्टेतेति द्योतनायेह पुनः स्मारणम्।

**लोकान्ननिन्द्यात्।**

प्रवाहणादिरूपाणि नानाविधानि दर्शनानि सर्वाण्येव तत्तदधिकारिभेदेन प्रमाणान्येव। तानि सर्वथा न निन्देत्। तन्निन्दनेन तदधिकारिणां संशयोत्पत्त्या स्वावलम्बितिदर्शनेप्यविश्वासः। कौलिकेप्यनधिकारादुभयभ्रषष्टतापत्त्याछिन्नाभ्रवन्नाशापत्तेः। तेनोपासकस्य निन्दनीयत्वापत्तेर्वैगुण्यं। अतएव *"न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनां।"* इति भगवान् कृष्णः। *सर्वदर्शनानिन्दनमिति* भार्गवरामश्च।

**इत्यध्यात्मं।**

सर्वदर्शनानिन्दनं क्वोपयुज्यते इत्याशङ्कायामाह परेषां छिन्नाभ्रवन्नाशोपेक्षया स्वस्य सर्वात्मभावे न्यूनतापत्तेरयमाचारोप्यात्मज्ञा न एवोपकुरुत इत्यर्थः।

**व्रतं न चरेत्।**

पुरुषार्थरूपाणि व्रतानि नाचरेत् तैः प्राप्यस्यार्थस्येतोप्यधिकस्याभावात्। यानि वर्णाश्रमधर्मरूपाणि पुरुषार्थसाधकत्वेन प्राप्तानित्वे प्राप्तानां नित्यनैमित्तिकानामङ्गन प्राप्तानि दर्शपूर्णमासाद्यंगभूतानि क्रत्वर्तव्रतानि तानि तु कार्याण्येव। नित्यनैमित्तिकानां त्यागाविधानात्।

**न तिष्ठेन्नियमेन।**

तस्यैवेदं विवरणं। नियमनस्य निर्बन्धरूपत्वेनात्मानुसन्धानविरोधित्वात्।

**नियमान्न मोक्षः।**

आत्मानुसन्धानाभावादेव मोक्षे विळम्बितत्वापत्तेरित्यर्थः।

**कौलप्रतिष्ठां न कुर्यात्।**

यदि कश्चिन्न्यायोपन्यासनिपुणः कौलं सन्न्यायैरेवस्थापयितुं क्षमेत सोपि नेमं मार्गं प्रतिष्ठापयेत् प्राकट्यभंगापत्तेः। अतएवैतच्छास्त्रविषये ग्रन्थकारस्यापि कौलप्रतिष्ठारूपत्वेन तत्रापि निषेधप्रवृत्त्या साम्प्रदायिकानां कतिपयांशानां अप्रकटनाय गुरुमुखादेव ज्ञेयमिति तत्र तत्र लेखः संगच्छते।

**सर्वसमो भवेत्।**

एतच्छास्त्रेष्वेवाचारान्निष्कृष्य विधत्ते प्राणिमात्रे स्थावरमात्रे वा समो भवेत्। अनन्यभावेन वर्तेत अतएव भागवते *खं वायुमग्निं सलिलं महीश्चेत्यादि।*

**समुक्तो भवति।**

स एव सद्यो मुच्यते तादृशपुरुषधौरेयात् ईषन्न्यूनास्तु शनैश्शनैर्मुच्यन्त एवेति भावः।

**पठेदेतानि सूत्राणि प्रातरुत्थाय देशिकः।**
**आज्ञासिद्धिर्भवेत्तस्य इत्याज्ञा पारमेश्वरी।।**

अर्थानुसन्धानपूर्वकमेतानि सूत्राणि यः पठति स एव देशिकः तस्यैवाज्ञासिद्धिः अप्रतिहताज्ञता शिवभाव इति यावत्। एवं परमेश्वरस्याज्ञा अतोऽनाश्वासो न कार्य इति भावः।।

**यश्चाचारविहीनोपि योवा पूजां न कुर्वते।**
**यदि ज्येष्ठं न मन्येत नन्दते नन्दने वने।।**

यः पूर्वोक्ताचारान्नानुतिष्ठति संशयापन्नमनास्तु तदुक्तविधां सपर्यां न करोति। वचनव्यत्ययश्छान्दसः। अयं पन्थास्सर्वोत्तम इति न मन्यते। एतादृशोप्युपासकाभासः उक्तफलालाभेपि स्वर्गमात्रं लभत एव। किमु यथावत्तदुपासकस्य यथोक्तफलप्राप्तिरिति भावः

इति कौलमार्गपारावारपारीण श्रीमद्भास्कररायविरचितं कौलोपनिषद्भाष्यं संपूर्णम्।

।श्रीरस्तु।

## १३. *श्रीललितोपनिषत्*

**ॐ परमकारणभूता शक्तिः केन नवचक्ररूपो देहः नवचक्रशक्तिमयं श्रीचक्रं वाराहीपितृरूपा कुरुकुल्ला बलिदेवता माता पुरुषार्थाः सागराः देहो नवरत्ने द्वीपः आधारनवकमुद्राः शक्तयः**

त्वगादि सप्तधातुभिरनेकैः संयुक्ताः संकल्पाः कल्पतरवः तेजः कल्पकोद्यानं रसनया भासमाना मधुराम्लतिक्तकटु-कषायलवणरसाः षड्रसाः क्रियाशक्तिपीठं कुण्डलिनी ज्ञानशक्तिः अहम् इच्छाशक्तिर्महात्रिपुरसुन्दरी ज्ञाता होता ज्ञानमर्ध्यं ज्ञेयं हविः ज्ञातृज्ञानज्ञेया नमो भेदभावनं श्रीचक्रपूजनं नियतिसहितशृङ्गारादयो नवरसा अणिमादयः कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमया ब्राह्म्यादयोऽष्टशक्तयः आधारनवकमुद्रा शक्तयः पृथ्व्यप्तेजो वाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वा घ्राणवाक्पाणिपादपायूपस्थ विकाराः षोडशशक्तय वचनादानगमनविसर्गानन्दादानोपादानोपेक्षाबुद्धयो ऽनङ्गकुसुमादिशक्तयोऽष्टौ अलंबुषाकुहूविश्वोदरीवरुणाहस्तिजिह्वायशस्विनीगान्धारीपूषासरस्वती इडापिंगलासुषुम्ना चेति चतुर्दशनाड्यः सर्वसंक्षो भिण्यादिचतुर्दशारदेवताः प्राणापानव्यानोदान समाननागकूर्मकृकलदेवदत्तधनञ्जया दशवायव सर्वसिद्धिप्रदादिबहिर्दशारदेवताः एतद्वायुदशक संसर्गोपाधिभेदेन रेचकपूरकपोषकदाहकाल्पावका मृतमिति प्राणसख्यत्वेन पञ्चविधोऽस्ति जाठराग्नि र्मनुष्याणां मोहको भक्ष्यभोज्यलेह्यचोष्यात्मकं चतुर्विधमन्नं पाचयति तदा काशवान् सकलाः सर्वज्ञत्वाद्यन्तर्दशारदेवताः शीतोष्णसुखदुःखेच्छा सत्वरजस्तमोगुणादि वशिन्यादि शक्तयोऽष्टौ शब्द स्पर्शरूपरसगन्धाः पञ्चतन्मात्राः पञ्चपुष्पबाणाः मनेक्षुधनुर्वल्यो वाणो रागः पाशो द्वेषोऽङ्कुशोऽव्यक्तमहत्तत्वाहङ्कारकामेश्वरी वज्रेश्वरी भगमालिन्योऽन्तस्त्रिकोणाग्रदेवताः पञ्चदशतिथिरूपेण कालस्य परिणामावलोकन पञ्चदशनित्या शुद्धानुरूपाधिदेवता निरुपाधिसार्वदिव कामेश्वरी सदानन्दपूर्णाः स्वात्म्यैक्यरूपललिता कामेश्वरि सदानन्दघनपूर्णाः स्वात्म्यैक्यरूपा देवता ललितामिति साहित्यकरणं सत्वं कर्त्तव्यमकर्त्तव्यमिति भावनामुक्ता उपचारा अहन्त्वमस्ति नास्ति कर्त्तव्याकर्त्तव्यमुपासति उपासितव्यानुपासितव्यमिति विकल्पना मनोविलापनं होमः बाह्याभ्यन्तरकरणानां रूपग्रहणयोग्य-तास्तीत्यावाहनं तस्य बाह्याभ्यन्तरकरणानामेकरूपविषयग्रहणमासनम् रक्तशुक्लपदैकीकरणं पाद्यं उज्ज्वलदामोदानन्दा सानन्दनमर्ध्यम् स्वच्छास्वतः शक्तिरित्याचमनं चिच्चन्द्रमयी स्मरणं स्नानम् चिदग्निस्वरूप परमानन्द शक्तिस्मरणं वस्त्रम् प्रत्येकं सप्तविंशतिधा भिन्नत्वेन इच्छाक्रियात्मकब्रह्मग्रन्थ मयी सतन्तु ब्रह्मनाडी ब्रह्मसूत्रं सव्यातिरिक्तवस्त्रं सङ्गरहितं स्मरणं विभूषणम् स्वच्छन्दपरिपूर्णस्मरणं गन्धः समस्तविषयाणां मनः स्थैर्येणानुसन्धानं कुसुमस्तेषामेव सर्वदा स्वीकरणं धूपः पवनाच्छिनोर्ध्वज्वालासच्चिदाह्लादा काशदेहो दीपः समस्तयातायातवर्जननैवेद्यं अवस्थात्र यैकीकरणताम्बूलं मूलाधारादाब्रह्मरन्ध्रपर्यन्तं ब्रह्म रन्ध्रादामूलाधारपर्यन्तं गतागतरूपेण प्रादक्षिण्य तुरीयावस्थानं संस्कारदेहशून्यं प्रमादितावतिमज्जनं बलिहरणं सत्वमस्ति कर्त्तव्यमकर्त्तव्यमौदासीन्य मात्मविलापनं होमः भावनाविषयाणामभेदभावना तर्पणं स्वयन्तत् पादुकानिमज्जनं परिपूर्णध्यानं एव मूर्तित्रयं भावनया युक्तो मुक्तो भवति तस्य देवता त्वैक्यसिद्धिः चितिकार्याण्यप्रयत्नेन सिध्यन्ति स एव शिवयोगीति कथ्यते।

॥ इति श्री त्रिपुरोपनिषत् ॥

## १४. श्रीचक्रोपनिषत्

ॐ भद्र कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांर्सस्तनूर्गिभिर्व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्ताक्ष्यों अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु।। ॐ शान्तिः शान्तिः शान्तिः।।

ॐ अथा ह वै चक्रे नित्यक्रान्ते।।१।। गौरी मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी। अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्।।२।। प्रत्यहं ससङ्गतिं सहस्रं कलशान् स्थाप्य शतं वा नव वा सर्वाभावे पूर्णाभिपेकं चरेत्।।३।। अष्टाष्टकं चरेत्। पञ्चपञ्चकं बा चरेत्। सर्वाभावे शतं वा पूजयेत्। अमृतत्त्वं गच्छति।।४।। श्रीचक्रन्यासं चरेत्। स व्यापकत्वं गच्छति।।५।। मूलाधाराद् बिलान्तं क्रमेण न्यसेत्। स्वराट् चक्रं विराट्चक्रं सम्राट्चक्रं विराज्यचक्रं विश्वरूपचक्रं शत्रुजिच्चक्रं क्रमेण सप्तकलामयं न्यसेत्। स शिवो भवति। स कविर्भवेत्। स सर्वसिद्धीश्वरो भवेत् स भुवनाराधितो भवेत्।। निर्विकल्पेन मनसा यश्चरेत् शक्तिदेहे स कालीरूपो भवेत्। विना शक्तिं न मोक्षः, न ज्ञानं, न सत्यं, न धर्मः, न तपः, न हरिः न हरः, न विरिञ्चिः। सर्वं शक्तियुक्तं भवेत्। तत्संयोमारत सिद्धीश्वरी भवेत् इतिशिवम्।। ओं भद्रं कर्णेभिरिति शान्तिः।।

## १५. षोडशी उपनिषत्

ओंपरमकारणभूताशक्तिः केनन्वचक्ररूपोदेहः नवचक्रशक्तिमयंश्रीचकँ व्वाराहीपितृरूपा कुरुकुल्लाचंलिदेवता मातषुरुषार्थाः सागराः देहोनवत्नेद्वीपः आधारनवकमुद्राः शक्तयःत्वगादि-सप्तधातुभि रनेकैःसँय्युक्ताः सङ्कल्पाः कल्पतरवः तेजःकल्पकोद्यानंरसनयाभा व्यमानामधुराम्लतिक्तक-टुकषायालवणरसाः षड्रसाःक्रिया शक्तिपीठङ्कुण्डलिनीज्ञानशक्तिः अहमइच्छाशक्तिर्म्महात्रिपुरसुन्द रीज्ञाताहोता ज्ञानमग्र्ध्यज्ञेयंहविः ज्ञातृज्ञानज्ञेयानमोभेदभावनं श्रीचक्रपूजनन्नियतिसहितशृङ्गारादयोनवरसा अणिमादयः कामक्रोधलोभमोहमदमात्सर्य्यपुण्यपापमयाब्रह्मयाद्यष्टशक्तयः आधारं नवकमुद्रशक्तयः पृथ्व्यप्तेजीवाय्वाकाशश्रोत्रत्वक्चक्षुर्ज्जेह्वाघ्राण वाक्यपाणिपादपायूपस्थविकाराः षोडशशक्तयःवचना-दानगमनविसर्ग्गानन्दादानोपादानोपेक्षाबुद्धयोऽ नङ्गकुसुमादिशक्तयोष्टौ अलम्बुषाकुहूविश्वोदरीवरुणा-हस्तिजिह्वायशस्विनी गान्धारीपूषासरस्वतीइडापिङ्गलासुषुम्नाचेतिचतुर्द्दशनाड्यः सर्व्वसङ्क्षोभिण्या दिचतुर्द्दशारदेवताः प्राणापानव्यानोदानसमाननागकूर्म्मकृकलदेवदत्तधनञ्जयादशवायवः सर्व्वसिद्धि-प्रदादिबहिर्द्दशारदेवताः एतद्वायुदशकंससर्ग्गोपाधिभेदेन रेचकपूरकपोषकदाहकाल्पावकामृतमिति प्राणसख्यत्वेनपञ्चविधोस्ति जाठराग्निर्म्मनुष्याणांम्मोहकोभक्ष्यभोज्यलेह्य चोष्यात्मकञ्चतुर्व्विध-मन्नम्पाचयति।। तदाकाशवान्सकलाः सर्व्वज्ञत्वाद्यःतर्द्द शारदेवताः शीतोष्णसुखदुःखेच्छासत्त्वरजस्त-मोगुणआदिवशिन्यादिशक्तयोष्टौशब्दस्पर्शरूपरसगन्धाः पञ्चतन्मात्राः पञ्चपुष्पबाणाः मनेक्षुधनुर्व्वल्यो-

बाणोरागः पाशोद्वेषोऽङ्कुशोऽव्यक्तमहत्तत्त्वाहङ्कारकामेश्वरी वज्रेश्वरीभगमालिन्योऽन्तस्त्रिकोणाग्रदेवताः पञ्चदशतिथिरूपेणकालस्यपरिणामावलोकनपञ्चदशनित्याशुद्धानु रूपाधिदेवतानिरुपाधिसार्व्वदेव-कामेश्वरी सदानन्दपूर्णाः स्वात्म्यैक्यरूपललिता कामेश्वरीसदानन्दघनपूर्णाः स्वात्म्यैक्यरूपादेव-तालिलितामिति साहित्यकरणं सत्त्वंकर्त्तव्यमकर्त्त्व्यमितिभावनामुक्ताउपचारा अहन्त्वमस्ति नास्तिकर्त्तव्याकर्त्तव्य मुपासितव्यानुपासितव्यमिति विकल्पनामनोविलापनंहोमः बाह्याभ्यन्तरकरणानां रूपग्रहणयोग्यतास्तीत्यावाहनम् तस्यबाह्याभ्यन्तरकरणानामेकरूपविषयग्रहणमासनम् रक्तशुक्ल-पदैकीकरणम्पाद्यम् उज्ज्वलदामौदानन्दासानन्दनमर्ग्घ्यम् स्वच्छास्वतः शक्तिरित्याचमनंचिच्चन्द्रमयी-स्मरणंस्नानंचिदग्निस्वरूपपरमानन्दसक्तिस्मरणँव्वस्त्रं प्रत्येकंसप्तविंशतिधा भिन्नत्वेनइच्छाया-क्रियात्मकब्रह्मग्रन्थिमयी सतन्तुब्रह्मनाडीब्रह्मसूत्रं सव्यातिरिक्तवस्त्रसङ्गरहितस्मरणँव्विभूषणम् स्वच्छन्दपरि पूर्ण्णस्मरणङ्गन्धः समस्तविषयाणाम्मनः स्थैर्य्येणानुसन्धानङ्कुसुमन्तेषामेव सर्वदास्वीकरणन्धूपः पवनाच्छिन्नोर्ध्वज्वलासच्चिदाह्लादाकाशदेहोदीपः समस्तयाता यातिवर्ज्जनन्नैवेद्यम् अवस्थात्रयै-कीकरणन्ताम्बूलम् मूलाधारादौब्रह्मरन्ध्रपर्य्यन्तम्ब्रह्मरन्ध्रादौमूलाधारपर्य्यन्तङ्गतागतरूपेण प्रादक्षिण्यन्तु-रीयावस्थानम् संस्कार देहशून्यप्रमादितावतिमज्जनम्बलिहरणम् सत्त्वमस्तिकर्तव्यमौदासी-न्यमात्मविलापनंहोमः भावनाविषयाणामभेदभावनातर्प्पणम् स्वयन्तत्पादुकानिमज्जनम्परिपूर्ण्णध्यानम् एवम्मूर्त्तित्रयभावनयायुक्तोमुक्तोभवतितस्यदेवतात्मैक्यसिद्धि चितिकार्य्याण्यप्रयत्नेनसिद्ध्यन्ति-सएवशिवयोगीतिकथ्यते।।

।।इतिषोडश्युपनिषत् समाप्ता।।

## १६. *श्रीललितामहात्रिपुरसुन्दर्युपनिषत्*

**(बह्वृचवेदीया)**

**(ॐ वाङ्मे मनसीति शान्ति)**

हरिः ॐ देवी ह्येकाग्र आसीत्। सैव जगदण्डमसृजत्। कामकलेति विज्ञायते। शृंगारकलेति विज्ञायते। तस्या एव ब्रह्माजीजनत्। विष्णुरजीजनत्। रुद्रोऽजीजनत्। सर्वे मरुद्गणा अजीजनन्। गन्धर्वाप्सरसः किन्नरावादित्रवादिनस्स्मन्तादजीजनन्। भोग्यमजीजनत्। सर्वमजीजनत्। सर्वं शाक्तमजीजनत्। अण्डजं स्वेदजमुद्भिज्जं जरायुजं यत्किञ्चैतत्प्राणिस्थावरजङ्गमं मनुष्यमजीजनत्। सैषा पराशक्तिः। सैषा शांभवी विद्या। कादि विद्येति वा हादि विद्येति वा सादिविद्येति वा रहस्यं। ओं ओं वाचिप्रतिष्ठा। सैव पुरत्रयं शरीरत्रयं व्याप्य बहिरन्तरवभासयन्ती देश कालवस्त्वन्तरासङ्गान् महात्रिपुरसुन्दरी वै प्रत्यक्चितिः। सैवात्मा ततोऽन्यदसत्यमनात्मा। अत एषा ब्रह्मसंवित्तिर्भावा भावकला विनिर्मुक्ता चिद्विद्या अद्वितीय ब्रह्मसंवित्तिः सच्चिदानन्दलहरी महात्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य

स्वयमेकैव विभाति। यदस्ति सन्मात्रं। यद्विभाति चिन्मात्रं। यत्प्रियमानन्दं तदेतत्पूर्वाकारा महात्रिपुरसुन्दरी। त्वञ्चाहञ्च सर्वं विश्वं सर्वदेवता। इतरत्सर्वं महात्रिपुरसुन्दरी। सत्यमेकं ललिताख्यं वस्तु तदद्वितीयमखण्डार्थं परं ब्रह्म। पञ्चरूपपरित्यागादस्वरूपप्रहाणतः। अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महदिति।।

प्रज्ञानं ब्रह्मेति वा अहं ब्रह्मास्मीति वा भाष्यते। तत्त्वमसीत्येव संभाष्यते। अयमात्मा ब्रह्मेति वा ब्रह्मैवाहमस्मीति वा योऽहमस्मीति वा सोहमस्मीति वा योऽसौ सोहमस्मीति वा या भाव्यते सैषा षोडशी श्रीविद्या पञ्चदशाक्षरी श्री महात्रिपुरसुन्दरी बालाम्बिकेति वा बगलेति वा मातङ्गीति स्वयंवरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति वाराहीति तिरस्करिणीति राजमातंगीति वा शुकश्यामलेति वा लघुश्यामलेति वा अश्वारूढेति वा प्रत्यंगिरा धूमावती (पा. गायत्री) सावित्री सरस्वती ब्रह्मनन्दकलेति।।

ऋचो अक्षरे परमे व्योमन्। यस्मिन्देवा अधिविश्वे निषेदुः। यस्तन्नवेदकिमृचा करिष्यति। य इत्तद्विदुस्त इमे समासते। इत्युपनिषित्। त्वाङ्मे मनसीति शान्तिः।।

।।इति बह्वृचवेदीया ललितिमहात्रिपुरसुन्दर्युपनिषत्समाप्ता।।

## १७. *त्रिपुरोपनिषत्*

।।ओम् वाङ्मे मनसीति शान्तिः।।

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्त्संदधाम्यृतं वदिमयामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारमवतुवक्तारम्।। ॐ शान्तिः शान्तिः शान्तिः।।

तिस्रः पुरस्त्रिपथा विश्वचर्षणी अत्राकथा अक्षराः सन्निविष्टाः। अधिष्ठायैनामजरा पुराणी महत्तरा महिमा देवतानाम्।।१।। नवयोनीर्नव चक्राणि दीधिरे नवैवयोगा नव योगिनीश्च। नवानां चक्रा अधिनाथा स्योना नवः मद्रा नव भुद्रा महीनाम्।।२।। एका सा आसीत्प्रथमा सा नवासीदासोनविंशदासोनत्रिंशत्।। चत्वारिंशदथ तिस्नः समिधा उशतीरिवि मातरो मा विशन्तु।।३।। ऊर्ध्वज्वलज्ज्वलनं ज्योतिरग्रे तमो वै तिरश्चीनमजरं तद्रजोऽभूत्।। आनन्दनं मोदनं ज्योतिरिन्दोरेता उवै मण्डला मण्डयन्ति।।४।। तिरुश्च रेखाः सदनानि भूमेस्त्रिविष्टपास्त्रिगुणास्त्रिप्रकाराः। एतत्पुरं पूरकं पूरकाणां मत्रः प्रथेते मदनो मदन्या।।५।। मदन्तिका मानिनी मङ्गला च सुभगा च सा सुन्दरी सिद्धिमत्ता। लज्जा मतिस्तुष्टिरिष्टा च पुष्टा लक्ष्मीरुमा ललिता लालपन्ती।।६।। इमां विज्ञाय सुधया मदन्ति परिस्त्रुता तर्पयन्तः स्वपीठम्।। नाकस्य पृष्ठे महतो वसन्ति परं धाम त्रैपुरं चाविशन्ति।।७।।

कामो योनिः कमला वज्रापाणिर्गुहा हसा मातरिश्वाऽभ्रमिद्रः।। पुनर्गुहा सकला मायया च पुरूच्येषा निश्वमाताऽऽदिविद्या।।८।। षष्ठं सप्तममथ बह्निसारथिमस्या मूलत्रिकमादेशयन्तः। कथ्यं कविं कल्पकं काममीशं तुष्टुवांसो अमृतत्वं भजन्ते।।९।। त्रिविष्टपं त्रिमुखं विश्वमातुर्नवरेखाः स्वरमध्यं तदीले। बृहत्तिथीर्दशपञ्चादिनित्या सा षोड़शी पुरमध्यं बिभर्त्ति।।१०।। द्वा मण्डलाद्वा स्तना बिम्बमेकं मुखं चाधस्त्रीणि गुहा सदनानि।। कामीं कलां काम्यरूपां विदित्वा नरो जायते कामरूपश्च काम्यः।।११।। परिस्तुतं झषमाद्यं पलं च भक्तानि योनीः सुपरिष्कृतानि। निवेदयन्देवतायै महत्यै स्वात्मीकृत्य सुकृती सिद्धिमेति।।१२।। सृण्येव सितया विश्वचर्षणिः पाशेन प्रतिबध्नात्यभीकान्।। इषुभिः पञ्चभिर्धनुषा च विध्यत्यादिशक्तिररुणा विश्वजन्या।।१३।। भगः शक्तिर्भगवान काम ईश उभा दाताराविह सौभगानाम्। समप्रधानौ समसत्त्वौ समोतयोः समशक्तिरजरा विश्वयोनिः।।१४।। परिस्तुता हविषा पावितेन प्रसंकोचे गलिते वैमनस्तः। शर्वः सर्वस्य जगतो विधाता धर्ता हर्ता विश्वरूपत्वमेति।।२५।। इयं महोपनिषत्रिपुराया यामक्षस परमे गीर्भिरीट्टे। एषर्ग्यजुः परमेतच्च सामेवायमथर्वेयमन्या च विद्याम्।।१६।। एवं वेदेत्युपनिषत्।। ओं वाङ्भे मनसीति शान्तिः।। हरिः ओं तत्सत्।।

सिद्धिमत्ते त्यायर्वः पाठः

।।इति श्रीत्रिपुरोपनिषत्समाप्ता।।

## १८. देव्यथर्वशीर्षोपनिषत्

ओं भद्रकर्णेभिरिति शान्तिः।।

हरिः ॐ सर्वे वै देवा देवीमुपतस्थुः। कासि त्वं महादेवि।।१।। साब्रवीदहं ब्रह्मस्वरूपिणी। मत्तः प्रकृतिपुरुषात्मकं जगत् शून्यञ्चाशून्यं च अहमानन्दानानन्दा? विज्ञानाविज्ञाने अहं। ब्रह्माब्रह्मणी वेदितव्ये। इत्याहाथर्बणीश्रुतिः।।२।। अहं पञ्चभूतान्यपञ्चभूतानि। अहमखिलं जगत्। वेदोहमवेदोहं।।३।। विद्याहमविद्याहं। अजाहमनजाहं। अधश्चोर्ध्वं च तिर्यक्चाहं अहं। रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुतविश्वदेवैः। अहं मित्रावरुणावुभा बिभर्म्यहमिन्द्राग्नी अहमश्विनावुभौ।।४।। अहं सोमं त्वष्टारं पूषणं भगं दधायहं। विष्णुमुरुक्रमं ब्रह्माणमुत प्रजापतिं दधामि।।५।। अहं दधामि द्रविणं हविष्मते सुप्राव्ये इये यजमानाय सुन्वते। अहं राष्ट्रीसंगमनीवसूनामहं सुवे पितरमस्य मूर्धन्।।६।। मम योनिरप्स्वन्तस्समुद्रे।। य एवं वेद स देवीपदमाप्नोति।।७।। ते देवा अब्रुवन्। नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म तां।।८।। तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टां। दुर्गां देवीं शरणमहं प्रपद्ये सुतरां नाशयते तमः। देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना

धेनुर्वागस्मानुपसुष्टुतैतु।।१०।। कालरात्रिं ब्रह्मस्तुतां वैष्णावीं स्कन्दमातरं सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम्।।११।। महालक्ष्मीश्च विद्महे सर्वसिद्धिश्च धीमहि। तन्नो देवी प्रचोदयात्।।१२।। अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव। तां देवा अन्वजायन्त भद्रा अमृतबन्धवः।।१३।। कामो योनिः कामकला वज्रपाणिर्गुहाहसामातरिश्वाभ्रमिन्द्रः। पुनर्गुहा सकला मायया च पुरू- व्यषा विश्वमातादिविद्यों। एषात्मशक्तिः एषा विश्वमोहिनी पाशाङ्कुशधनुर्बाणधरा एषा श्रीमहाविद्या।।१५।। य एवं वेद सशोकं तरति। नमस्ते अस्तु भगवति भवति मातरस्मान्पातु सर्वतः।।१७।। सैषाष्टौ वसवः सैषैकादशरुद्राः। सैषा द्वादशादित्याः। सैषा विश्वेदेवास्सोमपा असोमपाश्च।। सैषा यातुधाना असुरा रक्षांसि पिशाचा यक्षास्सिद्धाः। सैषा सत्त्वरजस्तमांसि सैषा प्रजापतीन्द्रमनवः। सैषा ग्रहनक्षत्रज्योतीषि-कलाकाष्ठादिकालरूपिणी। तामहं प्रणौमि नित्यं।।१८।। तापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीं। अनन्तां विजयां शुद्धां शरण्यां शिवदां शिवां।।१९।। वियदीकारंसयुक्तं वीतिहोत्रसमन्वितं। अर्धेन्दुलसितं देव्याबीजं सर्वार्थसाधकं।।२०।। एवमेकाक्षरं मन्त्रं यतयः शुद्धचेतसः। ध्यायन्ति परमानन्दमया ज्ञानांबुराशयः।।२१।। वाङ्माया ब्रह्मभूस्तस्मात्षष्ठं वक्त्रसमन्वितं। सूर्योवामश्रोत्रबिन्दुसंयुक्तष्टात्तृतीयकः।।२२।। नारायणेन संयुक्तो वायुश्चाधरसंयुक्ततः। विच्चेनवार्णकोणुस्स्यान्महदानन्ददायकः।।२३।। हृत्पुण्डरीकमध्यस्थां प्रातः सूर्यसमप्रभां। पाशांकुशधरां सौम्यां वरदाभयहस्तकां। त्रिनेत्रां रक्तबसनां भक्तकामदुघां भजे।।२४।। नमामि त्वामहं देवीं महाभयविनाशिनीं।। महादुर्गप्रशमनी महाकारुण्यरूपिणीं।।२५।। यस्याः स्वरूपं ब्रह्मादयो न जानन्ति तस्मादुच्यतेऽज्ञेया। यस्या अन्तो न विद्यते तस्मादुच्यतेऽनन्ता। यस्या ग्रहणं नोपलभ्यते तस्मादुच्यतेऽलक्ष्या। यस्या जननं नोपलभ्यते तस्मादुच्यतेऽजा। एकैव सर्वत्र वर्तते तस्मादुच्यते एका। एकैव विश्वरूपिणी तस्मादुच्यते नैका। अत एवोच्यतेऽज्ञेयानन्तालक्ष्याजैका नैकेति।।२६।। मन्त्राणां मातृकादेवी शब्दानां ज्ञानरूपिणी। ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी।।२७।। यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता। [ दुर्गात्संत्रायते यस्माद्देवी दुर्गेति कथ्यते। प्रपद्ये शरणं देवीं दुदुर्गे दुरितं हर। ] तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीं। नमामि भवभीतोऽहं संसारार्णवतारिणीं।।२८।। इदमथर्वशीर्षं योऽधीते सपञ्चाथर्वशीर्षजपफलमवाप्नोति। इदमथर्वशीर्ष मज्ञात्वा योऽर्चां स्थापयति शतलक्षं प्रजप्त्वापि सोऽर्चा सिद्धिन्न[२] विन्दति।।२९।। शतमष्टोत्तरं चास्याः पुरश्चर्याविधिः स्मृतः।।३०।। दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्यते। महादुर्गाणि तरति महादेव्याः प्रसादतः।।३१।। सायमधीयानो[३] दिविसकृतं पापं नाशयति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायंप्रातःप्रयुञ्जानोऽपापो भर्वात। निशीथे तुरीयसन्ध्यायां जप्त्वा वाक्सिद्धिर्भवति। नूतनप्रतिमायां जप्त्वा देवतासानिध्यं भवति। प्राणप्रतिष्ठायां जप्त्वा प्राणानां प्रतिष्ठा भवति। भौमाश्विन्यां महादेवीसन्निधौ जप्त्वा महामृत्युं तरति। य एवं वेदेत्युपनिषत्।।३२।। ओं भद्रं कर्णेभिरिति शान्तिः।। हरिः ॐ तत्सत्।।

।।इति देव्यथर्वशीर्षोपनिषत् समाप्ता।।

# २. श्रीललिता खण्डः

## १. श्री त्रिपुरसुन्दरी कवचम्

अस्य श्री महात्रिपुरसुन्दरी कवचस्तोत्रमन्त्रस्य दक्षिणामूर्ति स्वरूपानन्द भैरव ऋषिः दैवी गायत्री छन्दः महात्रिपिुरसुन्दरी देवता ऐं क-५ बीजं, क्लीं ह६ कीलकं सौः सकल हों शक्तिः श्री महात्रिपुरसुन्दरी कवचस्तोत्रमन्त्रजपे विनियोगः। मूलेन षडङ्गम् कुर्यात्।

ध्यानम्—

सकुँकुमविलेपनामलिकचुम्बिकस्तूरिकां। समन्दहसितेक्षणां सशरचापपाशांकुशाम् ।।
अशेषजनमोहिनीमरूणमाल्यभूषाम्बरां। जपाकुसुमभासुरां जपविधौ स्मरेदम्बिकाम् ।।
चतुर्भुजेचद्रकलावतंसे कुचोन्नते कुंकुमरागशोणे। पंड्रेक्षुपाशांकुशपुष्पवाणहस्ते नमस्ते जगदेकमातः ।।

पार्वत्युवाच—

भगवन् सर्वलोकेश सर्वलोकैकवन्दित । गुह्याद्गुह्यतमं तत्त्वं श्रोतुमिच्छामि तत्त्वतः।।

श्री ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि । यस्य स्मरणमात्रेण चक्रपूजाफलं लभेत्।।
ऋषिश्च दक्षिणामूर्तिश्छन्दोऽनुष्टुब् प्रकीतितम् । देवता सुन्दरी प्रोक्ता विनियोगः प्रकीर्तितः।।
ककारः पातु शीर्षं मे एकारः पातु फालके । ईकारः पातु वक्त्रं मे लकारः कूर्मयुग्मके।।
ह्रींकार पातु हृदयं वाग्भवश्च सदाऽवतु । हकारः पातु जठरं सकारो नाभिदेशके।।
ककारः पार्श्वभागे च हकारः पातु पृष्ठके । लकारश्च नितम्बे मे ह्रींकारः पातु मूलके।।
कामराजः सदा पातु जठरादिप्रदेशके । सकारः पातु कट्यां मे ककारः पातु लिङ्गके।।
लकारो जानुनी पातु ह्रीङ्कारो जङ्घयुग्मके । शक्तिबीजं सदा पातु मूलविद्या सदाऽवतु।।
त्रिपुरा मां सदा पातु त्रिपुरेशी च सर्वदा । त्रिपुरा सुन्दरी पातु वसुपत्रस्य देवता।।
त्रिपुरावासिनी पातु त्रिपुराश्रीः सदाऽवतु । त्रिपुरा मालिनी पातु त्रिपुरा सिद्धिदाऽवतु।।
त्रिपुराम्बा तथा पातु पातु त्रिपुरभैरवी । अणिमाद्यास्तथा पांतु ब्राह्मय्द्याः पांतु मां सदा।।
नवमुद्रास्तथा पान्तु कामाकर्षणिपूर्विकाः । पान्तु मां षोडशारे तु अनङ्गकुसुमादिकाः।।
पान्तु मामष्टपत्रेषु सर्वसंक्षोभणादिकाः । पान्तु मां चक्रकोणेषु सर्वसिद्धिप्रदायिकाः।।
पान्तु मां बाह्यकोणेषु मध्यादिकोणके तथा । सर्वज्ञाद्यास्तथा पान्तु सर्वाभीष्टप्रपूरिकाः।।

**वशिन्याद्यास्तथा पान्तु वसुपत्रस्य देवताः । त्रिकोणस्यान्तरालेषु पान्तु मामायुधानि च।।**

**कामेश्वर्यादिकाः पांतु त्रिकोणे कोण संस्थिताः । बिन्दुचक्रे तथा पान्तु श्रीमत्त्रिपुरसुन्दरी।।**

**इदं श्रीकवच नित्यं त्रिसन्ध्यं यः पठेन्नरः । सर्वसिद्धिभवाप्रोति सर्वाभीष्टफलप्रदम् ।।**

।।इति श्री त्रिपुरसुन्दरी कबचं समाप्तम्।।

## २. श्रीशुद्ध शक्तिमालास्तोत्रम्

श्रीपार्वत्युवाच—

**भगवन् देवदेवेश सर्वज्ञ करुणानिधे। शुद्धशक्तिमहामन्त्रं ब्रूहि मे सकलेष्टदम्।।**

**श्रृणु देधि प्रवक्ष्यामि कवचं सुन्दरीप्रियम् । रहस्यातिरहस्यं च मन्त्ररूपमिदं प्रिये।।**

**शुद्ध नमोन्ताः स्वाहान्तास्तर्पणान्ता जयान्तकाः । प्रवृत्तयः पञ्चधा स्युर्मालासु निखिलास्वपि।।**

**शुद्धायाः शक्तिमालाया जपस्तेन विधीयते । पञ्चधा जायते नित्यं पुरश्चर्याफलं लभेत्।।**

**एषा विद्या महाविद्या समयाचारवर्त्तिनी । अतिवीर्यतरा विद्या सूर्यकोटिसमप्रभा।।**

**कुलाङ्गना कुलं सर्वं मदीयं परमेश्वरि । देवी रक्षतु सर्वाङ्ग दिव्याङ्ग भोगदायिनी।।**

**निरालम्बे महातल्पे लीयमाना सुरेश्वरी । हुङ्कारञ्च ततः कृत्वा पूजयेद्धवि मण्डले।।**

**पूजान्ते वामहस्तेन ह्लींकारं त्रिविधं जपेत् । पश्चात्त्रिपुरमन्त्रेण मूलमन्त्रेण शङ्कर्त ।।**

**नवावरणदेवीनां ललितायाः महोजसः । एकत्र गणनारूपां मन्त्रो मन्त्रार्थगोचरः ।।**

**मालामन्त्रविधानेन क्रमणोच्चारणं भवेत् ।**

**ॐ नमोऽस्य श्रीशुद्धशक्ति-खड्गमालामन्त्रस्य वरुणादित्य ऋषये नमः शिरसि, दैवीगायत्री छन्दसे नमः मुखे, सात्विक ककार भट्टारक पीठस्थितशिव कामेश्वराङ्क निलयायै कामेश्वरी ललिता महाभट्टारिकायै देवतायै नमः हृदये, क-५ बीजाय नमः गुह्ये, स-४ शक्तये नमः पादयोः, ह-६ कीलकाय नमः नाभौ, ललिता महात्रिपुरसुन्दरीप्रसादसिद्ध्यर्थे जपे विनियोगाय नमः सर्वाङ्गे। मूलेन व्यापकं कृर्यात्।**

ध्यानम्—

**अरुणां करुणातरङ्गिताक्षीं, धृतपाशांकुशराणचापहस्ताम् ।**
**अणिमादिभिरावृतां मयूखै रहमित्येव विभावये भवानीम् ।।**
**अतिमधुरचापहस्तामपरिमिति मोदमान सौभाग्याम् ।**
**अरुणामतिशय करुणामभि नव कुलसुन्दरी वन्दे ।।**

मानसोपचारैः सम्पूज्य, ॐ ऐं ह्रीं श्रीं हस्क्लें हस्क्रों हस्क्रौं श्रीं ह्रीं ऐं समयिनि मदिरानन्दसुन्दरि समस्तसुरासुरवन्दिते भुजङ्गभूपालमौलिमालार्चितचरणकमले विकटदन्तखटाटोपनिवारिणि मदीयं शरीरं बज्रमयं कुरु कुरु दुर्जनं हन हन दुष्टमहीपालान् क्षोभय क्षोभय परचक्रं भञ्जय भञ्जय जयंकरि गगनगायिनि त्रैलोक्य स्वामिनि समल वरयूं रमल वरयूं यमल वरयूं समल वरयूं श्री भैरवि प्रसीद प्रसीद स्वाहा।

तादृशं खड्गमाप्नोति येन हस्तस्थितेन वै।
अष्टादशमहाद्वीपसम्राट् भोक्ता भविष्यति।।

## ह्रामित्यादि षडङ्ग न्यासः

ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दरि हृदयदेवि शिरोदेवि शिखादेवि कवचदेवि नेत्रदेव्यस्त्रदेवि कामेश्वरि भगमालिनि नित्यक्लिन्ने भेरुण्डे वह्निवासिनि महावज्रेश्वरि शिवदूति त्वरिते कुलसुन्दरि नित्ये नीलपताके विजये सर्वमङ्गले ज्वालामालिनि चित्रे महानित्ये परमेश्वरपरमेश्वरि मित्रीशमयि षष्ठीशमयि उड्डीशमयि चर्यानाथमयि लोपामुद्रामय्यगस्त्यमयि कालतापनमयि धर्माचार्यमयि मुक्तकेशीश्वरमयि दीपकलानाथमयि विष्णुदेवमयि प्रभाकरदेवमयि तेजोदेवमयि कल्याणदेवमयि रामदेवमयि वासुदेवमयि श्रीरामानन्दमय्यणिमासिद्धे लघिमासिद्धे महिमासिद्ध ईशित्वसिद्धे वशित्वसिद्धे प्राकाम्यसिद्धे भुक्तिसिद्ध इच्छासिद्धे प्राप्तिसिद्धे सर्वकामसिद्धे ब्राह्मि माहेश्वरि कौमारि वैष्णवि वाराहिमाहेन्द्रि चामुण्डे महालक्ष्मीः सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्ववशङ्करि सर्वोन्मादिनि सर्वमहांकुशे सर्वखेचरि सर्वबीजे सर्वयोने सर्वत्रिखण्डे त्रैलोक्यमोहनचक्रस्वामिनि प्रकटयोगिनि कामाकर्षिणि बुद्ध्याकर्षिण्यहङ्काराकर्षिणि शब्दाकर्षिणि स्पर्शाकर्षिणि रूपाकर्षिणि रसाकर्षिणि गन्धाकर्षिणि चित्ताकर्षिणि धैर्याकर्षिणि स्मृत्याकर्षिणि नामाकर्षिणि वीजाकर्षिण्यात्माकर्षिण्यमृताकर्षिणि शरीराकर्षिणि सर्वाशापरिपूरकचक्रस्वामिनि गुप्तयोगिन्यनङ्ग-कुसुमे ऽ नङ्गमेखले ऽ नङ्गमदने ऽ नङ्गमदनातुरे ऽ नङ्गरेखे ऽ नङ्गवेगिन्यनङ्गांकुशे ऽ नंगमालिनि सर्वसंक्षोभणचक्रस्वामिनि गुप्ततरयोगिनि सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्वाह्लादिनि सर्वसंमोहिनि सर्वस्तम्भिनि सर्वजृंभिणि सर्ववशङ्करि सर्वरञ्जिनि सर्वोन्मादिनि सर्वार्थसाधिनि सर्वसम्पत्तिपूरणि सर्वमन्त्रमयि सर्वद्वन्द्वक्षयङ्करि सर्वसौभाग्यदायकचक्रस्वामिनि सम्प्रदाययोगिनि सर्वसिद्धिप्रदे सर्वसम्पत्प्रदे सर्वप्रियङ्करि सर्वमंगलकारिणि सर्वकामप्रदे सर्वदुःखविमोचिनि सर्वमृत्युप्रशमनि सर्वविघ्ननिवारिणि सर्वागसुन्दरि सर्वसौभाग्यदायिनि सिर्वार्थ साधकचक्रस्वामिनि कुलोत्तीर्णयोगिनि सर्वज्ञे सर्वशक्ते सर्वैश्वर्यप्रदे सर्वज्ञानमयि सर्वव्याधिविनाशिनि सर्वाधारस्वरूपे सर्व पापहरे सर्वानन्दमयि सर्वरक्षास्वरूपिणि सर्वेप्सितप्रदे सर्वरक्षाकरचक्रस्वामिनि निगिर्भयोगिनि वशिनि

**कामेश्वरि मोदिनि विमलेऽरुणे जयिनि सर्वेश्वरि कौलिनि सर्वरोगहरचक्रस्वामिनि रहस्ययोनिनि बाणिनि चापिनि पाशिन्यंकुशिनि महाकामेश्वरि महावज्रेश्वरि महाभगमालिनि महाश्रीसन्दरि सर्वसिद्धिप्रदचक्रस्वामिन्यति रहस्य योगिनि श्री श्री महाभट्टारिके सर्वानन्दमयचक्रस्वामिनि परापररहस्ययोगिनि त्रिपुरे त्रिपुरेशि त्रिपुरसुन्दरि त्रिपुरवासिनि त्रिपुराश्रीस्त्रिपुरमालिनि त्रिपुरा सिद्धे त्रिपुराम्ब महात्रिपुरसुन्दरि महामहेश्वरि महामहाराज्ञि महामहाशक्ते महामहागुप्ते महामहाज्ञप्ते महा-महानन्दे महामहास्पन्दे महामहाशये महामहाश्रीचक्रनगरसम्राज्ञि नमस्ते त्रिः स्वाहा ॐ श्रीं ह्रीं ऐं।**

**ॐ ऐं ह्रीं श्रीं समस्तप्रकट गुप्त गुप्ततर सम्प्रदाय कुलकौलनिगर्भ रहस्यातिरहस्य परापररहस्ययोगिनि श्रीविद्या राजराजेश्वरि श्रीपादुकां पूजयामि नमः।** पुष्पाञ्जलिं निवेद्य मूलेन न्यासं विधाय मानसोपचारैः पूजयेत्।

**मालामन्त्रो महादेव्याः सर्वसिद्धिप्रदायकः । एकत्रिंशत्सहार्णस्त्रिलोकी मोहनक्षमः ।।१।।**
**एषा विद्या महासिद्धिदायिनी स्मृतिमात्रतः । अग्निवातमहाक्षोभे राजराष्ट्रविपप्लवे ।।२।।**
**लुण्ठने तस्करभये संग्रामे सलिलप्लवे । समुद्रयानविक्षोभे भूतप्रेतादिजे भये ।।३।।**
**अपस्मारज्वरव्याधिमृत्यून्मादादिजे भये । डाकिनी पूतना यक्ष रक्षः कूष्माण्डजे भये ।।४।।**
**मित्रभेदे ग्रहभये व्यसने चाभिचारके । अन्येष्वपि च दोषेषु मालामन्त्रं स्मरेद्बुधः ।।५।।**
**सर्वोपद्रवनिर्मुक्तः साक्षाच्छिवमयो भवेत् । आपत्काले नित्यपूजां विस्तरात्कतमक्षमः ।।६।।**
**एकावर्तनमात्रेण चक्रपूजाफलं लभेत् । नवावरणदेवीनां ललिताया महौजसः ।।७।।**
**एकत्रगणनारूपो यन्त्रमन्त्रार्थगोचरः । सर्वागमरहस्यार्थः स्मरणात् पापनाशिनी ।।८।।**
**नरेन्द्राणाञ्च नारीणां सर्वदैव वशङ्करी । ललिताया महेशान्या मालविद्या महीयसी ।।९।।**
**अणिमादिगणैश्वर्यैरञ्जनं पापभञ्जनम् । तत्तथावरणस्थायि देवतावृन्दमन्त्रजम् ।।१०।।**
**मालामन्त्रमिदं गुह्यं परं धाम प्रकीर्तितम् । इदं स्तोत्रं महादेव्याः सर्वलोकविमोहनम्।।११।।**
**सर्वसौख्यप्रदं नृणां सर्वसौभाग्यदायकम् ।**

ॐ तत्सत् श्रीललितापरिशिष्टे उमामहेश्वरसम्वादे सुद्ध शक्ति-माला-स्तोत्रं सम्पूर्णम्।

## ३. गुरुपादुकापञ्चकम्

**ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम् ।**
**कुण्डलीविवरकाण्डमण्डितं द्वादशार्णसरसीरुहं भजे ।।१।।**
**तस्य कनन्दलितिकर्णिकापुटे क्लृप्तरेखमकथादिरिखया ।**
**कोणलक्षितिहळक्षमण्डलीभावलक्ष्यमबलालयं भजे ।।२।।**

तत्पुटे पटुतटित्कडारिमस्पर्धमानमणिपाटलप्रभम् ।
चिन्तयामि हृदि चिन्मयं वपुर्नादबिन्दुमणिपीठमण्डलम् ।।३।।
ऊर्ध्वमस्य हुतभुकशिखात्रयं तद्विलासपरिबृंहणास्पदम् ।
विश्विघस्मरमहोच्चिदोत्कटं व्यामृशाभि युगमादिहंसयोः ।।४।।
तत्र नाथचरणारविन्दयोः कुङ्कुमासवझरीमरन्दयोः ।
द्वन्द्वमिन्दुमकरन्दशीतलं मानसं सारति मङ्गळास्पदम् ।।५।।
निषक्तमणिपादुकानियमिताघकोलाहलं स्फुरत्किसलयारुणं नखसमुल्लसच्चन्द्रकम्।
परामृतसरोवरोदितसरोजसद्रोचिषं भजामि शिरिसि स्थितं गुरुपदारविन्दद्वयम्।।६।।
पादुकापञ्चकस्तोत्रं पञ्चवक्त्राद्विर्निर्गतम् । षडाम्नायफलप्राप्तं प्रपञ्चे चातिदुर्लभम्।।७।।

## ४. *आम्नायस्तोत्रम्*

श्रीनातादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।
वीरान्ध्यष्ट चतुष्कषष्टिनवकं वीरावलीपञ्चकं श्रीमन्मालिनिमन्त्रराजसहितिं वन्दे गुरोर्मण्डलम्।।

गुरुपपादुकामनुमुच्चार्य, सुमुर्खादिभिः पञ्चमुद्राभिः श्रीगुरुं प्रणम्य।

शुद्धविद्या च बाला च द्वादशार्धा मतङ्गिनी । द्विजत्वसाधिनीविद्या गायत्री वेदमातृका।।१।।
गाणापत्यं कार्तिकेयं मृत्युञ्जं नीलकण्ठकम् । त्र्यम्बकं जातवेदाश्च तथा प्रत्यङ्गिरादयः।।२।।
मुखात्तत्पुरुषाज्जाता द्विकोटीमन्त्रनायिकाः । एताः कामगिरीन्द्राश्च पूर्वाम्नायस्य देवताः।।३।।
गुरुत्रयादिपीठान्तं चतुर्विंशत्सहस्रकम् । एतदावरणोपेतं पूर्वाम्नायं भजाम्यहम्।।४।।
विशुद्धौ चिन्तयेद्धीमान् पूर्वाम्नायस्य देवताः । सौभाग्यविद्या बगळा वाराही वटुकस्तथा।।५।।
श्रीतिरस्करिणी प्रोक्ता महामाया प्रकीर्तिता । अघोरं शरभं खड्गरावणं वीभद्रकाम्।।६।।
रौद्रं शास्ता पाशुपताद्यस्त्रशस्त्रादिभैरवाः । दक्षिणामूर्तिमन्त्राद्याः शैवागमसमुद्भवाः ।।७।।
अघोरमुखसंभूतं मदंशं कोटिसंख्यकम् । पूर्वपीठस्थिता देवि दक्षिणाम्नायदेवताः।।८।।
द्विसहस्रं तु देव्यस्ताः परिवारसमन्विताः । भैरवादिपदद्वन्द्वं भजे दक्षिणमुत्तमम्।।९।।
अनाहते चिन्तयेच्च दक्षिणाम्नायदेवताः । लोपामुद्रा महादेवी अम्बा च भुवनेश्वरी।।१०।।
अन्नपूर्णा कामकला सर्वसिद्धिप्रदायिनी । सुदर्शनं वैनतेयं कार्तवीर्यं नृसिंहकम्।।११।।
नामत्रयं राममन्त्रं गोपालं सौरमेव च । धन्वन्तरीन्द्रजालं च इन्द्रादिसुरमन्त्रकम्।।१२।।

दत्तात्रेयं द्वादशाष्टौ वैष्णवागमचोदिताः । सद्योजातमुखोद्भूता मन्त्राः स्युः कोटिसंख्यकाः ।।१३।।
एता जालन्धरपीठस्थाः पश्चिमाम्नायदेवताः । दूत्यादि च चतुष्षष्टि सिद्धान्त त्रिसहस्रकम् ।।१४।।
आम्नायं पश्चिमिं वन्दे सर्वदा सर्वकामदम् । मणिपूरे चिन्तनीयाः पश्चिमान्नायदेवताः ।।१५।।
तुरीयाम्बा महार्धा च अश्वारूढा तथैव च । मिश्राम्बा च महालक्ष्मीः श्रीमद्वाग्वादिनी अपि ।।१६।।
दुर्गा काळी ततश्चण्डी नकुली च पुळिन्दिनी । रेणुका लक्ष्मिवागीशमातृकाद्याः स्वयंवरा ।।१७।।
पञ्चाम्नायसमोपेतं श्रीविद्याख्यं मदंशकम् । वामदेवमुखोद्भूता द्विकोटीमन्त्रनायिकाः ।।१८।।
एता ओड्याणपीठस्थाः शाक्तागमसमुद्भवाः । द्विसहस्रं तु देव्यस्ताः परिवारसमन्विताः ।।१९।।
मुद्रादिनवकं चैव सिद्धानां मिथुनं तथा । वीरावळीपञ्चकं च भजेदाम्नायमुत्तरम् ।।२०।।
स्वाधिष्ठाने चिन्तनीया उत्तराम्नायदेवताः । परापरा च सा देवी पराशांभवमेव च ।।२१।।
प्रासादं दहरं हंसं महावाक्यादिकं परम् । पञ्चाक्षरं महामन्त्रे तारकं जन्मतारकम् ।।२२।।
ईशानमुखसंभूतं स्वात्मानन्दप्रकाशकम् । कोटिसंख्या महादेवि मद्रूपाः सर्वसिद्धिदाः ।।२३।।
एताः शाम्भवपीठस्थाः सहस्रपरिवारिताः । आराध्य मालिनीपूर्वं मण्डलान्तं तथैव च ।।२४।।
सायुज्यहेतुकं नित्यं वन्दे चोर्ध्वमकल्मषम् । ऊर्ध्वाम्नायमनून्नित्यं मूलाधारे विभावयेत् ।।२५।।
पञ्चाम्बा नवनाथाश्च मूलविद्यास्ततः परम् । आधारविद्याषट्कं च पुनरंघ्रिद्वयं क्रमात् ।।२६।।
शाम्भवी चाथ हल्लेखा समया परवोधिनी । कौलपञ्चाक्षरी पञ्चदशार्णाऽनुत्तरात्मिका ।।२७।।
षोडशी पूर्तिविद्या च महात्रिपुरसुन्दरी । ऊर्ध्वश्रीपादुकापूर्व चरणान्तं गुरुक्रमात् ।।२८।।
पश्चादनुत्तरं वन्दे परब्रह्मस्वरूपिणीम् । अनुत्तराम्नायमनूनाज्ञाचक्रे विभावयेत् ।।२९।।
श्रीनाथगुरुमन्त्रादन्मण्डलान्तं यथाक्रमम् । सप्तकोटिमहामन्त्रं द्वादशान्ते सदा स्मरेत् ।।३०।।
शुचिर्वाप्यशुचिर्वापि गच्छंस्तिष्ठन्स्वपन्नपि । मन्त्रैकशरणो विद्वान्मनसापि सदा स्मरन् ।।३१।।
तत्तत्सिद्धिं च साहस्रं जपेत्साधकपुङ्गवः । जपान्ते शुद्धमाला च आम्नायस्तोत्रमुत्तमम् ।।३२।।
ललितानामसाहस्रं सर्वपूर्तिकरं स्तवम् । स्तवराजं च पञ्चैते भक्तः प्रतिदिनं पठेत् ।।३३।।
भुक्त्वा भोगान्यथाकामं सर्वभूतहिते रतः । सभार्यापुत्रसौभाग्यः सभूतिः पशुमान् भवेत् ।।३४।।
एकवारं जपेदेतत् कोटियज्ञफलं लभेत् । एतद्विज्ञानमात्रेण सर्वेषां देशिकोत्तमः ।
शिवसायुज्यमाप्नोति शिवयोरेव शासनात् ।।३५।।

।।इति श्रीरूद्रयामलतन्त्रे उमामहेश्वरसम्वादे शिवेन विरचिते आम्नायस्तोत्रम् समाप्तः।।

## ५. श्रीत्रिपुरास्तवराजः

श्रीनाथादिगिरुत्रयं गणपतिं पीठत्रयं भैरवं सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम्।
वीरान्द्यष्ट चतुष्कषष्टिनवकं वीरावलीपञ्चकं श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम्।।१।।
सेवे सिन्दूरसंदोहसुन्दरस्वाङ्गभासुराम् । करुणापूरपीयूषकटाक्षां कुलनायिकाम्।।२।।
द्विनेत्रं द्विभुपं शान्तं गुरुं पद्मासनस्थितम् । योगपीठे समासीनं नमामि शिरसि स्थितम्।।३।।
नमामि सद्गुरुं शान्तं प्रत्यक्षशिररूपिणम् । शिरसा योगपीठस्थं मुक्तिकामार्थसिद्धये ।।४।।
या नित्या परमा शक्तिर्जगच्चैतन्यरूपिणी । तां नमामि महादेवीं पञ्चमीं मातृरूपिणीम्।।५।।
यस्याः सर्वं समुत्पन्नं यस्यामद्यापि तिष्ठति । लयमेष्यति यस्यां तां पञ्चमीं प्रणमाम्यहम्।।६।।
श्रीमत्कल्पतरोर्मूले भवान्या रत्नमन्दिरे । रत्नसिंहासने देव्याः श्रीचक्रं प्रणमाम्यहम्।।७।।
भूगृहं गुणरेखाढ्यं वेदद्वारोपशोभितम् । त्रिवृत्तं षोडशदळं तथाष्टदळकर्णिकम् ।।८।।
मनुकोणं द्विदिक्कोमं वसुकोणं त्रिकोणकम्। मध्ये बिन्दुमहाचक्रं नित्यं श्रीत्रिपुरामयम्।।९।।
ब्रह्माण्डाधारशक्तिश्च कलास्मरपुरन्दराः । एताः संयोज्य पुरत ईश्वरीं योजयेच्छिवे ।।१०।।
चन्द्रबीजं बिन्दुसंस्थं शिवबीजं नियोजयेत् । मादनं शक्रबीजस्थं योजयेद्भुवनेश्वरीम्।।११।।
शिवबीजं मादनस्थं शक्रषष्टिसमन्वितम् । सप्तमं तच्च शक्रस्थं मायाबीजं समुद्धरेत्।।१२।।
तुङ्गाक्षरं शिवादिस्थं मरुदिन्द्रसमन्वितम् । धरन्धरसुताबीजमेकत्रापि नियोजयेत् ।।१३।।
बगळातुरीयबीजाधः षोडशं च नियोजयेत् । वाक्स्थं तुरीयकं बीजं शाक्रबीजं नियोजयेत्।।१४।।
पिनाकेशं चन्द्रसंस्थमाकाशं रससंस्थितम् । चतुर्थस्वरसंयुक्तं नादबिन्दुसमन्वितम् ।।१५।।
सर्वमेकत्र संयोज्य पञ्चपञ्चक्षारी[१] भवेत् । पञ्चकूटात्मिका विद्या सर्वतन्त्रेषु गोपिति ।।१६।।
विद्याचूडामणिर्देवी प्रोक्ता सर्वोत्तमोत्तमा । तव स्नेहान्मयाख्याता नाख्येया यस्य कस्यचित्।।१७।।
इन्द्रो मां रक्षयेत्प्राच्यामाग्नेय्यामग्निदेवता । याम्ये यमः सदा पातु नैर्ऋते निर्ऋतिश्च माम्।।१८।।
पश्चिमे वरुणः पातु वायव्ये वायुदेवता । धनदश्चोत्तरे पातु ऐशान्यामीश्वरोऽवतु ।।१९।।
ऊर्ध्वं प्रजापतिः पायादधश्चानन्तदेवता । एवं दश दिशो रक्षां कुर्वन्त्वाशाधिदेवताः ।।२०।।
गणेशः सर्वदा पातु क्षेत्रेशो रक्षयेत्सदा । द्वारश्रीः सर्वदा पातु देहळी पातु सर्वदा।।२१।।
गणनाथः सदा पातु दुर्गा मां परिरक्षतु । वटुको भैरवश्चान्ते क्षेत्रपालोऽभिरक्षतु।।२२।।
सह रत्या स्वपत्न्या च कामदेवश्च सर्वदा । प्रीत्या सह वसन्तोऽपि पातु मां नन्दने वने।।२३।।
चक्रस्य पश्चिमद्वारे भवान्या रत्नमन्दिरे । शङ्खपद्मनिधी रक्षां कुरुतां कामसिद्धये ।।२४।।
पातु मां रत्नसोपानं परमैश्वर्यशोभितम् । रक्षयेत्पश्चिमद्वारे भवान्या रत्नमन्दिरे ।।२५।।

---

१. कएईलह्रीं हसकलह्रीं हकऐलह्रीं हकहलह्रीं हकलसह्रीं

सरस्वती महालक्ष्मीर्माया दुर्गा विभूतये । भद्रकाळी तथा स्वस्ती स्वाहा चैव शुभंकरी ।।२६।।
गौरी च लोकधात्री च वागीश्वर्यादयो मम । एताश्चात्र स्थिताः सर्वा रक्षां कुर्वन्तु सर्वदा ।।२७।।
पाषण्डाचारिणो भूता भूमौ ये चान्तरीक्षगाः। दिवि लोके स्थिता ये च ते गच्छन्तु शिवाज्ञया ।।२८।।
वास्तूनामधिपी ब्रह्मा स्रष्टा रक्षतु सर्वदा। कुलनाथः सदा पातु द्वीपनाथोऽपि सर्वदा।
शिवं कुर्वन्तु ताः सर्वा आसने पञ्चदेवताः ।।२९।।
पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।।३०।।
चक्रस्य दक्षिणे भागे श्रीमत्पात्रस्य मण्डले । पञ्चरत्नानि मे पान्तु पूजकानां च सिद्धये।।३१।।
तत्र पात्रासने पुण्ये सर्वदा वह्निमण्डले । वह्नेश्च मण्डलं पातु कुलदेव्याश्च पूजने।।३२।।
धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी। सुश्रीः सुरूपा कपिला हव्यकव्यवहे दश ।।३३।।
वह्नेर्दशकला ज्ञेयाः सर्वधर्मफलप्रदाः । एताभिः सहितो रक्षां कुर्याद्वैश्वानरो मम ।।३४।।
तत्र पात्रवरे दिव्ये श्रीमदादित्यमण्डले । सूर्यस्य मण्डलं पातु मम सर्वार्थसिद्धये ।।३५।।
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः । सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा ।।३६।।
कभाद्यर्णयुता भानोष्ठडान्ता द्वादशेरिताः । एताः कलास्तु सूर्यस्य सूर्यमण्डलसंस्थिताः।
एताभिः सहितो रक्षामादित्यः प्रकरोतु मे।।३७।।
तत्र पात्रामृते दिव्ये सोमस्यामृतमण्डले । अमृतं सर्वदा पातु भैरवानन्दहेतुकम्।।३८।।
अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः । शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा।।३९।।
पूर्णा पूर्णामृता कामदायिन्यः स्वरजाः कलाः। सोममण्डलमध्यस्ता रक्षां कुर्वन्तु सर्वदा ।।४०।।
रविवेदकलापूर्णे सुदासंपूर्णमण्डले । नक्षत्राधिपिती रक्षां करोतु मम भूतये ।।४१।।
सूर्याग्निमण्डले दिव्ये संपूर्णे शशिमण्डले । पातु मां खेचरीबीजं दोषैकादशनाशकृत् ।।४२।।
शक्तियुक्ते सुरानन्दे भैरवाद्यैः सशक्तिभिः । आनन्दभैरवो रक्षां करोतु मम सर्वदा ।।४३।।
तत्र पूर्णामृते पुण्ये शक्तिर्या वारुणी कला। आनन्दरूपिणी रक्षां करोतु मम सर्वदा ।।४४।।
सृष्टिर्बुद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिः स्थिरा। स्थितिः सिद्धिरिति ख्याताः कचवर्गकला दश।।४५।।
अकारात् ब्रह्मणोत्पन्नाः सृष्टिकर्मणि तत्पराः। एतताभिः सहितः पायात् ब्रह्मा मां वाक्प्रदः सदा।।४६।।
जरा च पालिनी शान्तिरीश्वरी रतिकामिके । वरदा ह्लादिनी प्रीतिर्दीर्घा च टतवर्गगाः।।४७।।
उकाराद्विष्णुसंभूताः स्थितिकर्मणि तत्पराः । एताभिः सहितः पायान्मां विष्णुः पुष्टिदायकः।।४८।।
तीक्ष्णा रौद्री भया निद्रा तन्द्री क्षुत् क्रोधिनी क्रिया। उद्गारा मृत्युरूपा च पयवर्गकला दश।।४९।।
मकाराद्रुद्रसंभूताः संहारनिरताः सदा । एताभिः सहितो रुद्रो मां पायान्मृत्युनाशकः ।।५०।।

तिरस्करिण्यः पशुहृत्पञ्चेन्द्रियविमोहना । अनन्तान्तास्तु ताः पञ्च पीता श्वेतारुणासिता ॥५१॥
बिन्दोरीश्वरसंभूताः षळवर्गकलास्तथा । तिरोधानपराभिर्मा पायादेताभिरीश्वरः ॥५२॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च । इन्धिका दीपिका चेति रेचिका मोचिका परा ॥५३॥
सूक्ष्मा सूक्ष्मामृता ज्ञानामृता आप्यायिनी तथा। व्यापिनी व्योमरूपा च अनन्ता चेति षोडश ॥५४॥
एताः स्वरकलानादात्सदाशिवसमुद्भवाः ॥५५॥
अनुग्रहप्रदा नित्यं सर्वसिद्धिप्रदायिकाः । एताभिः सहितः पायात्सदापूर्वः शिवस्तु माम् ॥५६॥
मातृका पातु मां नित्यं सर्वमन्त्रस्वरूपिणी । अखण्डैकरसानन्दकरी मां पातु सर्वदा ॥५७॥
अमृतेशी सदा पातु दीपिनी पातु सर्वदा। मूलविद्या च मां पातु श्रीमत्रिपुरसुन्दरी ।
कामेश्वर्यादिभिर्युक्ता नित्याभिः पातु मां सदा ॥५८॥
सर्वाधोमण्डुकाकारे रुद्रः कालानलो विभुः ॥५९॥
रक्षां करोतु मे नित्यं या मूलप्रकृतिः सदा । ततश्चाधारशक्तिर्या मम रक्षां करोतु सा ॥६०॥
कूर्मस्तु सततं पायादनन्तो रक्षयेत्सदा । तस्य मूर्ध्नि स्थितः श्वेतवराहः परिरक्षतु ॥६१॥
दन्ते तस्य स्थिता पृथ्वी पातु नित्यं वसुन्धरा। समुद्रः सर्वदा पातु सुरत्नैरमृतैर्जलैः ॥६२॥
रत्नद्वीपं च मे रक्षां करोतु स्वर्णपर्वतः । पातु मां नन्दनोद्यानं पान्तु मां कल्पभूरुहः ॥६३॥
अधस्तेषां सदा पातु विचित्रा रत्नभूमिका । वालुकाः पञ्च मां पान्तु पान्तु देवमहीरुहः ॥६४॥
नवरत्नमयास्तत्र प्राकाराः पान्तु मां नव। श्रीरत्नमन्दिरं दिव्यं चिन्तामणिविभूषितम् ॥६५॥
तत्र पद्मे महादिव्ये प्रभामण्डलवेदिका । श्वेतच्छत्रं सदा पातु रत्नमुक्तामणिप्रभम् ॥६६॥
प्रभामध्यस्थितं पातु रत्नसिंहासनं च माम् । सिंहासनस्य पार्श्वस्थं धर्म ज्ञानं च रक्षतु ॥६७॥
वैराग्यं रक्षयेन्नित्यमैश्वर्य रक्षयेत्सदा । अधर्मो रक्षयेन्नित्यमज्ञानं परिरक्षतु ॥६८॥
अवैराग्यं तु मां पायादनैश्वर्यं तु सर्वदा । सिंहासनस्य मध्यस्था दुर्गा मां परिरक्षतु ॥६९॥
माया मां पातु तत्रैव विद्या मां परिरक्षतु । श्रीविद्या शुद्धविद्या च मातङ्गी भुवनेश्वरी ॥७०॥
वाराही च समाख्याताः पञ्च विद्याश्च पान्तु माम्। अनन्तो रक्षयेन्नित्यं फणपञ्चदशान्वितः ॥७१॥
तन्मध्यफणमध्यस्थं महापद्मं च रक्षतु । पातु चानन्दकन्दं मां ज्ञाननाळं च सर्वदा ॥७२॥
दळा प्रकृतिरूपा मां प्रकृत्याकारकेसरैः । पातु मां पातु नित्यं सा तत्वरूपा च कर्णिका ॥७३॥
सूर्यस्य मण्डलं पातु पातु मां सोममण्डलम् । वह्नेश्च मण्डलं पातु सत्वं रक्षतु सर्वदा ।
रजश्च पातु मां नित्यं पातु नित्यं तमोगुणः ॥७४॥
आत्मा चैवान्तरात्मा च परमात्मा च रक्षतु । ज्ञानात्मा च तथा रक्षां करोतु मम सर्वदा ॥७५॥

आत्मतत्वं शक्तितत्वं विद्यातत्वं तथैव च । सदाशिवस्य यत्तत्वं तत्सर्वं पातु मां सदा ॥७६॥
ज्ञानं माया कलाविद्या तत्वात्मानो विभूतयः । रत्नसिंहासने देव्या रक्षां कुर्वन्तु सर्वदा ॥७७॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । एते पञ्च महाप्रेता रक्षां कुर्वन्तु सर्वदा ॥७८॥
सुधार्णवासनं पातु पातु पोताम्बुजासनम् । देव्यासनं सदा पातु पातु चक्रासनं च माम् ॥७९॥
सर्वमन्त्रासनं पातु साध्यसिद्धासनं तथा । नवयोन्यासनं पातु सर्वदा मम रक्षणम् ॥८०॥
करोतु कुलसुन्दर्याः कामरूपं शिवासनम् । तत्रैव संस्थिता देव्यो रक्षां कुर्वन्तु सर्वदा ॥८१॥
त्रिपुरा त्रिपुरेशी च त्रिपुराद्या च सुन्दरी । त्रिपुरावासिनी पश्चात् त्रिपुराश्रीश्च मालिनी ॥८२॥
सिद्धाम्बा भैरवीत्येतास्त्रिपुराद्याश्च पान्तु माम् । गुरवो दिव्यसिद्धौघमानवौघास्त्रिधा स्थिताः ॥८३॥
मुनिवेदनागसंख्या रक्षां कुर्वन्तु सर्वदा । समस्तप्रकटा गुप्तास्तथा गुप्ततराश्च याः ॥८४॥
संप्रदायाः कुलोत्तीर्णा निगर्भाश्च रहस्यकाः । तथैवातिरहस्याश्च परापररहस्यकाः ॥८५॥
नवधा पूजनं तत्र योगिनीनां विधीयते । एतास्तु सततं रक्षां कुर्वतां योगिनीगणाः ॥८६॥
त्रैलोक्यमोहनं चक्रं प्रथमं परिरक्षतु । अणिमा पश्चिमे पातु लघिमा चोत्तरे तथा ॥८७॥
पूर्वद्वारे च महिमा ईशिता पातु दक्षिणे । वशिता मारुते पातु प्राकाम्या त्वीशके तथा ॥८८॥
भुक्तिसिद्धिस्तथाग्नेय्यामिच्छा रक्षतु नैर्ऋते । अधः पातु सदा प्राप्तिः सर्वकामप्रदायिनी ॥८९॥
सर्वकामा सदा पातु ऊर्ध्वे चोर्ध्वनिवासिनी । एताः प्रथमरेखायां सर्वाः प्रकटपूरिताः ॥९०॥
भैरवश्चासिताङ्गो यः कामरूपस्य पीठके । ब्रह्माणीसहितः पूर्वे द्वारे मां परिरक्षतु ॥९१॥
मलये चाग्निदिग्भागे संस्थितो रुरुभैरवः । माहेशीसहितः पातु कुलाचारस्य सिद्धये ॥९२॥
चण्डः कोलगिरौ रक्षां कौमारीसहितो यमे । करोतु भैरवो नित्यं पूजकानां च सिद्धये ॥९३॥
वैष्णवीसहितः क्रोधः कुळान्ते पीठराजके । नैर्ऋते सर्वदा पातु भोगमोक्षार्थसिद्धये ॥९४॥
चौहार्ये पश्चिमे पीठे वाराहीसहितः सदा । उन्मत्तभैरवो रक्षां करोतु मम सिद्धये ॥९५॥
जालन्धरे महापीठे कपाली भैरवः सदा । इन्द्राणीसहितो रक्षां वायव्ये प्रकरोतु मे ॥९६॥
ओड्याणे चोत्तरे पीठे चामुण्डासहितः सदा । भीषणो भैरवः पातु साधकानां च सिद्धये ॥९७॥
संहारश्चण्डिकायुक्तो देवीकोष्ठे च पीठके । ऐशान्यां रक्षयेन्नित्यं कुलाचारस्य सिद्धये ॥९८॥
एते द्वितीयरेखायां संस्थिताश्चतुरश्रगाः । सर्वसंक्षोभिणी मुद्रा पश्चिमे पातु सर्वदा ॥९९॥
द्राविणी चोत्तरे पातु पूर्वे चाकर्षणी सदा । याम्ये वश्या सदा पातु उन्मादा मारुते सदा ॥१००॥
ईशे महाङ्कुशा पातु त्रिरिवण्डा पातु चानले । नैर्ऋते बीजमुद्रा च उर्ध्वे रक्षतु खेचरी ॥१०१॥
महामुद्रा त्वधः पातु योगिनी योनिरूपिणी । सुसिद्धयो मुद्रिकाश्च भैरवाः सह मातृभिः ॥१०२॥

एताश्चक्रस्थिता नित्यं सर्वकामफलप्रदाः । चतुरश्रे त्रिरेखासु रक्षां कुर्वन्तु सर्वदा ।।१०३।।
सर्वाशापूरकं चक्रं द्वितीयं परिरक्षतु । कामाकर्षणरूपा च बुद्ध्याकर्षणरूपिणी ।।१०४।।
अहंकाराकर्षणी च शब्दाकर्षणरूपिणी । स्पर्शाकर्षणरूपा च रूपाकर्षणरूपिणी ।।१०५।।
रसाकर्षणरूपा च गन्धाकर्षणरूपिणी । चित्ताकर्षणरूपा च धैर्याकर्षणरूपिणी ।।१०६।।
स्मृत्याकर्षणरूपा च नामाकर्षणरूपिणी । बीजाकर्षणरूपा च आत्माकर्षणरूपिणी ।।१०७।।
अमृताकर्षणी देवी शरीराकर्षणी तथा । एताश्चक्रस्थिता नित्यं स्वरार्णां षोडशे दले ।।१०८।।
सर्वाभीष्टप्रदा देव्यो रक्षां कुर्वन्तु सर्वदा। सर्वक्षोभणं चक्रं तृतीयं परिरक्षतु ।।१०९।।
अनङ्गकुसुमा पूर्वे दक्षिणेऽनङ्गमेखला । पश्चिमेऽनङ्गमदना उत्तरे मदनातुरा ।।११०।।
अनङ्गरेखा चाग्नेय्यां नैर्ऋतेऽनङ्गवेगिनी। वातेऽनङ्गाङ्कुशा चैव ईशे चानङ्गमालिनी ।।१११।।
कवर्गाद्यष्टवर्गस्था अष्टौ चानङ्गशक्तयः । रक्षां कुर्वन्तु ताः सर्वा देव्यश्चाष्टदळे स्थिताः ।।११२।।
सर्वसौभाग्यदं चक्रं चतुर्थं परिरक्षतु । सर्वसंक्षोभिणी शक्तिः सर्वविद्राविणी तथा ।।११३।।
सर्वाकर्षणशक्तिश्च सर्वाह्लादस्वरूपिणी । सर्वसंमोहिनी शक्तिः सर्वस्तम्भनरूपिणी ।।११४।।
सर्वजृम्भणशक्तिश्च सर्वतोवश्यरूपिणी । सर्वरञ्जनशक्तिश्च सर्वोन्मादस्वरूपिणी ।।११५।।
सर्वार्थसाधिनी शक्तिः सर्वसंपत्तिपूरणी । सर्वमन्त्रमयी शक्तिः सर्वद्वन्द्वक्षयंकरी ।।११६।।
चतुर्दशारचक्रस्था रक्षां कुर्वन्तु सर्वदा । सर्वार्थसाधकं चक्रं पञ्चमं परिरक्षतु ।।११७।।
सर्वसिद्धिप्रदा देवी सर्वसंपत्प्रदायिनी । सर्वप्रियंकरी शक्तिः सर्वमङ्गलकारिणी ।।११८।।
सर्वकामप्रदा देवी सर्वदुःखविमोचिनी । सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी ।।११९।।
सर्वाङ्गसुन्दरी देवी सर्वसौभाग्यदायिनी । बहिर्दशारचक्रस्था रक्षां कुर्वन्तु सर्वदा ।।१२०।।
सर्वरक्षाकरं चक्रं षष्ठं रक्षतु सर्वदा । सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यफलप्रदा ।।१२१।।
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी। सर्वाधारस्वरूपा च सर्वपापहरा तथा ।।१२२।।
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी । तथैव हि महादेवी सर्वेप्सितफलप्रदा ।।१२३।।
अन्तर्दशारचक्रस्था रक्षां कुर्वन्तु सर्वदा । सर्वरोगहरं चक्र सप्तमं परिरक्षतु ।।१२४।।
वाग्देवी वशिनी पातु पातु कामेश्वरी च माम्। मोदिनी विमला पातु अरुणा जयिनी च माम् ।।१२५।।
सर्वेश्वरी च मे रक्षां कुरुतां कौलिनी तथा । वाग्देव्यो वरदाः सन्तु सर्वास्तुष्यन्तु पूजिताः ।।१२६।।
अष्टकोणान्तरे वाण्यो रक्षां कुर्वन्तु सर्वदा । सर्वसिद्धिप्रदं चक्रमष्टमं परिरक्षतु ।।१२७।।
अष्टकोणान्तरस्थाने त्रिकोणे बहिरायुधाः । श्रीमत्पाशाङ्कुशधनुर्बाणाश्चायुधदेवताः ।।१२८।।

षडङ्गदेवताः पान्तु अङ्गस्थाश्चाङ्गदेवताः । महादेव्याश्चक्रसंस्था रक्षां कुर्वन्तु सर्वदा ।।१२९।।
श्रीमत्रिकोणमध्ये तु तत्र कोणत्रयेषु च । मध्ये च सर्वदा पान्तु चतस्रः पीठदेवताः ।।१३०।।
कामे कामेश्वी पातु पूर्णे वज्रेश्वरी तथा। जालन्धरे महापीठे पातु मां भगमालिनी।।१३१।।
ओड्याणके महापीठे महात्रिपुरसुन्दरी । सर्वानन्दमयं चक्रं नवमं परिरक्षतु ।।१३२।।
सूर्येन्दुवह्निपीटे तु बिन्दुचक्रनिवासिनी । ब्रह्मस्वरूपिणी पातु श्रीमत्रिपुरसुन्दरी ।।१३३।।
योनिमध्ये तु परितो नित्याषोडशशक्तयः । देव्याः श्रीचक्रमध्यस्था रक्षां कुर्वन्तु सर्वदा ।।१३४।।
त्रैलोक्यमोहने चक्रे चतुरश्रे सुशोभने । पातु मामनिशं देवी त्रिपुरा परमेश्वरी ।।१३५।।
सर्वाशापूरके चक्रे षोडशारे मनोहरे । तत्र चक्रेश्वरी नित्यं पातु मां त्रिपुरेश्वरी।।१३६।।
तथाष्टदलचक्रे तु सर्वसंक्षोभकारके । तत्र चक्रेश्वरी नित्यं पायात्रिपुरसुन्दरी ।।१३७।।
चतुर्दशारचक्रे तु शुभे सौभाग्यदायके। तत्र चक्रेश्वी नित्यं पायात्रिपुरवासिनी ।।१३८।।
सर्वार्थसाधके बोह्ये दशारे चक्रराजके । त्रिपुराश्रीः सदा पातु मम कल्याणहेतवे।।१३९।।
अन्तर्दशारचक्रे तु सर्वरक्षाकरे परे । नित्यं चक्रेश्वरी देवी पायात्रिपुरमालिनी ।।१४०।।
अथाष्टकोणचक्रे तु सर्वरोगहरे परे । पातु मां त्रिपुरासिद्धा देवी चक्रेश्वरी सदा ।।१४१।।
सर्वसिद्धिप्रदे चक्रे गुणकोणे मनोहरे । चक्रेश्वरी च मे रक्षां करोतु त्रिपुराम्बिका ।।१४२।।
सर्वानन्दमये चक्रे मध्ये बिन्दौ सुशोभने। महाचक्रेश्वरी पातु श्रीमत्रिपुरभैरवी ।।१४३।।
नित्या कामेश्वरी पातु पातु मां भगमालिनी । नित्यक्लिन्ना च मां पातु भेरुण्डा पातु सर्वदा।।१४४।।
मां वह्निवासिनी पातु महावज्रेश्वरी तथा । पातु मां शिवदूती च त्वरिता रक्षयेत्सदा ।।१४५।।
कुलसुन्दरी मां पातु नित्यानित्या च पातु माम्। नित्या नीलपताका च विजया पातु सर्वदा ।।१४६।।
श्रीसर्वमङ्गळा पातु नित्या ज्वालांशुमालिनी । विचित्रा सर्वदा पातु षोडशी पातु सुन्दरी ।।१४७।।
षोडशी प्रथमा नित्या त्रिपञ्चतिथिगामिनी ।अनुलोमविलोमेन श्रीमत्रिपुरसुन्दरी ।।१४७।।
षोडशी प्रथमा नित्या त्रिपञ्चतिथिगामिनी। अनुलोमविलोमेन श्रीमत्रिपुरसुन्दरी ।।१४८।।
महाविद्या तुरीया तु पातु मां बहुरूपिणी । महासप्तदशी नित्या नित्यमानन्दरूपिणी ।।१४९।।
पूर्व दक्षिणपश्चाच्च उत्तरोर्ध्वमनुत्तमम् । बौद्धवैदिकशैवाश्च सौरवैष्णवशाक्तकाः ।।१५०।।
सृष्टिस्थितिलयाख्यानां वासो रक्षतु सर्वदा । चतस्रः समयादेव्यो योगिन्य : पान्तु सर्वदा ।।१५१।।
चतुरश्रे महाचक्रे तारा मां परिरक्षतु । डाकिनी राकिणी पातु लाकिनी काकिनी तता।।
साकिनी हाकिनी पातु याकिनी सर्वरूपिणी ।।१५२।।

वर्णस्था मातृकाः सर्वा देहस्था मातृकाश्च याः। रक्षां कुर्वन्तु ताः सर्वाश्चक्रराजे तु पूजिताः।।१५३।।
श्रीचक्रे पूजिता या याः पूजिता या न पूजिताः। सर्वास्ताः पूजिताः सन्तु श्रीमत्रिपुरसुन्दरी।।१५४।।
चतुरश्रे महाचक्रे बुद्धो मां परिरक्षतु । पातु मामनिशं देवः षोडशारे प्रजापतिः ।।१५५।।
तथाष्टदळचक्रे तु शिवो मां परिरक्षतु । चतुर्दशारचक्रे तु भास्करो रक्षयेत्सदा ।।१५६।।
द्विदशारे तथा पातु प्रभुर्नारायणो हरिः । अष्टारे मध्यचक्रे तु पातु मां भुवनेश्वरी।।१५७।।
अष्टारान्तस्त्रिकोणे तु काळिका पातु सर्वदा । त्रिकोणान्तरचक्रे तु पातु कात्यायनी च माम् ।।१५८।।
नवचक्रेश्वरी नित्या या नित्या परमा कला । पातु मामनिशं देवी श्रीमत्रिपुरसुन्दरी ।।१५९।।
महात्रिपुरसुन्दार्याश्चिन्तनीया च या परा । ब्रह्मस्वरूपिणी पातु पञ्चमी परदेवता ।।१६०।।
पञ्चमी पातु सततं नित्यं रक्षतु पञ्चमी । शान्तिं करोतु सा नित्या पञ्चमी परदेवता ।।१६१।।
सा पुनः पञ्चमी शक्तिर्नित्यचैतन्यरूपिणी । कारणानन्दमध्यस्था पातु मां पञ्चमी सदा ।।१६२।।
पञ्चतत्वं तथा पञ्च यत्किञ्चित् पञ्चमं स्मृतम् । नित्यं पञ्चगुणैः पातु पञ्चमी परदेवता ।।१६३।।
पञ्चपञ्चाक्षरैर्मन्त्रैः पञ्चकूटैश्च पञ्चभिः। पञ्चमी पातु सततं नित्यं रक्षतु पञ्चमी ।।१६४।।
श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च । त्रिशक्तिः सर्वसाम्राज्यलक्ष्मीः पञ्च प्रकीर्तिताः।।१६५।।
श्रीविद्या च परंज्योतिः परा निष्कळशाम्भवी। अजपा मातृका चेति पञ्च कोशाः प्रकीर्तिताः ।।१६६।।
श्रीविद्या त्वरिता चैव पारिजातेश्वरी तथा । त्रिपुटा पञ्चबाणेशी पञ्चकल्पलताः स्मृताः ।।१६७।।
श्रीविद्याऽमृतपीठेशी सुधासूरमृतेश्वरी । अन्नपूर्णेति विख्याताः पञ्च कामदुधाः स्मृताः ।।१६८।।
श्रीविद्या सिद्धलक्ष्मीश्च मातङ्गी भुवनेश्वरी । वाराही पञ्चरत्नानामीश्वर्यश्च प्रकीर्तिताः ।।१६९।।
गणेशो वटुकश्चैव क्षेत्रेशो योगिनीगणाः । तर्पिता बलिपात्राणि सर्वे रक्षन्तु पूजिताः ।।१७०।।
ऐशान्यां सर्वदा पातु नित्यं निर्माल्यवासिनी । शेषिका सुन्दरी पातु बिन्दुचक्रनिवासिनी ।।१७१।।
नित्यं कामकला पातु मुद्रा मां पातु खेचरी । शक्तिर्मां सर्वदा पपातु या मूलाधारवासिनी ।।१७२।।
मुद्रामन्त्रोपचारैस्तु समस्ता देवताश्च याः । ताः श्रीश्च पूजिता चास्तु श्रीमत्रिपुरसुन्दरी ।।१७३।।
श्रीमत्रिपुरसुन्दर्याः स्तवराजं मनोहरम् । पूजाक्रमेण कथितं साधकानां सुखावहम् ।।१७४।।
क्रमेणानेन विधिना श्रीमत्रिपुरसुन्दरीम् । संपूज्य साधकश्रेष्ठो रक्षामन्त्रं सदा पठेत् ।।१७५।।
प्रातःकाले शुचिर्भूत्वा निशायामर्धरात्रके । अथवा संकटे प्राप्ते राजस्थाने सुदुर्गमे ।।१७६।।
जले वाऽथ स्थले वापि श्मशाने दुर्गमे गिरौ। यत्र यत्र भये प्राप्ते स तत्रैव पठेन्नरः ।।१७७।।
सर्वावयवभावेन देवीं संचिन्त्य साधकः । रक्षां कुर्वीत यत्नेन सर्वाशुभविनाशिनीम् ।।१७८।।

स्तोत्रं चाद्भुतमेवेदं त्रैलोक्ये चापि दुर्लभम् । गोपनीयं प्रयत्नेन यदीच्छेदात्मनो हितम् ।।१७९।।
यस्मै कस्मै न दातव्यं न वक्तव्यं कदाचन । शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत् ।।१८०।।
भ्रष्टेभ्यः साधकेभ्योऽपि बान्धवेभ्यो न दर्शयेत्। दत्ते च सिद्धिहानिः स्यादित्याज्ञा शांकरी कृता।।१८१।।
मन्त्राः पराङ्मुखा यान्ति क्रुद्धा भवति सुन्दरी। अशुभं च भवेत्तस्य तस्माद्यत्नेन गोपयेत् ।।१८२।।
यद्गृहे विद्यते स्तोत्रं ग्रन्थे लिखितमुत्तमम् । चञ्चलापि स्थिरा भूत्वा कमला तत्र तिष्ठति ।।१८३।।
तस्माद्यत्नादिमं ग्रन्थं पूजयेद्गन्धपुष्पकैः । पूजाफलं लभेन्नित्यं सुन्दरीसंनिधिर्भवेत् ।।१८४।।
स्तवराजमिमं पुण्यं यः पठेत्सुसमाहितः । यत्फलं लभते तस्माच्छृणुध्वं साधकोत्तमाः ।।१८५।।
वारमेकं तु योऽधीयात् स पूजाफलमश्नुते । वेदिता मातृचक्रस्य साधको भुवि जायते ।।१८६।।
मासमेतत्क्रमेणैव पठेद्भक्तिपरायणः । स्वर्गेऽपि विदितो भूत्वा देवीभक्तस्तु भूतले ।।१८७।।
भक्त्या च धारयेद्यस्तु लिखित्वा स्तोत्रमुत्तमम्। शिखायामथवा कण्ठे बाहौ वा भक्तिसंयुतः ।।१८८।।
स भवेत्साधकश्रेष्ठो मातृणां च सदा प्रियः । लभते सर्वकामान्वै परं स्वस्त्ययनं भवेत् ।।१८९।।
तस्मादिदं प्रयत्नेन धारयेद्विधिना तथा । पठित्वा पूजयित्वा च त्रैलोक्यं वशमानयेत् ।।१९०।।
भक्ताय ददते तस्मै मन्त्रं रक्षाकरं परम् । धृत्वा सौवर्णमध्यस्थां सर्वकामान्नरो लभेत् ।।१९१।।
यानि वाञ्छति कामानि भुक्तिमुक्तिकराणि च। लभते नात्र संदेहो भुवि स्वर्गे रसातले ।।१९२।।
दृष्ट्वा च साधकश्रेष्ठं ग्रहराक्षसहिंसकाः । दूरादेव पलायन्ते न समर्थाश्च हिंसितुम् ।।१९३।।
विषं निर्विषतां याति पापं निर्याति संक्षयम् । देववन्मानवो भूत्वा भुनक्ति बहुलं सुखम् ।।१९४।।
तस्मान्नित्यं पठेद्धीमान्मुक्तिकामार्थसिद्धये । भक्त्या च धारयेद्देवीं स्वरक्षां सर्वदाचरेत् ।।१९५।।
पूर्वजातिपरिज्ञानवेद्यं जन्मसहस्रकम् । न पुनर्जायते योनौ मरणं नास्ति चापरम् ।।१९६।।
गन्धर्वरूपवान् भूत्वा संपूज्य परमेश्वरीम् । रक्षामन्त्रं पठित्वा च देवत्वं लभते ध्रुवम् ।।१९७।।
अपुत्रो लभते पुत्रं दरिद्रो लभते धनम् । यं यं वापि स्मरेन्नित्यं तं तमाप्नोति निश्चितम्।।१९८।।
अतिदुःखालये कष्टे भीमे निगळबन्धने । सकृत्पाठे कृते नित्यं निगळान्मुच्यते ध्रुवम्।।१९९।।
दुष्कृतैरभिचारैश्च रोगैर्यक्ष्मादिभिश्च यः। परप्रयुक्तैर्ग्रस्तोऽपि पठनान्मुच्यते नरः।।२००।।
इमं त्रिपुरसुन्दर्याः स्तवराजं मनोहरम् । रक्षामन्त्रं च शुभदं शिवेन परिकीर्तितम्।
यः पठेत्प्रयतो भक्त्या सद्यो रोगात्स मुच्यते ।।२०१।।
आयुरारोग्यमैश्वर्यं भुक्तिं मुक्तिं च विन्दति। सर्वान्कामानवाप्नोति देवेन्द्रस्यापि दुर्लभान्।।२०२।।

## ६. श्रीत्रिपुरसुन्दरी हृदय स्तोत्रम्

**श्रीगुरुभ्यो नमः। श्रीत्रिपुरसुन्दर्यै नमः।**

**अस्य श्रीत्रिपुरसुन्दरी हृदय स्तोत्रस्य आनन्दभैरव ऋषिः। अनुष्टुवादि छन्दांसि। श्रीत्रिपुरसुन्दरी देवता। ऐं क-५ बीजं। सौः स-४ शक्तिः। क्लीं ह ६ कीलकं। श्रीत्रिपुरसुन्दरी देवता प्रीत्यर्थे जपे विनियोगः।**

ऋष्यादिन्यासान्विधाय पञ्चदश्या कूटत्रयेण द्विरावृत्या करषडंगन्यासान् कृत्वा ध्यायेत् यथा—

**बालव्यक्तदिवाकराऽमितनिभां भद्रप्रदां भारतीम्। ईषत्फुल्लमुखाम्बुज स्मित करै राशान्धकारापहाम्।**
**पाशञ्चाभयमंकुशञ्च वरदं सम्बिभ्रतीं भूतिदां। भ्राजन्तीञ्चतुरम्बुजाकृतिकरैर्भक्त्या भजे सुन्दरीम्।**

इति ध्यात्वा मानसैरूपचर्य प्रणमेत्।

### *हृदय स्तोत्रम्*

**सुन्दरी सकलकल्मषापहा कोटिकिञ्जप्रियकाम्य कान्तिका ।**
**कोटिकल्पकृतपुण्यकर्मणा पूजनीयपदमदाच्चभक्तितः ।।१।।**
**शर्वरीशसमसुन्दरानना श्रीशशक्तिसुकृताश्रयाश्रिता ।।**
**सज्जनानुसरणीयसत्पदा सङ्कटे सुरगणैः सुवन्दिता ।।२।।**
**याऽसुरोग्रसंगरे जवान्विता सा जधान जगदम्बिका स्वयं ।**
**तां भजामि भवशान्तिकृज्जयां युद्धलग्रदितिजान् सुदुर्जयान् ।।३।।**
**योगिनां हृदयसंगतां शिवां योगयुक्तमनसां यतात्मनाम् ।**
**जाग्रतीं जगति यत्नतो द्विजा यां जपन्ति हृदि तां स्मराम्यहम् ।।४।।**
**कौलिकास्तु कलयन्ति कालिकां यत्कला कलिजनोपकारिणीम्।**
**कौल न्दकलितांघ्रिपङ्कजां तां भजामि कलिकल्मषापहाम् ।।५।।**
**बालार्कानन्तशोचिर्निजतनुकिरणैर्दीपयन्तीं दिगन्तान्दीप्तैर्दे-**
**दिप्यमानां दनुजदलवनाऽनल्पदावानलाभाम् ।**
**देवीं दर्पाभितप्तां दलितदितिसुतां दर्शनीयां दुरन्तां दीप्तां**
**भक्तार्द्रचित्तां हृदि मुदितमनाः भारतीं भावयामि ।।६।।**
**ध्वस्तध्वान्तां धरित्रीधरविधृतशिरोन्यस्तपादाब्जपासूं धूम्रां**
**धीराधरामान्तडिदिवचपलां चारुचन्द्रप्रभाभाम् ।**

धृत्वा पूजोपहारान्धरणिसुरकुलोद्धारिणीं ध्यानगम्यां
धीमद्ध्येयाऽद्वितीयां धनदनमितां सुन्दरीं चिन्तयामि ।।७।।
जयतु जयतु खर्वा भारती वेदहस्ता ।
जयतु जयतु धात्री धर्मिणी धातृशक्तिः ।
जयतु जयतु वाणी ब्राह्मणैर्ब्रह्मवन्द्या ।
जयतु जयतु दुर्गा दारिणीं देवशत्रून् ।।८।।
जयतु जयतु माता योगिनी योगयुक्ता ।
जयतु जयतु पद्मा पद्मिनीकेशवस्य ।
जयतु जयतु सौम्या सुन्दरी सुन्दरास्या ।
जयतु जयतु काली कालिनी कालकान्ता ।।९।।
देवि त्वं सृष्टिकाले सकलभवभृता राजसी रक्तवर्णा ।
रक्षाकाले त्वमम्बा हरिहृदयधृता सात्विकी श्वेतरूपा ।
भूरिक्रोधा भवान्ते भवभवनगता तामसी नीलवर्णा ।
ह्योताश्चान्यास्त्वमेव क्षितिजनुमता सुन्दरी केवलाद्या ।।१०।।
स्तवनमिदम्मोघं देशिकैर्नित्यिजाप्यम् ।
श्रवणमननवेद्यं स्तोत्रमेतदघघ्नम् ।
सुरतरुवरतुल्यं मोदकं पाठकानां प्रभ वति
हृदयाख्यं स्तोत्रमत्यन्तगुणह्यम् ।।११।।
इदं त्रिपुरसुन्दर्या हृदयं परमाद्भुतम् ।
यः पठेत्तु नरो भक्त्या स सदा सुखमेधते ।।१२।।
न शूद्राय प्रदातव्यं न शठाय दुरात्मने ।
देयं दान्ताय भक्ताय गुणज्ञाय विशेषतः ।।

श्रीत्रिपुरसुन्दरी हृदयं समाप्तम्।।

## ७. *श्रीललिताचतुष्षष्ट्युपचार संग्रह*

ॐ हृन्मध्यनिलये देवि ललिते परदेवते । चतुष्षष्ट्युपचारांस्ते भक्त्या मातः समर्पये।।१।।
कामेशोत्सङ्गनिलये पाद्यं गृहणीष्व सादरम् । भूषणानि समुत्तार्य गन्धतैलं च तेऽर्पये ।।२।।

स्नानशालां प्रविश्याऽथ तत्रत्यमणिपीठके । उपविश्य सुखेन त्वं देहोद्वर्त्तनमाचर ।।३।।
उष्णोदकेन ललिते स्नापयाम्यथ भक्तितः । अभिषिञ्चामि पश्चात्त्वां सौवर्णकलशोदकैः ।।४।।
धौतवस्त्रप्रोञ्छनं चारक्तक्षौमाम्बरं तथा । कुचोत्तरीयमरुणमर्पयामि महेश्वरि ।।५।।
ततः प्रविश्य चालेपमण्डपं श्रीमहेश्वरि । उपविश्य च सौवर्णपीठे गन्धान् विलेपय ।।६।।
कालागुरुजधूपैश्च धूपये केशपाशकम् । अर्पयामि च मल्ल्यादिसिर्वर्तुकुसुमस्रजः ।।७।।
भूषामण्डपमाविश्य स्थित्वा सौवर्णपीठके । माणिक्य मुकुटं मूर्ध्नि दयया स्थापयाऽम्बिके।।८।।
शरत्पार्वणचन्द्रस्य शकलं तत्र शोभताम् । सिन्दूरेण च सीमन्तमलङ्कुरु दयानिधे ।।९।।
भाले च तिलकं न्यस्य नेत्रयोरञ्जनं शिवे । वालीयुगलमप्यम्ब भक्त्या ते विनिवेदये ।।१०।।
मणिकुण्डलमप्यम्ब नासाभरणमेव च । ताटङ्कयुगलं देवि यावकञ्चाधरेऽर्पये ।।११।।
आद्यभूषणसौवर्ण चिन्ताकपदकानि च । महापदक मुक्तावल्येकावल्यादिभूषणम् ।।१२।।
धन्नवीरं गृहाणाऽम्ब केयूरयुगलन्तथा । वलयावलिमंगुल्याभरणं ललिताम्बिके ।।१३।।
ओड्याणमथ कट्यन्ते कटिसूत्रञ्च सुन्दरि । सौभाग्याभरण पादकटकं नूपुरद्वयम् ।।१४।।
अर्पयामि जगन्मातः पादयोश्चांगुलीयकम् । पाशं वामोर्ध्वहस्ते च दक्षहस्ते तताङ्कुशम् ।।१५।।
अन्यस्मिन्वामहस्ते च तथा पुण्ड्रेक्षुचापकम् । पुष्पबाणांश्च दक्षाधः पाणौ धारय सुन्दरि ।।१६।।
अर्पयामि च माणिक्यपादुके पादयोः शिवे । आरोहावृतिदेवीभिश्चक्रं परशिवे मुदा ।।१७।।
समानवेशभूषाभिः साकं त्रिपुरसुन्दरि । तत्र कामेशवामाङ्कपर्यङ्कोपनिवेशिनीम् ।।१८।।
अमृतासवपानेन मुदितां त्वां सदा भजे । शुद्धेन गाङ्गतोयेन पुनराचमनं कुरु ।।१९।।
कर्पूरवीटिकिमास्ये ततोऽम्ब विनिवेशय । आनन्दोल्लासहासेन विलसन्मुखपङ्कजाम् ।।२०।।
भक्तिमत्कल्पलतिकां कृती स्यां त्वां स्मरन् कदा। मङ्गलारार्तिकं छत्रं चामरं दर्पणं तथा ।।२१।।
तालवृन्तं गन्धपुष्पधूपदीपांश्चतेऽर्पये। श्री कामेश्वरि! तप्तहाटककृतैः स्थालीसहस्रैर्भृतम्।
दिव्यान्नं घृतसूपशाकभरितं चित्रान्नभेदैर्युतम्।।
दुग्धान्नं मधुशर्करादधियुत माणिक्यपात्रार्पितं। माषापूपकपूरिकादिसहितं नैवेद्यमम्बाऽर्पये ।।२२।।
साग्रविंशितिपद्योक्तचतुष्षष्ट्युपचारतः । हृन्मध्यनिलया माता ललिता परितुष्यतु ।।२३।।

।।इति महायागक्रमोक्त मानस पूजम्।।

## ८. श्रीमन्त्र-मातृका-पुष्पमाला

कल्लोलोल्लसितामृताब्धिलहरीमध्ये विराजन्मणिद्वीपे कल्पकवाटिकापरिवृते कादम्बवाट्युज्ज्वले।
रत्नस्तम्भसहस्रनिर्मितसभामध्ये विमानोत्तमे चिन्तारत्नविनिर्मितं जननि ते सिंहासनं भावये ।।१।।

एणाङ्कानलभानुमण्डललसच्छ्रीचक्रमध्य स्थितां बालार्कद्युतिभासुरां करतलैः पाशाङ्कुशौबिभ्रतीम।
चापं बाणमपि प्रसन्नवदनां कौसुम्भवस्त्रान्वितां तां त्वां चन्द्रकलावतंसमकुटां चारुस्मितां भावये।।२।।
ईशानादिपदं शिवैकफलकं रत्नासनं ते शुभं पाद्यं कुंकुमचन्दनानिभरितैरर्घ्यं सरत्नाक्षतैः ।
शुद्धैराचमनीयकं तव जलैर्भक्त्या मया कल्पितं कारुण्यामृतवारिधि तदखिलं सन्तुष्टयेकल्प्यताम्।।३।।
लक्ष्ये योगिजनस्य रक्षित जगज्जाले विशालेक्षणे प्रालेयाम्बुपटीरकुंकुमलसत्कर्पूरमिश्रोदकैः ।
गोक्षीरैरपि नारिकेलसलिलैः शुद्धोदकैर्मन्त्रितैः स्नानं देवि धिया मयैतदखिलं सन्तुष्टये कल्पताम्।।४।।
ह्रींकाराङ्कितमन्त्रलक्षिततनो हेमाचलात्संचितैः रत्नैरुज्ज्वलमुत्तरीयसहितं कौसुम्भवर्णांशुकम्।
मुक्तासन्तति यज्ञसूत्रममलं सौवर्णतन्तूद्भवं दत्तं देवि धिया मयैतदखिलं सन्तुष्टये कल्प्यताम्।।५।।
हंसैरप्यतिलोभनीयगमने हारावलीमुज्ज्वलां हिन्दोलद्युतिहीरपूजिततरे हेमाङ्गदेकंगणे ।
मञ्जीरौ मणिकुण्डले मुकुटमप्यर्धेन्दुचूड़ाणिं नासामौक्तिकमङ्गुलीयकटकौ काञ्चीमपिस्वीकुरु।।६।।
सर्वाङ्गे घनसारकुंकुमघनश्रीगन्धपङ्काङ्कितं कस्तूरीतिलकं च फालफलके गोरोचनापत्रकम्।
गण्डादर्शनमण्डले नयनयोर्दिव्याञ्जनं तेऽङ्कितं कण्ठाब्जे मृगनाभिपंकममलं त्वत्प्रीतये कल्यताम्।।७।।
कल्हारोत्पलमल्लिका मरुवकैः सौवर्णपंकेरुहैर्जातीचम्पकमालतीवकुलकैर्मन्दारकुन्दादिभिः ।
केतक्या करवीरकैर्बहुविधैः कृप्ताः स्रजोमालिकाः संकल्पेन समर्पयामि वरदे सन्तुष्टये गृह्यताम्।।८।।
हन्तारं मदनत्य नन्दयसि यैरङ्गैरनङ्गोज्ज्वलैर्यैभृङ्गावलिनीलकुन्तलभरैर्बध्नासि तस्याशयम् ।
तानीमानि तवाम्ब कोमलतराण्यामोदलीलागृहाण्यामोदायदशाङ्गगुग्गुलुघृतैर्धूपैरहं धूपये ।।९।।
लक्ष्मीमुज्ज्वलयामि रत्ननिवहोद्भास्वान्तरे मन्दिरे मालारूपविलम्बितैर्मणिमयस्तम्भेषु सम्भावितैः।
चित्रैर्हाटकपुत्रिकाकरधृतैर्गव्यैर्घृतैर्वर्धितैर्दिव्यैर्दीपगणैर्धिया गिरिसुते सन्तुष्टये कल्पताम्।।१०।।
ह्रींकारेश्वरितप्तहाटककृतैः स्थालीसहस्रैर्भृतं दिव्यान्नं घृतसूपशाकभरितंचित्रान्नदं तथा ।
दुग्धान्नंमधु शर्करादधियुतं माणिक्यपात्रे स्थितं माषापूपसहस्रमम्ब सफलं नैवेद्यमावेदये।।११।।
सच्छायैर्वरकेतकीदलरुचा ताम्बूलवल्लीदलैः पूगैर्भूरिगुणैः सुगन्धिमधुरैः कर्पूरखण्डोज्ज्वलैः।
मुक्ताचूर्णविराजितैर्बहुविधैर्वक्त्राम्बुजामोदनैः पूर्णा रत्नकलार्चिकिा तव मुदे न्यस्तापुरस्तादुमे।।१२।।
कन्याभिः कमनीयकान्तिभिरलंकारामलारार्तिका पात्रे मौक्तिकचित्रपंक्तिविलसत्कर्पूरदीपालिभिः।
तत्तत्तालमृदङ्गगीतसहितं नृत्यत्पदाम्भोरुहं मन्त्राराधनपूर्वकं सुविहितं नीराजनं गृह्यताम् ।।१३।।
लक्ष्मीमौक्तिकलक्ष कल्पितसितच्छत्रं तु धत्ते रसा पीन्द्राणी च रतिश्च चामरवरे धत्ते स्वयं भारती।
वीणामेणविलोचनाः सुमनतसां नृत्यन्ति तद्रागवद्भावैराङ्गिकसात्विकैः स्फुटरसं मातस्तदालोकर्ण्यताम्
।।१४।।

ह्रींकारत्रयसम्पुटेन मनुनोपास्ये त्रयीमौलिभिर्वाक्यैर्लक्ष्यतनोस्तव स्तुतिविधौको वा क्षमेताम्बिके ।
संलापाः स्तुतयः प्रदक्षिणशतं संचार एवास्तु ते संवेशो नमसः सहस्रमरिवलं त्वत्प्रीतये कल्पताम्।।१५।।
श्री मन्त्राक्षरमालया गिरिसुतां यः पूजयेच्चेतसा सन्ध्यासु प्रतिवासरं सुनियतस्तस्यामलं स्यान्मनः।
चित्ताम्भोरुहमण्डपे गिरि सुता नृत्तं विधत्ते रसा द्वाणीवक्त्रसरोरुहे जलधिजा गेहे जगन्मङ्गला।।१६।।
इति गिरिवर पुत्री पादराजीवभूषा भुवनममलयन्ती सूक्तिसौरभ्यसारैः ।
शिवपदमकरन्दस्यन्दिनीयं निबद्धा मदयतु कविभृङ्गान्मातृका पुष्पमाला ।।१७।।

।।इति श्रीमत्परमहंस परिब्राजकार्य श्रीमदाद्यशंकर भगवत्पादाचार्य वर्यैः प्रणीता
श्री मन्त्रमातृका पुष्पमाला सम्पूर्ण।।

## ९. मकरन्द स्तोत्रम्

ॐ श्रीबीजे नादबिन्दुद्वितय शशिकलाकाररूपे स्वरूपे,
मातर्मे देहि ऋद्धिं जहि जहि जड़तांपाहिमां दीन दीनम् ।
अज्ञान ध्वान्तनाश क्षमरुचि रुचिर प्रोल्लसत्पादपद्मे,
ब्रह्मेशाद्यैः सुरेन्द्रैः सुरगण विनतैः संस्तुतां त्वां नमामि ।।१।।
लज्जा बीजस्वरूपे त्रिजगति वरदे ब्रीडयाया स्थितेयं,
तां नित्यां शम्भु शक्ति त्रिभुवन जननीं पालयन्त्रीं जगच्च ।
संसारे तान्निदानं सकलगुणमयीं सच्चिदानन्द रूपां ,
तेजोरूपां प्रदीप्तां त्रिभुवनतिमिराज्ञानहन्त्रीं नमामि ।।२।।
क्लीं बीजे कामकूटे धृतकुसुमधनुर्बाण पाशाङ्कुशां तां ,
वन्देभास्वत्सरोजोदरनिभवपुषं मोहयन्ती त्रिलोकीम् ।
काञ्ची मंजरी हाराङ्गदमुकुट लसत्स्वर्णमाणिक्यि रत्नै ,
राजन्तीमिन्दु वक्त्रांस्तनभरनमितांक्षीणमध्यांत्रिनेत्राम् ।।३।।
ऐं वाणी बीजरूपां त्रिभुवन जड़ताध्वान्तविध्वंसिनीं त्वां ,
शब्द ब्रह्मस्वरूपा श्रुतिभिरनुपदंगीयमाना त्वमेव ।
मातर्मे देहि बुद्धिं ममसदसिपरद्वन्द्वसंक्षोभकर्त्री-
मैन्द्रीं वाचस्पतेरप्यति विविधपदं त्वत्पदंम्भोजमीडे ।।४।।

सौः शक्तिः कार्य जाते घट पट प्रभृतौविष्टहेतौ सहाया,
केचिन्यायासहत्वं प्रकृतिपरिणतौ मूलभूता त्वमेव ।
केचिद्वाह्य प्रपंचे मणिरिव हिमणौ हेतुभूता त्वविद्याविद्या
विश्रान्ति युग्मक्षय इति जगतां मे निरिशुद्धभावाः ।।५।।

ओं मातस्ते नमस्ते श्रुतिमथितगुरुत्र्यक्षरे ब्रह्मरूपे,
मिथ्याज्ञानान्धकारे पतितमनुदिनैः पाहिमामक्षहीनम् ।
कामक्रोधप्रतिलोभप्रमदगदचयैः शत्रुभिः पीड्यमानं,
पत्नी पुत्रादि भृत्यैर्नत विविधजनैः शृङ्खलाभिर्निवद्धम् ।।६।।

ह्रींकारे ह्रीं स्वरूपे ममदह दुरितं व्याधि दारिद्रिय बीजं
मातस्त्वत्पादपद्मद्वितयपरिसरे प्रार्थये भक्तिमेकाम् ।
त्वं वाणी त्वं च लक्ष्मीस्त्वमसिगिरिसुता ब्रह्मविष्णुत्रिनेत्र,
श्रीरूपं नित्यसख्यं कृतमिह जननि त्वत्कटाक्षंक वृन्दैः ।।७।।

श्रींकारे श्रीस्वरूपे वितर मयि धनंधान्य हस्त्यश्व युक्तं,
सौख्यं माणिक्यरत्नाद्यभिलषितयुतं त्वत्पदार्चासुयोग्यम् ।
विद्यां त्वं देहि मोक्षमयिभव दहनैर्देविदन्दह्य माने,
योगीन्द्रैः सेव्यमाना हतकलुष चयैर्मोक्षमन्वेष यद्भिः ।।८।।

कामोयोनिश्चतुर्थः स्मरविबुध पतिर्भैविनेशीं च बीजं,
तावद्वर्णाली त्वं नतजनवरदे त्वत्पदे भक्तिमीहे ।
त्वत्पादाम्भोजयुग्मं हृदय सरसिजे संनिधायैक चित्ता,
ध्यात्वा तत्कर्मबन्धादनिविमलधियो मुक्तवन्तोमुनीन्द्राः ।।९।।

ब्रह्मेन्दुः कामदेवो वियदमर गुरुर्भैविनेशीं च बीजं,
तावद्वर्णास्विरूपैर्घटित तनूलता त्वां प्रपन्नोऽस्मि मातः ।
विष्णु ब्रह्मेश मूर्ध्नि स्थितमुकुटमणि प्रोल्लसत्पाद पद्म,
योगीन्द्रिध्येय पादाङ्कर ननरवर शशिद्योत विद्योतितांत्वाम् ।।१०।।

इन्दुः कामः सुरेशो वियदनल लसद्वामनेत्रार्ध चन्द्रै-
र्युक्त यद्बीजमे तत्तदपि तव वपुः सच्चिदाननन्दरूपम् ।

बाला त्वं भैरवी त्वं त्रिभुवनजननी तारणी नीलवाणी,
त्वं गौरी त्वं च काली सकलमनुमयी त्वं महामोक्षदात्री ।।११।।

सौः कारे बीजराजे त्रिभुवन जननी शक्तिराद्या त्वमेव,
त्वद्युक्तः शम्भुरेषप्रभवति चलितुं त्वांविना जाड्यवान्सः ।
ब्रह्मा विष्णुः कपर्दी तवजननि कृपालेश मात्राच्छरीरं,
गृहणन्तः सृष्टि रक्षाप्रलयमविरितं चक्रिरे त्वद्रथस्थाः ।।१२।।

ऐं बीजं वाग्भवारख्यं त्वमिह हि जड़ताध्वान्त चण्डप्रकाशा,
मातः कारुण्यधारामृतगलितदृशापश्य मां नाथहीनम् ।
मोह्यन्ते मोहितास्ते तव जननि महामायया बद्धचितत्ताः,
कारुण्यं प्रार्थयन्ते तवपदयुगले ज्ञानवन्तो मुनीन्द्राः ।।१३।।

क्लींकारो बीजराजस्तव जननि मनुश्रेष्ठ मध्यप्रवेशा-
त्साक्षाद् ब्रह्मस्वरूपी मदन तनुलता ब्रह्मणो मोदकर्त्ता ।
सुज्ञाने स्मेर वक्त्राम्बुज कुहर लसत्सृष्ट पीयूष धारा,
वेदाश्चत्वार एते तुहिनगिरिसुते प्राप्तमीनेन्द्र रूपे ।।१४।।

ह्रींकारोंकाररूपा त्वमिह शशिमुखी ह्रींस्वरूपा त्वमेव,
त्वं क्षान्तिस्त्वं च कान्तिर्हरिहरकमलोद्भतरूपा त्वमेव ।
त्वं सिद्धिस्त्वं च ऋद्धिर्मदनरिपुमनस्त्वं च सम्मोहयन्ती,
विद्या त्वं मुक्तिहेतुर्भव जलधि जनुर्दुःखहन्त्री त्वमेका ।।१५।।

श्रींबीजे श्रीस्वरूपे मधुरिपुमनसोमध्यमध्यासिता त्वं,
मारस्त्वद्दृष्टि लेशादमरपतिरसौ प्राप्तबान्बुद्धिमेनाम् ।
इत्येवं षोडशार्णं जपति मनुवरं स्वर्ग मोक्षक हेतु,
सिद्धीरष्टो लभन्ते य इदमनुदिनं श्रेष्ठमेतद्भजन्ते ।।१६।।

पूजयित्वा विधानेन महात्रिपुरसुन्दरीम् ।
इदं स्तोत्रं पठित्वा तु देवीसायुज्यमाप्नुयात् ।।१७।।

।।श्री मकरन्दस्तोत्रं समाप्तम्।।

## १०. त्रैलोक्यमोहन कवचम्

श्री देव्युवाच :

श्रीमत्त्रिपुरसुन्दर्या या या विद्या सुदुर्लभाः । कृपया कथिताः सर्वाः श्रुताश्चाधिगतामया।।
प्राणनाथाधुना ब्रूहि कवचं मन्त्रिविग्रहम् । त्रैलोक्यमोहनं चेति नामतः कथितं पुरा।।
इदानीं श्रोतुमिच्छामि सर्वार्थकवचं स्फुटम् ।।

ईश्वर उवाच :

शृणु देवि प्रवक्ष्यामि सुन्दरि प्राणवल्लभे । श्रैलोक्य मोहनं नाम सर्वविद्यौधविग्रहम्।।
यद्धृत्वा दानवान्विष्णुर्निर्जधान मुहुर्मुहुः । सृष्टिं वितनुते ब्रह्मा यद्धृत्वा पठनाद्यतः।।
संहर्ताहं यतोदेवि देवेशो वासवो यतः । धनाधिपः कुबेरोऽपि यतः सर्वे दिगीश्वराः।।
न देयं यदशिष्येभ्यो देय शिष्येभ्य एव च । अभक्तेभ्योऽपि पुत्रेभ्यो दत्त्वामृत्युमवाप्नुयात्।।
श्रीमत् त्रिपुरसुन्दर्याः कवचस्य ऋषिः शिवः। छन्दोविराट् देवता च श्रीमत्त्रिपुरसुन्दरी।।
धर्मार्थ काममोक्षेषु विनियोगः प्रकीर्तितः ।
शिरोमेवाग्भवंपातु 'क ए ई ल ह्रीं' रूपकम्।।
'ह स क ल ह्रीं' ललाटं पातु कामेश्वरी मम।
'ह क ह ल ह्रीं' दृशौ मे पातु कामेश्वरी सदा।।
'क ह ए ल ह्रीं' श्रुती मे सदा पातु तुरीयकम्।
'ह क ल स ह्रीं' पंचमं पातुजिह्वां च पञ्चमी।।
'क ऐं ई ल ह्रीं ह स क ल ह्रीं ह क ह ल ह्रीं क ह ए ल ह्रीं ह क ल स ह्रीं'—
वदनं सदा पातु पञ्चकूटा तु पञ्चमी।।१।।
'क ए ई ल ह्रीं' घ्राणं मे पातु वाग्भवसंज्ञकम्।
'ह स क ह ल ह्रीं' कण्ठं पातु कामेशसंज्ञकम्।
'स क ल ह्रीं' शक्तिकूटं स्कन्धौ पातु सदा मम।
'क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं' मे-
कामेनोपासितिाा विद्या कक्षदेशे सदावतु।।२।।
'क्लीं ह्रीं श्रीं ऐं सौः ओं ह्रीं श्रीं ऐं क्लीं सौः श्रीं ह्रीं क्लीं ऐं सौः'—
कामादि षोडशी पातु भुजौ त्रिपुरसन्दरी।।३।।

'ओं क्लीं ह्रीं श्रीं ऐं क्लीं सौः श्रीं ह्रीं क्लीं स्त्रीं ऐं क्रौं क्रीं श्रीं हुं।'
तारादि षोडशी पातु मणिबिन्ध्यद्वयं मम।।४।।
'श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं ऐं क्लीं सौः सौः ऐं क्लीं ह्रीं श्रीं'—
रमादि षोडशी पातु करौ त्रिपुरसुन्दरी।।५।।
'ह्रीं ह्सौः ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः स्त्रीः क्रों ऐं ह्रीं हूं हूं श्रीं'—
मायादि षोडशी ख्याता हृदयं परिरक्षतु।।६।।
'ऐं ह्रीं श्रीं क्लीं सौः ऐं क्लीं सौः सौः क्लीं ऐं सौः क्लीं श्रीं ह्रीं ऐं'—
वागादि षोडशी पातु स्तनौ मे सुन्दरीपरा।।७।।
'क ए श्रीं ह स क ल ह्रीं क्लीं ह स क ह ल ह्रीं सौः स क ल ह्रीं' नरव (२०)'—
वर्णा पार्श्वौ पात्वपराजिता।।८।।
'ह्रीं ह्सौं स्हौं ह्रीं' स्हौं ह्सौं क्लीं ह स क ह ल ह्रीं ह्रीं ह्रीं सौः सौः ह ह स क ह ल ह्रीं
क्लीं ह्सौं स्हौ ह्रीं स्हौं ह्सौ ह्रीं'— मे सुन्दरीयं समाख्याता महापुरुष पूजिता।
महागुह्य स्वरूपा च केवलानन्द चिन्मयी। एकत्रिंशद्वर्णरूपा कटिदेशं सदावतु।।९।।

'ह स क ल ह्रीं' मे पृष्ठं कूटं वाग्भव संज्ञकम्। 'ह स क ह ल ह्रीं' कुक्षि काम कूटं सदावतु।

वक्षस्थलं शक्तिकूटं 'स क ल ह्रीं' मे। लोपामुद्रा पञ्चदशी मध्यदेशं सदावतु।।१०।।

'क ह ए ई ल ह्रीं' नाभिं 'ह क ए ई ल ह्रीं कटिम्। सक्थिनी मे सदा पातु 'स क ए ई ल ह्रीं' सदा।

'क ह ए ई ल ह्रीं ह क ए ई ल ह्रीं स क ए ई ल ह्रीं' मे। मानवी विद्या सर्वतः परिरक्षतु।।११।।

'स ह क ए ई ल ह्रीं' मे ऊरुयुग्मं सदावतु। 'स ह क ह ए ई ल ह्रीं' गुह्यं पातु सदा मम।

'ह स क ए ई ल ह्रीं' तु जानुनी पातु मे सदा। 'स ह क ए ई ल ह्रीं स ह क ह ए ई ल ह्रीं ह स क ए ई ल ह्रीं' मम— जलजे भय संघाते सर्वतः परिरक्षतु।।१२।।

'ह स क ए ई ल ह्रीं' मे गुल्फयुग्मं सदावतु। 'ह स क ह ए ई ल ह्रीं' पादौ पातु सदा मम।

'स ह क ए ई ल ह्रीं' मे प्रपदौमे पातु सर्वदा।

'ह स क ए ई ल ह्रीं ह स क ह ए ई ल ह्रीं स ह क ए ई ल ह्रीं' सदा कुबेरेण प्रपूजिता द्वाविशंत्यक्षरी विद्या सर्वाङ्गं मे सदावनु।।१३।।

'क ए ई ल ह्रीं' प्राच्यां मां त्रिपुरा परिरक्षतु। 'ह स क ह ल ह्रीं' पातु वह्निकोणे निरन्तरम्।

'स ह स क ल ह्रीं' याम्यांपातु मां सर्वसिद्धिदा।

'क ए ई ल ह्रीं ह स क ह ल ह्रीं स ह स क ल ह्रीं'
विद्यागस्त्य सेव्या च चक्रस्था मां सदावतु।।१४।।
'स ए ई ल ह्रीं' च नित्यं नैर्ऋत्यां मां सदावतु।
'स ह क ह ल ह्रीं' पातु प्रतीच्यां मे द्वितीयकम्।
'स क ल ह्रीं' पातु वायव्ये सदा मां परिरक्षतु।
'स ए ई ल ह्रीं स ह क ल ह्रीं स क ल ह्रीं तु।
नन्द्याराधित विद्येयं सर्वाङ्गं मे सदावतु।।१५।।
'ह स क ल ह्रीं' वायव्ये 'स ह क ल ह्रीं' उत्तरे।
'स क ह ल ह्रीं' ईशान्ये सुन्दरीपातु मां सदा।
'ह स क ल ह्रीं स ह क ल ह्रीं स क ह ल ह्रीं' मां।
ऊर्ध्वं रक्षतु मे नित्यं सूर्यपूज्या महोदया।।१६।।
'क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं मे।
सर्वाङ्गं वैशक्रपूज्या सततं परिरक्षतु।।१७।।
'क ए ई ल ह्रीं ह क ह ल ह्रीं ह स क ल ह्रीं' च
ब्रह्माणी मां सदा पायाच्छ्रीमत्रिपुरसुन्दरी।।१८।।
'ह स क ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं' च।
'ह स क ल ह स क ह ल स क ल ह्रीं' शाङ्करी।
चतुष्कूटा महाविद्या पाताले मां सदावतु।।१९।।
'ह स क ल ह्रीं' आधारं।' 'ह स क ह ल ह्रीं लिङ्गे।'
'स क ल ह्रीं' पातु नाभिं।' 'स ह क ल ह्रीं' हृदये।
'स ह क ह ल ह्रीं' कण्ठं। 'स ह स क ल ह्रीं' नाभ्याम्।
'ह स क ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं।
स ह क ल ह्रीं स ह क ह ल ह्रीं स ह स क ल ह्रीं।
मनोभवा सदा पातु रस संख्या महाप्रभा।
षट्कूटा वेष्णावी विद्या पातु मां सुन्दरी परा।।२०।।
'क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं' च।
दुर्वाससा प्रपूज्या मां दिक्षु विद्या सदावतु।।२१।।

'क ह ए ई ल ह्रीं ह ल ए ई ल ह्रीं स क ए ई ल ह्रीं।'
क्रोधेन पूजिता देवी विदिक्षु परिरक्षतु।।२२।।
'ह स क ल ह्रीं ह स क ह ह ल ह्रीं स क ल ह्रीं।
महाज्ञानमयी विद्या षोडशी मां सदावतु।।२३।।
'श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं ऐं क्लीं सौः सौः ऐं क्लीं ह्रीं श्रीं।'
सर्वाङ्गं मे सदा पातु बीजरूपा च षोडशी।।२४।।

मतान्तरे:—

श्रीं ह्रीं क्लीं ऐ हैं सौः ओं ह्रीं श्रीं क ए ई ल ह्रीं
ह स क ह ल ह्रीं स क ल ह्रीं सौः ऐं क्लीं ह्रीं श्रीं।
सर्वाङ्गं मे सदा पातु पूर्णरूपा तु षोडशी।।२४।।
'ओं क्लीं ह्रीं श्रीं ऐं क्लीं सौः क ए ई ल ह्रीं ह स
क ह ल ह्रीं स क ल ह्रीं स्त्रीं ऐं क्रों क्रीं ई हुं' महादेवी।
श्री महाषोडशी पूर्णा प्रथिता भुवनत्रये।
ज्ञानेन मृत्युशमनी शिरस्था सर्वतोऽवतु।
श्री महाषोडशी पूर्णा महादेवेन पूजिता।
यस्या विज्ञान मात्रेण मृत्योर्मृत्युर्भवेत्स्वयम्।।२५।।
'ऐं क ए ई ल ह्रीं क्लीं ह स क ह ल ह्रीं सौः स क
ल ह्रीं सोहं हौं हंसः ह्रीं स क ल ह्रीं सौः ह स क ह
ल ह्रीं क्लीं क ए ई ल ह्रीं ऐं' ब्रह्मस्वरूपिणी।
अष्टादशाक्षरी विद्या परमानन्दचिद्घना।
नेत्र वेदा (४२) त्मकैर्वर्णयुता मां सर्वतोऽवतु।।२६।।
इति ते कथितं देवि ब्रह्मविद्या कलेबरम् । त्रैलोक्यमोहनं नाम कवचं ब्रह्मरूपकम्।।
सप्तकोटिमहाविद्यास्तन्त्रेषु कथिताः प्रिये । तासां सारात्सारतरा याश्च विद्याः सुगोपिताः।।
बहुनात्र किमुक्तेन श्रीमहाषोडशी परा । प्रकाशिता मया देवि यां प्रच्छसि पुनः पुनः।।
महाविद्यामयं ब्रह्म कवचं मन्मुखोदितम् । गुरुमभ्यर्च्य विधिवत्कवचं प्रपठेत्ततः।।
देवीमशयर्व्य विधिवत्पुरश्चर्यां समाचरेत् । अष्टोत्तर शतं जप्त्वा दशांशं मवनादिकम्।।
ततः सुप्रसिद्धकवचः पुण्यात्मामदनोपमः।।
मन्त्रसिद्धिर्भवेत्तस्य पुनश्चर्यां विना ततः । वक्त्रे तस्य वसेद्वाणी कमला निश्चला गृहे।।

पुष्पाञ्जल्यष्टकं दत्त्वा मूलेनैव पठेत्सकृत् । दशवर्ष, सहस्राणां पूजायाः फलमाप्नुयात्।।
आत्मानं तन्मयं कृत्वा यः फठेत्खवचं परम्। यं यं पश्यति वै शीघ्रं तस्यदासो भवेद्ध्रुवम्।।
विलिख्य भूर्जेघुटिकां स्वर्णस्थां धारयेद्यदि । कण्ठे वा यदि वा बाहौ सकुर्याद्दासवज्जगत्।।
त्रिलोकीं क्षोभयत्येव त्रैलोक्य विजयी भवेत्। तद्गात्रं प्राप्य शस्त्राणि महास्त्रादीनिपार्वति।।
माल्यानि कुसुमानीव सुखदानी भवन्ति हि । इदं कवचमज्ञात्वा यो जपेत्सुन्दरीं पराम्।।
नवलक्षं प्रजप्त्वापि तस्य विद्या न सिध्यति । स शस्त्रघातमाप्नोति सोऽ चिरान्मृत्युमाप्नुयात्।।
इदमेव परं यस्माद् भुक्तिमुक्तिप्रदायकम् । तस्मात्सर्वप्रयत्नेन पठनीयं मुमुक्षुभिः।।
भूवेश्मगत्रिवृतषोडशनागशक्रदिग्युग्मवस्वनलकोणगबिन्दुमध्ये।
सिंहासनोपरिगतारकपीठमध्ये । प्रोत्फुल्लपद्मनिलयां त्रिपुरांभजेऽहम्।।
इति रुद्रयामले गौरीश्वर सम्वादे, श्री राजराजेश्वरी श्रीमहात्रिपुरसुन्दर्यास्त्रैलोक्य मोहनाख्य कवचम्।।

अस्य कवचस्य तूत्कीलनम्— ''ॐ हसकलह्रीं ह्रीं ह्रीं ह्रीं सकलह्रीं क्लीं क्लीं श्रीं श्रीं श्रीं क्रीं क्रीं क्रीं'' रुद्रसूभ्यग्रेण मूलविद्याशापमत्कीलयोत्कीलय स्वाहा।।इति।।

## श्रीदेवीस्तोत्रपञ्चकम्

### ११. *लघुस्तुतिः*

ऐन्द्रस्येव शरासनस्य दधती मध्ये ललाटं प्रभां
शौक्लीं कान्तिमनुष्णगोरिव शिरस्यातन्वती सर्वतः ।
एषासौ त्रिपुरा हृदि द्युतिरिवोष्णांशोस्सदाहस्थतान्
छिन्द्यान्नस्सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ।।१।।

या मात्रा त्रपुसीलतातनुलसत्तन्तुस्थितिस्पर्धिनी
वाग्बीजे प्रथमे स्थिता तव सदा तां मन्महे ते वयम् ।
शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमाः
ज्ञात्वेत्थं न पुनस्स्पृशन्ति जननीगर्भेऽर्भकत्वं नराः ।।२।।

दृष्टवा सम्भ्रमकारि वस्तु सहता ऐ ऐ इति व्याहृतं
येनाकूतवशादपीह वरदे! बिन्दु विनाप्यक्षरम् ।
तस्यापि ध्रुवमेव देवि! तरसा जाते तवानुग्रहे
वाचस्सूक्ति सुधार सद्रवमुचो निर्यान्ति वक्ताम्बुजात्।।३।।

यन्नित्ये! तव कामराजपरं मन्त्राक्षरं निष्कलं
तस्सारस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद्भुवि ।
आख्यानं प्रतिपर्व सत्यतपसो यत्कीर्तन्तो द्विजाः
प्रारम्भे प्रवणवास्पदप्रणयितां नीत्वोच्चरन्ति स्फुटम् ।।४।।

यत्सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधैः
तार्तीयं तदहं नमामि मनसा त्वद्बीजभिन्दुप्रभम् ।
अस्त्यौर्वोऽपि सरस्वतीमनुगतो जाड्याम्बुविच्छित्तये
गोशब्दो गिरि वर्तते सुनियतं योगं विना सिद्धिदः ।।५।।

एकैकं तव देवि! बीजमनघं सव्यञ्जनाव्यञ्जनं
कूटस्थं यदि वा पृथक्क्रभगतं यद्वा स्थितं व्युत्क्रमात्।
यं यं काममपेक्ष्य येन विधिना केनापि वा चिन्तितं
जप्तं वा सफलीकरोति सततं तं तं समस्तं नृणाम् ।।६।।

वामे पुस्तकधारिणीमभयदां साक्षस्त्रजं दक्षिणे
भक्तेभ्यो वरदान पेशलकरां कर्पूरकुन्दोज्वलाम् ।
उज्जृभाम्बुजपत्रकान्तनयनस्निग्धप्रभालोकिनीं
ये त्वामम्ब! न शीलयन्ति मनसा तेषां कवित्वंकुतः।।७।।

मे त्वां पाण्डुरपुण्डरीकपटलस्पष्टाभिराम प्रभां
सिञ्चन्तीममृद्रवैरिव शिरोध्यायन्तिमूर्ध्नि स्थिताम् ।
अश्रान्ता विकटस्फुटाक्षरपदा निर्याति वक्ताम्बुजात्
तेषां भारति! भारती सुरसरित्कल्लोललोलोर्मिवत् ।।८।।

ये सिन्दूरपरागपिञ्जंपिहितां त्वत्तेजसाऽऽद्यामिमां
उर्वी चापि विलीनयावकरसप्रस्तारमग्नामिव ।
पश्यन्ति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वर-
क्लाकन्तत्रस्तकुरङ्गशाबिकदृशो वश्या भवन्ति स्फुटम् ।।९।।

चञ्चत्काञ्चनकुण्डलाङ्गदधरामाबद्धकाञ्चीस्त्रजं
जं ये त्वां चेतसि तद्गते क्षणमपि ध्यायन्ति कृत्वा स्थिराम्।
तेषां वेश्मसु विभ्रमादहरहः स्फारीभवन्त्यश्चिरं
माद्यत्कुञ्जरकर्णतालतरलाः स्थैर्य भूजन्ते श्रियः ।।१०।।

आर्भत्या शशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं
बन्धुकप्रसवारुणाम्बरधरां प्रेतासनाध्यासिनीम् ।
त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीनतुङ्ग स्तनीं
मध्येनिम्नवलित्रयाङ्कितततनुं त्वद्रूपसंवित्तये ।।११।।

जातोऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले
निश्शेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोन्नतः ।
यद्विद्याधरबृन्दवन्दितपदश्श्रीवत्सराजोऽभवत्
देवि! त्वच्चरणाम्बुजप्रणतिजः सोऽयं प्रसादोदयः ।।१२।।

चण्डि! त्वच्चरणाम्बुजार्चनकृते बिल्वादिलोल्लुण्ठन-
त्रुट्यत्कण्टककोटिभिः परिचयं येषां न जग्मुः कराः।
ते दण्डाङ्कुशचक्रचापकुलिशश्रीवत्समत्स्याङ्कितैः
जायन्ते पृथिवीभुजः कथमिवाम्भोजप्रभैः पाणिभिः।।१३।।

विप्रा क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवैः
त्वां देवि! त्रिपुरे! परापरमयीं सन्तर्प्य पूजाविधौ ।
यां यां प्रार्थयते मनः स्थिरधियां तेषां त एव ध्रुवं
तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैरविघ्नी कृता ।।१४।।

शब्दानां जननी त्वमत्र भुवते वाग्वादिनीत्युच्यसे
त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति स्फुटम् ।
लीमन्ते खलु यत्र कल्पविरमे ब्रह्मादयस्तेऽप्यमी
स त्वं काचिदचिन्तयरूपमहिमा शक्तिः परा गीयसे ।।१५।।

देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिः स्वराः
त्रैलोक्य त्रिपदी त्रिपुष्करमथो त्रिब्रह्म वर्णास्त्रयः ।
यत्किञ्चिचज्जगति त्रिधा नियमित वस्तु त्रिवर्गादिकं
तत्सर्वं त्रिपुरेति नाम भगवत्यन्त्रेति ते तत्त्वतः ।।१६।।

लक्ष्मीं राजकुले जयां रणभुवि क्षेमङ्करीमध्वनि
क्रव्यादद्विपसर्पभाजि शबरीं कान्तारदुर्गे गिरौ ।
भूतप्रेतपिशाचजम्बुकभये स्मृत्वा महाभैरवीं
व्यामोहे त्रिपुरां तरन्ति विपदस्तारां च तोयप्लवे ।।१७।।

माया कुण्डलिनी क्रिया मधुमती काली कला मालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ।
शक्तिशङ्करवल्लभा त्रिनयना वाग्वादिनी भैरवी,
ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ।।१८।।

आईपल्लवितैः परस्परयुतैर्द्वित्रिक्रमाद्यक्षरै
काद्यैः क्षान्तगतैस्स्वरादिभिरथ क्षान्तैश्च तैस्सस्वरैः ।
नामानि त्रिपुरे भवन्ति खलु यान्यत्यगुह्यानि ते
तेभ्यो भैरवपत्नि! विंशतिसहस्रेभ्यः परेभ्यो नमः ।।१९।।

बोद्धव्या निपुणं बुधैस्स्तुतिरियं कृत्त्वा मनस्तद्नतं
भारत्यास्त्रिपुरेत्यनन्यमनसा यत्राद्यवृत्ते स्फुटम् ।
एकद्वित्रिपदक्रमेण कथितस्तत्पादसङ्ख्याक्षरैः
मन्त्रोद्धार विधिर्विशेषसहितस्सत्सम्प्रदायान्वितः ।।२०।।

सावद्यं निरवद्यमस्तु यदिवा किं वानया चिन्तया
नूनं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि ।
सञ्चिचन्त्यापि लघुत्वमात्मनि दृढं सञ्जायमान हठात्
त्वद्भक्त्या मुखरीकृतेन रचितं यस्मान्मयापि ध्रुवम् ।।२१।।

## १२. चर्चास्तवः

सौन्दर्यविभ्रमभुवो भुवनाधिपत्यसङ्कल्पकल्पतरवस्त्रिपु! जयन्ति!
एते कवित्वकुमुदप्रकरावबोधपूर्णेन्दवस्त्वयि जगज्जननि! प्रणामाः ।।१।।
देवि! स्तुतिव्यतिकरे कृतबुद्धयस्ते वाचस्पतिप्रभृतयोऽपि जडीभवन्ति ।
तस्मान्निसर्गजडिमा कतमोऽहमत्र स्तोत्रं तव त्रिपुरतापनप्ति! कर्तुम् ।।२।।
मातस्तथापि भवती भवतीव्रताप विच्छित्तये स्तवमहार्णवकर्णधारः ।
स्तोतुं भवानि! स भवच्चरणारविन्द भक्तिग्रहः किमपि मां मुखरीकरोति ।।३।।
सूते जगन्ति भवती भवती विभर्ति जागर्ति तत्क्षयकृते भवती भवानि! ।
मोहं भिनत्तिं भवति भवती रुणद्धि लीलायितं जयति चित्रमिदं भवत्याः ।।४।।
यस्मिन्मनागपि नवाम्बुजगौरीं गौरीं प्रसादमधुरां दृशमादधासि ।
तस्मिन्निरन्तरमनङ्गशरावकीर्णसीमन्तिनीनयनसन्ततयः पतन्ति ।।५।।

पृथ्वीभुजोऽप्युदयनप्रभवस्य तस्य विद्याधरप्रणतिचुम्बितपादपीठः ।
तच्चक्रवर्तिपदवीप्रणयस्स एषः त्वत्पादपङ्कजरजः कणजः प्रसादः ।।६।।
त्वत्पादपङ्कजरज प्रणिपातपूर्वैः पुण्यैरनल्पमतिभिः कृतिभिः कवीन्द्रैः ।
क्षीरक्षपाकरदुकूलहिमावदाता कैरप्यवापि भुवनत्रितयेऽपि कीर्तिः ।।७।।
कल्पद्रुमप्रसवकल्पितचित्रपूजां उद्दीपितप्रियतभामदरक्तगीतिम् ।
नित्यं भवानि! भवतीमुपवीणयन्ति विद्याधराः कनकशैलगुहागृहेषु ।।८।।
लक्ष्मीवशीकरणकर्मणि कामिनानां आकर्षणव्यतिकिरेषु च सिद्धमन्त्र ।
नीरन्ध्रमोहतिमिरिच्छिदुरप्रदीपो, देवि! त्वदङ्घ्रि जनितो जयतिः प्रसाद ।।९।।
देवि! त्वदङ्घ्रिनखरत्न भवो मयूखाः प्रत्यग्रमौक्तिकरुचो मुदमुद्वहन्ति ।
सेवानतिव्यतिकरे सुरसुन्दरीणां सीमन्तसीम्निकुसुमस्तब कायितं यैः ।।१०।।
मूर्ध्नि स्फुरत्तुहिनदीधितिदीप्तिदीप्तं मध्ये ललाटममरायुधरश्मिचित्रम् ।
हृच्चक्रचुम्बि हुतभुक्कणिकानुकारि ज्योतियैंदेतदिदमम्ब! तव स्वरूपम् ।।११।।
रूपं तव स्फुरितचन्द्रमरीचिगौरं आलोकते शिरसि वागधिदैवतं यः ।
निस्सीमसूक्तिरचनामृतनिर्झरस्य तस्य प्रसाद मधुराः प्रसरन्ति वाचः ।।१२।
सिन्दूरपांसुपटलच्छुरितामिव द्यां त्वत्तेजसा जतुरसस्नपितामिवोर्वीम ।
यः पश्यति क्षणमपि त्रिपुरे विहाय व्रीडां मृडानि! सुदृशस्तमनुद्रवन्ति ।।१३।।
मातर्मुहूर्तमपि यः स्मरति स्वरूपं लाक्षारसप्रसरतन्तुनिभं भवत्याः ।
ध्यायन्त्यनन्यमनसस्तमनङ्गतप्ताः प्रद्युम्नसीम्नि सुभगत्वगुणं तरुण्यः ।।१४।।
थोऽयं चक्रास्ति गगनार्णवरतनमिन्दुः योऽयं सुरासुरगुरुः पुरुषः पुराणः ।
यद्वागमर्धमिदमन्धकसूदनस्य देवि! त्वमेव तदिति प्रतिपादयन्ति ।।१५।।
इच्छानुरुपमनुरूपगुणप्रकर्ष सङ्कर्षिणि! त्वमभिमृश्य यदा बिभर्षि ।
जायेत स त्रिभवनैकगुरुस्तदानी देवश्शिवोऽपि भुवनत्रयसूत्रधारः ।।१६।।
ध्यातासि हेमवति! येन हिमांशुरश्मिमालामलद्युतिरकल्मषमानसेन ।
तस्याविलम्बमनवद्यमनन्तकल्पं अल्पैर्दिनैस्सृजसि सुन्दरि! वाग्विलासम् ।।१७।।
आधाररमारुतनिरिोधवशेन येषां सिन्दूररञ्जितसरोजगुणानुकारि ।
दीप्तं हृदि स्फुरति देवि वपुस्त्वदीयं ध्यायन्ति तानिह समीहितसिद्धिसार्थाः ।।१८।।

मे चिन्तयन्त्यरुणमण्डलमध्यवर्ति रूपं तावाम्ब! नवयावकपङ्कपिङ्गम् ।
तेषां सदैव कुसुमायुधबाणभिन्न-वक्षः स्थला मृगदृशो वशगा भवन्ति ।।१९।।
त्वामैन्दवीमिव कलामनुकालदेशं उद्भासिताम्बरतलामवलोकयन्तः ।
सद्यो भवानि! सुधियः कवयो भवन्ति त्वं भावनाहितधियां कुलकामधेनुः ।।२०।।
शर्वाणिाि! सर्व जनवन्दितपादपद्मे! पद्मच्छदद्युतिविडम्बितनेत्रलक्ष्मि!
निष्पापमूर्तिजनमानसराजहंसि हंसि त्वमापदमनेकविधां जनस्य ।।२१।।
उत्तप्तेहेमरुचिरे! त्रिपुरे! पुनीहि चेतश्चिरन्तनमघौघवनं लुनीहि ।
कारागृहे निगलबन्धनयन्त्रितस्य त्वत्संस्मृतौ झटिति मे निगलास्त्रुटन्ति ।।२२।।
त्वां व्यापिनीति सुमना इति कुण्डलीति त्वां कामिनीति कमलेति कलावतीति ।
त्वां मालिनीति ललितेत्यपराजितेति देवि! स्तुवन्ति विजयेति जयेत्युमेति ।।२३।।
उद्दामकामपरमार्थसरोजखण्ड चण्डद्युतिद्युतिमपासितिषङ्किकाराम् ।
मोहद्विपेन्द्रकदनोद्यतबोधसिंलीलागुहां भगवतीं त्रिपुरां नमामि ।।२४।।
गणेशवटुकस्तुता रतिसहायकामान्विता स्मरारिवरविष्टरा कुसुमबाणैर्युता ।
अनङ्गकुसुमादिभिः परिवृता च सिद्धैस्त्रिभिः कदम्बवनमध्यगा त्रिपुरसुन्दरी पातुः नः।।२५।।
रुद्राणि! विद्रुममयीं प्रतिमामिव त्वां ये चिन्तयन्त्यरुणकान्तिमनन्यरूपाम् ।
तानेत्य पक्ष्मलदृशः प्रसंभ भजन्ते कण्ठावसक्तभृदुबाहुलतांस्तरुण्यः ।।२६।।
त्वद्पैकनिरूपणप्रणयिताबन्धो दृशोस्तवद्गुण-ग्रामाकर्णनरागिता श्रवणयो
स्त्वत्संस्मृतिश्चेतसि ।
त्वत्पादार्चनचातुरी करयुगे त्वत्कीर्तितं वाचि मे कुत्रापि त्वदुपासनव्यसनिता
मे देवि मा शाम्यतु ।।२७।।
त्वद्रू पमुल्लसितदाडिमपुष्परक्तं उद्भावयेन्मदनदैवतमक्षरं यः ।
तं रूपहीनमपि मन्मथनिर्विशेषं आलोकयन्त्युरुनितम्बतटास्तरुण्यः ।।२८।।
ब्रह्मेन्द्ररुद्रहरिचन्द्रसहस्त्ररश्मि-स्कन्दद्विपाननहुताशनवन्दितायै ।
वागीश्वरि! त्रिफुवनेश्वरि! विश्वमातः अग्तर्बहिश्च कृतसंस्थितये नमस्ते ।।२९।।
यः स्तोत्रमेतदनुवासरमीश्वरायाः श्रेयस्करं पठति वा यदि वा शृणोति ।
तस्येप्सितं फलति राजभिरीड्यतेऽसौ जायेत स प्रियतमो मदिरेक्षणानाम् ।।३०।।

इति चर्चास्वः

## १३. घटस्तवः

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य ।
पादाम्बुजं भवतु मे विजयाय मञ्जु
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ।।१।।

देवि! त्रयम्बकपत्नि! पार्वति! सति!त्रैलोक्यमातश्शिवे!
शर्वाणि! त्रिपरे! मृडानि! वरदे! रुद्राणि! कात्यायनि!
भीमे! भैरवी! चण्डि! शर्वरिकले! कालक्षये! शूलिनि!
त्वत्पादप्रणयाननन्यासससमनसः पर्याकुलाप्पाहि नः ।।२।।

देवि! तवां सकृदेव यः प्रणमति क्षोणीभृतस्तं नम-
न्त्याजन्मस्फुरदङ्घ्रिपीठविलुठत्कोटीरकोटिच्छटाः ।
यस्त्वामर्चति सोऽर्च्यते सुरगणैर्यस्स्तौति स स्तूयते
यस्त्वां ध्यायाति तस्मरार्तिविधुरा ध्यायन्तिवामभ्रुव ।।३।।

उन्मत्ता इव सग्रहा इव विषव्यासक्तमूर्छा इव
प्राप्तप्रौढमदा इवार्तिविरहग्रस्ता इवार्ता इव ।
ये ध्यायन्ति हि शैलराजतनयां धन्यास्त एवाग्रतः
त्यक्तोपाधिविवृद्धरागमनसो ध्यायन्ति तान् सुभ्रुवः ।।४।।

ध्यायन्ति ये क्षणमपि त्रिपुरे! हृदि त्वां
लावण्ययौवनधनैरपि प्रयुक्ताः।
ते विस्फुरन्ति ललितायतलोचनानां
चित्तैकभित्तिलिखितप्रतिमाः पुमांस ।।५।।

एतं किं नु दृशा पिवाम्युत विशाभ्यस्याङ्गमङ्गैर्निजैः
किं वाऽमुं निगराभ्यनेन सहसा किं वैकतामाश्रये ।
यस्येत्थं विवशो विकल्पललिताकूतेन योषिज्जनः
किं तद्यन्न करोति देवि! हृदये यस्य त्वमावर्तसे ।।६।।

विश्वव्यापिनि यद्वदीश्वर इति स्थाणावनन्याश्रयः
शब्देशक्तिरिति त्रिलोकजननि! त्वय्येव तथ्यस्थितिः ।
इत्थं सत्यपि शक्नुवन्ति यदिमाः क्षुद्रा रुजो वाधितुं
त्वद्भक्तानपि न क्षिणोषि च रुषा तद्देवि! चित्रं महत् ।।७।।

इन्दोर्मध्यगतां भृगाङ्कसदृशच्छायां मनोहारिणीं
पाण्डूत्फुल्लसरोरुहासनगतां स्निग्धप्रदीप्तच्छविम् ।
वर्षन्तीममृतं भवानि! ध्यायन्ति ये देहिनः
ते निर्मुक्तरुजो भवन्ति रिपिवः प्रोज्झन्ति तान् दूरतः ।।८।।

पूर्णेन्दोश्शकलैरिवातिबहलैः पीयूष पूरैरिव
क्षीराब्धैर्लहरीभरैरिव सुधापङ्कस्य पिण्डैरिव ।
प्रालेयैरिव निर्मितं तव वपुर्ध्यायन्ति ये श्रद्धया
चित्तान्तर्निहितार्तितापविपदस्ते सम्पदं बिभ्रति ।।९।।

ये संस्मरन्ति तरलां सहसोल्लसन्तीं
त्वां ग्रन्थिपञ्चकभिदं तरुणार्कशोणाम् ।
रागार्णवे बहलरागिणि मज्जयन्तीं
कृत्स्नं जगद्दधति चेतासि तान् मृगाक्षयः ।।१०।।

लाक्षारसस्नपितपङ्कजतन्तुतन्वीं
अन्तः स्मरत्यनुदिनं भवती भवानि ।
यस्तं स्मरप्रतिममप्रतिमस्वरूपाः
नेत्रोत्पलैर्मृगदृशो भृशमर्चयन्ति ।।११।।

स्तुमस्त्वां वाचमव्यक्तां हिमकुन्देन्दुरोचिषम् ।
कदम्बमालां बिभ्राणामापादतललम्बिनीम् ।।१२।।

मूर्ध्निन्दोस्सितपङ्कजासनगतां प्रालेय पाण्डुत्विषं
वर्षन्तीममृतं सरोरुहभुवो वक्त्रऽपि रन्ध्रेऽपि च ।
अच्छिन्ना च मनोहरा च ललिता चातिप्रसन्नापि च
त्वामेवं स्मरतस्स्मरारिदयिते वाक्सर्वतो वल्गति ।।१३।।

ददातीष्टान् भोगान् क्षपयति रिपून् हन्ति विपदो
दहत्याधीन् व्याधीन् शमयति सुखानि प्रतनुते ।
हठादन्तर्दुःखं दलयति पिनष्टीष्टविरहं
सकृद्ध्याता देवी किमिव निरवद्यं न कुरुते ।।१४।।

यस्त्वां ध्यायति वेत्ति विन्दति जपत्यालोकते चिन्तय
त्यन्वेति प्रतिपद्यते कलयति स्तौत्याश्रयत्यर्चति ।
यश्च त्र्यम्बकवल्लभे! तव गुणानाकर्णयत्यादरात्
तस्य श्रीर्न गृहादपैति विजयस्तस्याग्रतो धावति ।।१५।।

किं किं दुःखं दनुजदलिनि! क्षीयते न स्मृतायां
का का कीर्तिः कुलकमलिनि! ख्याप्यते न स्तुतायाम् ।
का का सिद्धिस्सुखरनुते। प्राप्यते नार्चितायां
कं कं योगं त्वयि न चिनुते चित्तमालाम्बितायाम ।।१६।।

ये देवि! दुर्धरकृतान्तमुखान्तरस्थाः
य कालि! कालधनपाशनितान्तबद्धाः।
ये चण्डि! चण्डगुरुकल्मषसिन्धुमग्नाः
तान् पासि मोचयसि तारयसि स्मृतैव ।।१७।।

लक्ष्मी वशीकरण चूर्णसहोदराणि
त्वत्पादपङ्कजरजांसि चिरं जयन्ति ।
यानि प्रणाममिलितानि नृणां ललाटे
लुम्पन्ति दैवलिरिवतानि दुरक्षराणि ।।१८।।

रे मूढाः! किमयं वृथेव तपसा कायः परिक्लिश्यते
यज्ञैर्वा बहुदक्षिणैः किमितरे रिक्तिक्रियन्ते गृहाः ।
भक्तिश्चेदविनाशिनी भगवतीपादद्वयी सेव्यतां
उन्निद्राम्बुरुहातपत्रसुभगा लक्ष्मीः पुरो धावति ।।१९।।

याचे न कच्चन न कञ्चन वञ्चयामि
सेवे न कञ्चन निरस्तसमस्तदैन्यः ।

श्लक्ष्णं वसे मधुरमद्मि भजे वरस्त्रीः
देवी हृदि स्फुरति मे कुलकामधेनुः ।।२०।।

नमामि यामिनीनाथलेखालङ्कृतकुन्तलाम् ।
भवानीं भवसन्तापनिर्वापणसुधानदीम् ।।२१।।

।। इति घटस्तवः तृतीयः ।।

## १४. अम्बास्तवः

यामामनन्ति मुनुयः प्रकृतिं पुराणीं विद्येति यां श्रुतिरहस्यविदो वदन्ति ।
तामर्धपल्लवितशङ्कररूपमुद्रां देवीमनन्यशरणाश्शरणं प्रपद्ये ।।१।।
अम्ब स्तवेषु तव तावदकर्तकाणि कुण्ठीभवन्ति वचसामपि गुम्भनानि ।
डिम्भस्य मे स्तुतिरसावसमञ्जसापि वात्सल्यनिघ्नहृदयां भवतीं धिनोतु ।।२।।
व्योमेति बिन्दुरिति नाद इतीन्दुलेखा रूपेति वाग्भवतनूरिति मातृकेति ।
निस्स्यन्दमानसुखबोध सुधास्वरूपा विद्योतसे मनसि भाग्यवतां जनानाम् ।।३।।
आविर्भवत्पुलकसन्ततिभिश्शरीरैः निस्स्यन्दमान सलिलैर्नयनैश्चर्चा नित्यम् ।
वाग्भिश्च गन्ददपदाभिरुपासते ये पादौ तवाम्ब! भुवनेषु त एव धन्याः ।।४।।
वक्त्रं यदुद्यतमभिष्टुतये भवत्याः तुभ्यं नमो यदपि देवि! शिरः करोति ।
चेतश्च यत्त्वयि परायणमम्ब! तानि कस्यापि कैरपि भवन्ति तपोविशेषैः ।।५।।
मूलालबालकुहरादुदिता भवानि! निर्भिद्य षट्सरसिजानि तटिल्लतेव ।
भूयोऽपि तत्र विशसि ध्रुवमण्डलेन्दु निस्सियन्दमानपरमामृततोयरूपा ।।६।।
दग्धं यदा मदनमेकमनेकधा ते मुग्धः कटाक्षविधिरङ्कुरयाञ्चकार ।
धत्ते तदाप्रभृति देवि ललाटनेत्रं सत्यं ह्रियैव मुकुलीकृतमिन्दुमौलेः ।।७।।
अज्ञातसम्भवमनाकलितान्ववायं भिक्षुं कपालिनमवाससमद्वितीयम् ।
पूर्व करग्रहणमङ्गलतो भवत्याः शम्भुं क एव बुबुधे गिरिराजकन्ये ।।८।।
चर्माम्बरं च शवभस्मविलेपनं च भिक्षाटनं च नटनं च परेतभूमौ ।
वेतालसहतिपरिग्रहता च शम्भोः शोभां विभर्ति गिरिजे! तव साहचर्यात् ।।९।।
कल्पोपसंहरणकेलिपु पण्डितानि चण्डानि खण्डपरशोरपि ताण्डवानि ।
आलोकनेन तव कोमलितानि मातः! लास्यात्मना परिणमन्ति जगद्विभूत्यै ।।१०।।

जन्तोरपश्चिमतनोस्सति कर्मसाम्ये निश्शेषपाशपटलच्छिदुरा निमेषात् ।
कल्याणि! देशिककटाक्ष समाश्रयेण कल्याणतो भवति शम्भववेधदीक्षा ।।११।।
मुक्ताविभूषणवती नवविद्रुमाभा यच्चेतसि स्फुरसि तारकितेव सन्ध्या ।
एकस्स एव भुवनत्रयसुन्दरीणां कन्दर्पतां व्रजति पञ्चशरीं विनापि ।।१२।।
ये भावयन्त्यमृतवाहिभिरंशुजालै आप्यायमानभुवनाममृतेश्वरीं त्वाम् ।
ते लङ्घयन्ति ननु मातरलङ्घनीयां ब्रह्मादिभिस्सुरवरैरपि कालकक्षाम् ।।१३।।
यस्स्फाटिकाक्षगुणपुस्तककुण्डिकाढ्यां व्याख्यासमुद्यतकरां शरदिन्दुशुभ्राम् ।
पद्मासनां च हृदये भवतीमुपास्ते मातः! स विश्वकविताकिंकचक्रवर्ती ।।१४।।
बर्हावतंसयुतबर्बरकेंशपाशां गुञ्जावलीकृतघनस्तनहारशोभाम् ।
श्यामां प्रवालवदनां सुकुमारहस्तां त्वामेव नौभि शबरीं शबरस्य जायाम् ।।१५।।
अर्धेन किं नवलताललितेन मुग्धे क्रीतं विभोः परुषमर्धमिदं त्वयेति ।
आलीजनमस्य परिहासवचांसि मन्ये मन्दस्मितेन तव देवि! जडीभवन्ति ।।१६।।
ब्रह्माण्डबुद्बुदकदम्बक सङ्कुलोऽयं मायोदधिर्वि विधतत्त्वतरङ्गमालाः ।
आश्चर्यमम्ब! झटिति प्रलयं प्रयाति त्वध्यानसन्ततिमहावडवामुखाग्नौ ।।१७।।
दाक्षायणीति कुटिलेति कुहारिणीति कायायनीति कमलेति कलावतीति ।
एका सती भगवती परमार्थतोऽपि सदृश्यसे बहुविधा ननु नर्तकीव ।।१८।।
आनन्दलक्षणमनाहतनाम्नि देशे नादात्मना परिणतं तव रूपमीशे ।
प्रत्यङ्मुखेन मनसा परिचीयमानं शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः ।।१९।।
त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्वं त्वं चेतनासि पुरुषे पवने बलं त्वम् ।
त्वं स्वादुतासि सलिले शिखिनि त्वमूष्मा निस्सारमेव निखिलं त्वदृते यदि स्यात्।।२०।।
ज्योतींषि यद्दिवि चरन्ति यदन्तरिक्षं सूते पयांसि यदिहिर्धरणीं च धत्ते ।
यद्वाति वायुरनलो यदुदर्चिरास्ते तत्सर्वमम्ब! तव केवलमाज्ञयैव ।।२१।।
सङ्कोचमिच्छसि यदा गिरिजे! तदानीं वाक्तर्कयोस्त्ववमसि भूमिरनामरूपा ।
यद्वा विकासमुपासि यदा तदानीं त्वन्नारूपगणनास्सुकरा भवन्ति ।।२२।।
भोगाय देवि! भवतीं कृतिनः प्रणम्य भ्रूकिङ्करीकृतसरोजगृहास्सहस्रम् ।
चिन्तामणिप्रचयकल्पितकेलिशैले कल्पद्रुमोपवन एव चिरं रमन्ते ।।२३।।
हर्तुं त्वमेव भवसि त्वदधीनमीशे संसारतापमखिलं दयया पशूनाम् ।
वैकर्तनी किरणसंहतिरेव शक्ता धर्मं निजं समयितु निजयैव वृष्ट्या ।।२४।।

शक्तिश्शरीरमधिदैवतमन्तरात्मा ज्ञानं क्रिया करणमानसजालमिच्छा ।
ऐश्वर्यमायतनमावरणानि च त्वं किं तन्न यद्भवसि देवि शशाङ्कमौले: ।।२५।।
भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा विद्याऽनले मरुति शान्तिरतीव कान्ति: ।
व्योम्नीति: या: किल कला: कलयन्ति विश्वं तासां हिं दूरतरमम्ब! पदं त्वदीयम् ।।२६।।
यावत्पदं पदसरोजयुगं त्वदीयं नाङ्गीकरोति हृदयेषु जगच्छरण्ये!
तावद्विकल्पजटिला: कुटिलप्रकारा: तर्कग्रहास्समयिनां प्रलयं न यान्ति ।।२७।।
निर्देवयानपितृयानविहारमेके कृत्वा मन: करणमण्डलसार्वभौमम् ।
ध्याने निवेश्य तव कारणपञ्चकस्य पर्वाणि पार्वति! नयन्ति निजासनत्वम् ।।२८।।
स्थूलासु मूर्तिषु महीप्रमुखासु मूर्त्: कस्याश्चनापि तव वैभवमम्ब! यस्या ।
पत्या गिरामपि न शक्यत एव वक्तुं सापि स्तुता किल भयेति तितिक्षितव्यम् ।।२९।।
कालाग्निकोटिरुचिमम्ब षडध्वशुद्धो आप्लावनेषु भवतीममृतौघवृष्टिम् ।
श्यामां घनस्तनतटां शकलीकृताघां ध्यायन्त एव जगतां गुरवो भवन्ति ।।३०।।
विद्यां परां कतिचिदम्बरमम्ब! केचिद् आनन्दमेव कतिचित्कतिचिच्छि मायाम् ।
त्वां विश्वमाहुरपरे वयमामनाम: साक्षादपारकरुणां गुरुमूर्तिमेव ।।३१।।
कुवलयदलनीलं बर्बरस्निग्धकेशं पृथुतरकुचभाराक्रान्तकान्तावलग्नम् ।
किमिह बहुभिरुक्तैस्त्वत्स्वरूपं परं न: सकलजननि! मात:! सन्ततं सन्निधत्ताम् ।।३२।।

।। इत्यम्वास्तव: चतुर्थ: ।।

## १५. सकलजननी स्तोत्रम्

अजानन्तो यान्ति क्षयमवशमन्योन्यकलहै: अमी मायाग्रन्थौ तव परिलुठन्तस्समयिन: ।
जगन्मात:! जन्मज्वरभयतम: कौमुदि! वयं नमस्ते कुर्वाणाश्शरणमुपयामो भगवतीम् ।।१।।
वचस्तर्कागियस्वरसपरमानन्दविभवप्रबोधाकाराय द्युतितुलितनीलोत्पलरुचे ।
शिवाद्याराध्याय तनभरविनम्राय सततं नमस्तस्मै कस्मैचन भवतु मुग्धाय महसे ।।२।।
अनाद्यन्ताभेदप्रणयरसिकापि प्रणयिनी शिवस्यासीर्यत्त्वं परिणयविधौ देवि! गृहिणी ।
सवित्री भूतानामपि यदुदभूश्शैलतनया तदेतत्संसारप्रणयनमहानाटकमुखम् ।।३।।
ब्रुवन्त्येके तत्त्वं भगवति सदन्ये विदुरसत् परे मात:! प्राहुस्तव सदसदन्ये सुकवय: ।
परे नैतत्सर्वं समभिदंधते देवि! सुधिय: तदेतत्त्वन्मायाविलसितमशेषं ननु शिवे ।।४।।

लुठद्गुञ्जाहारस्तनभरनमन्मध्यलतिकां उदञ्चद्धर्माम्भिः कणगुणित वक्राम्बुजरुचम्[१] ।
शिवं पार्थत्राण प्रवममृगयाकारगुणितं शिवामन्वग्यान्तीं शरणमहमन्वेमि शबरीम् ।।५।।
मिथः केशाकेशिप्रथननिधनास्तर्कघनाः बहुश्रद्धाभक्ति प्रणतिविषयाश्शास्त्रविधयः ।
प्रसीद प्रत्यक्षीभव गिरिसुते! देहि शरणं निरालम्बं चेतः परिलुठति पारिप्लवमिदम् ।।६।।
शुनां वा वह्नेर्वा खगपरिषदो वा यदशनं कदा केन क्वेति क्वचिदपि न कश्चित्कलयति ।
अमुष्मिन् विश्वासं विजहिहि ममाह्लाय वपुषि प्रपद्येताश्चेतः! सकलजननीमेव शरणम् ।।७।।
तटित्कोटिज्योतिर्द्युतिदलितषड्ग्रन्थिगहनं प्रविष्टं स्वाधारं पुनरपि सुदावृष्टिवपुषा ।
किमप्यष्टाविंशत्किरणसकलीभूतमनिशं भजे धाम श्यामं कुचभरनतं बर्बरकचम् ।।८।।
चतुष्पत्रान्तष्षड्दलपुटभगान्तस्स्त्रि वलयस्फुरद्विद्युद्वह्निद्युममणिनियुताभद्युतिलते ।
षडश्रं भित्त्वाऽऽदौ दशदलमथ द्वादशदलं कलाश्रं च द्वयश्रं गतवति नमस्ते गिरिसुते ।।९।।
कुलं केचित्प्राहुर्वपुरकुलमन्ये तव बुधाः परे तत्सभेदं समभिदधते कौलमपरे ।
चतुर्णामप्येषामुपरि किमपि प्राहुरपरे महामाये! तत्त्वं तवकथमी निश्चिनुमहे ।।१०।।
षडध्वारण्यानीं प्रलयरविकोटिप्रतिरुचा रुचा भस्मीकृत्य स्वपदकमलप्रह्वशिरसाम् ।
वितन्वानश्शैवं किमपि वपुरिन्दीवररुचिः कुचाध्यामानम्रस्तव पुरुषकारो विजयते ।।११।।
प्रकाशानन्दाभ्यामविदितचरीं मध्यपदवीं प्रविश्यैतद्द्वन्द्वं रवि शशिसमाख्यं कबलयन् ।
प्रपद्योर्ध्वं नादं लयदहन भस्मीकृतकुलः प्रसादात्ते जन्तुश्शिवम् कुलमम्ब! प्रविशति ।।१२।।
मनुष्यास्तियञ्चो मरुत इति लोकत्रयमिदं भवाम्भोधौ मग्नं त्रिगुणलहरीकोटिलुठितम् ।
कटाक्षश्चेद्यत्र क्वचन तव मातः करुणया शरीरी सद्योऽयं व्रजति परमानन्दतनुताम् ।।१३।।
प्रियङ्गश्यामाङ्गीमरुणतरवास किसलयाँ समुन्मीलन्मुक्ताफल वहलनेपथ्यसुभगाम् ।
स्तनद्वन्द्वस्फारस्तबकनमितां कल्पलतिकां सकृद्ध्यायन्तस्त्वां दधति शिवचिन्तामणिपदम् ।।१४।।
षडाधारावर्तैरपरिमितमन्त्रोर्मि पटलैः लसन्मुद्राफेनैर्बहुविधचलद्दैवतझषैः ।
क्रमस्त्रोतोभिस्त्वं वहसि परनादामृतनदी भवानि! प्रत्यग्रा शिवचिदमृताब्धिप्रणयिनी ।।१५।।
महीपाथोवह्निश्वसनवियदात्मेन्दुरविभिः वपुभिर्ग्रस्ताशैरपि तव कियानम्ब! महिमा ।
अमून्यालोल्यन्ते भगवति! न कुत्राप्यणुतमां अवस्थां प्राप्तानि त्वयि तु परमव्योमवपुषि ।।१६।।
कलामाज्ञां प्रज्ञां समयमनुभूतिं समरसं गुरु पारम्पर्यं विनयमुपदेशं शिवपदम् ।
प्रमाणं निर्वाणं प्रकृतिमिभिभूतिं परगुहां विधिं विद्यामाहुस्सकलजननीमेव मुनयः ।।१७।।

---

१. नीलोत्पलरूचिम् — पा.

प्रलीने शब्दौघे तदनु विरते बिन्दुविभवे ततस्तत्त्वे चाष्टध्वनिभिरनपायिन्यधिगते ।
श्रिते शाक्ते पर्वण्यनुकलितचिन्मात्रगहनां स्वसंवित्तिं योगी रसयति शिवाख्यां भगवतीम् ।।१८।।
परानन्दाकारां निरवधिशिवैश्वर्यवपुषं निराकारं ज्ञानप्रकृतिमपरिच्छिन्नकरुणाम् ।
सवित्रीं लोकानां निरतिशयधामास्पदपदां भवो वा मोक्षो वा भवतु भवतीमेव भजताम् ।।१९।।
जगत्काये कृत्वा तदपि हृदये तच्च पुरुषे पुमांसं बिन्दुस्थं तदपि वियदाख्ये च गहने ।
तदेतद्ज्ञानाख्ये तदपि परमानन्दगहने महाव्योमाकारे त्वदनुभवशीलो विजयते ।।२०।।
विधे! विद्ये! विद्ये! विवधसमये! वेदगुलिके! विचित्रे! विश्वाद्ये! विनयसुलभे! वेदजननि!
शिवज्ञे! शूलस्थे! शिवपदवदान्ये! शिवनिधे! शिवे! मातः! मह्यं त्वयि वितर भक्तिं निरुपमाम् ।।२१।।
विधेर्मुण्डं हृत्वा यदकुरुत पात्रं करतले हरिं शूलप्रोतं यदगमयदंसाभरणताम् ।
अलंचक्रे कण्ठं यदपि गरलेनाम्ब! गिरिशः शिवस्थायाश्शक्तेस्तदिदमखितं ते विलसितम् ।।२२।।
विरिञ्चयाख्या मातः! सृजसि हरिसंज्ञा त्वमसि त्रिलोकीं रुद्राख्या हरसि विदधासीश्वरदशाम्।
भवन्ती नादाख्या विहरसि च पाशौघदलनी त्वमेवैकाऽनेका भवसि कृतिभेदैर्गिरिसुते ।।२३।।
मुनीनां चेतोभिः प्रमुदितकषायैरपि मनाक् अशक्यं संस्प्रुष्टुं चकित चकितैरम्ब! सततम् ।
श्रुतीनां सुर्धानं प्रकृतिकठिनाः कोमलतरे कथं ते विन्दन्ते पदकिसलये पार्वतिपदम् ।।२४।।
तटिद्वल्लीं नित्याममृतसरितं पाररहितां मलोत्तीर्णां ज्योत्स्नां प्रकृतिमगुणग्रन्थिगहनाम् ।
गिरां दूरां विद्यामविनतकुचां विश्वजननीं अपर्यन्तां लक्ष्मीमभिदधति सन्तो भगवतीम् ।।२५।।
शरीरं क्षित्यम्भः प्रभृतिरचितं केवलमचित् सुखं दुःखं कलयति पुमांश्चेतन इति ।
स्फुटं जानानोऽपि प्रभवति न देही रचयितुं शरीराहङ्कारं तव समयबाह्यो गिरिसुते ।।२६।।
पिता माता भ्राता सुहृदनुचरस्सद्म गृहिणी वपुः क्षेत्रं मित्रं धनमपि यदा मां विजहति
तदा मे भिन्दाना सपदि भयमोहान्धतमसं महाज्योत्स्ने! मातः! भव करुणया सन्निधिकरी।।
सुता दक्षस्यादौ किल सकलमातः! त्वमुदभूः सदोषं तं हित्त्वा तदनु गिरिराजस्य दुहिता ।
अनाद्यन्ता शम्भोरपृथगपि शक्तिर्भगवती विवाहाज्जायाऽसीत्यहह चरितं वेत्ति तव कः ।।२८।।
कणास्त्वद्दीप्तीनां रविशशिकृशानुप्रभृतयः परं ब्रह्म क्षुद्रं तव नियतमानन्दकणिका ।
शिवादि क्षित्यन्तं त्रिवलयतनोसस्सर्वमुदरे तवास्ते भक्तस्य स्फुरसि हृदि चित्रं भगवति ।।२ ।।
पुरः पश्चादर्न्तबहिरपरिमेयं परिमितं परं स्थूलं सूक्ष्मं सकलमकलं गुह्यमगुहम् ।
दवीयो नेदीयस्सदसदिति विश्वं भगवती सदा पश्यन्त्याख्यां वहसि भुवनक्षोभजननीम् ।।३०।।

प्रविश्य त्वन्मार्गं सहजदयया देशिकदृशा षडध्वध्वान्तौघच्छिदुरगणनातीतकरुणाम् ।
परामाज्ञाकारां सपदि शिवयन्तीं शिवतनुं स्वमात्मानं धन्याश्चिरमुपलभन्ते भगवतीम् ।।३१।।
मयूखाः पुष्णीव ज्वलन इव तद्दीप्तिकणिकाः पयोधौ कल्लोलाः प्रतिहतमहिम्नीव पृषतः।
उदेत्योदेत्याम्ब! त्वयि स निजैस्सात्त्विकगुणैः भजन्ते तत्त्वौघाः प्रशममनुकल्पं परवशाः ।।३२।।
विधुर्विष्णुर्ब्रह्मा प्रकृतिरणुरात्मा दिनकरः स्वभावो जैनेन्द्रस्सुगतमुनिराकाशमलिनः ।
शिवश्शक्तिश्चेति श्रुतिविषयतां तामुपगता विकल्पैरेभिस्त्वामभिदधति सन्तो भगवतीम् ।।३३।।
शिवस्त्वं शक्तिस्त्वं त्वमसि समया त्वं समयिनी त्वमामा त्वं दीक्षा त्वमयमणिमादिर्गुणगणः।
अविद्या त्वं विद्या त्वमसि निखिलं त्वं किमपरं पृथक्तत्वं त्वत्तो भगवति न वीक्षामह इमे।।३४।।
त्वयासौ जानीते रचयति भवत्यैव सततं त्वयैवेच्छत्यम्ब! त्वमसि निखिला यस्यतनवः ।
जगत्साध्यं शम्भोर्वहसि परमव्योवपुषः तथाप्यर्धं भूत्वा विहरसि शिवस्येति किमिदम् ।।३५।।
असङ्ख्यैः प्राचीनैर्जननि! जननैः कर्मविलयात् सकृज्जन्मन्यन्ते गुरुवपुषमासाद्य गिरिशम् ।
अवाप्याज्ञां शैवीं शिवतनुमपि त्वां विदितवान् नयेयम् त्वत्पूजास्तुतिविरचनेनैव दिवसान् ।।३६।।
यत् षट्पत्रं कमलमुदितं तस्य या कर्णिकाख्या योनिस्तस्याः प्रथितमुदरे यत्तदोङ्कारपीठम्।
तस्याप्यन्तः कुचभरनतां कुण्डलीति प्रसिद्धां श्यामाकारां सकलजननीं सन्ततं भावयामि।।३७।।
भुवि पयसि कृशानौ मारुते खे शशाङ्के सवितरि यजमानेऽप्यष्टधा शक्तिरेका ।
वहसि कुचभराभ्यां याऽवनम्रापि विश्वं सकलजननि! सा त्वं पाहि मामित्यवाच्यम् ।।३८।।

।। इति पञ्चस्तवी च समाप्ता सकलजननी स्तवः पञ्चमः ।।

## १६. *श्रीमन्महामुनिदुर्वासा विरचितम् श्रीत्रिपुरामहिम्नः स्तोत्रम्*

श्रीमातस्त्रिपुरे परात्परतरे देवि त्रिलोकीमहा,
सौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम् ।
उद्यद्भानुसहस्त्रनूतनजपापुष्पप्रभं ते वपुः,
स्वान्ते मे स्फुरतु त्रिलोक निलयं ज्योतिर्मयंवाङ्मयम् ।।१।।

आदिक्षांतसमस्त वर्णसुमणिप्रोते वितानप्रभे
ब्रह्मादि प्रतिमाऽभिकीलितषडाधाराब्जकक्षोन्नते ।
ब्रह्माण्डाब्ज-महासने जननि ते मूर्तिं भजे चिनमयीं
सौषुम्णायत पीत पङ्कजमहामध्यत्रिकोणस्थिताम् ।।२।।

''वन्दे वाग्भवमैन्दवात्मसदृशं वेदादिविद्यागिरो,
भाषा देशसमुद्भवाः पशुगताश्छन्दांसि सप्तस्वरान् ।
तालान्पञ्च महाध्वनीप्रन्परकट्यत्यात्मप्रसारेण यत्त
द्बीज पदवाक्यमान जनकं श्रीमातृके ते परम्'' ।।३।।

''त्रैलोक्यस्फुटमन्त्रतन्त्रमहिमां नाप्नोति शश्वद्विना
यद्बीजं व्यवहारजालमखिलं नास्तेयेव मातस्तव ।।
तज्जाप्यस्मरणप्रसक्तिसुमतिः सर्वज्ञतां प्राप्य कः
शब्दब्रह्मनिवासभूतवदनो नेन्द्रादिभिः स्पर्धते'' ।।४।।

मात्रा यात्र विराजतेऽतिविशदा तामष्टधा मातृकां,
शक्तिं कुण्डलिनीं चतुर्विधतनुं यस्तत्वविन्मन्यते ।
सोऽविद्याखिलजन्मकर्मदुरितारण्यं प्रबोधाग्निना,
भस्मीकृत्य विकल्पजालमखिलं मातःपदं तद्व्रजेत् ।।५।।

तत्ते मध्यमबोजम्ब कलयाम्यादित्यवर्ण क्रिया-
ज्ञानेच्छादिमनन्तशक्तिविभवव्यक्ति व्यनक्ति स्फुटम् ।
उत्पत्तिस्थितिकल्पकल्पिततनु स्वात्मप्रसारेण य
त्काम्यंब्रह्महरोश्वरादिविबुधैः कामंक्रियायोजितैः ।।६।।

कामान्कारणतां गतानगणितान्कार्यैरनेकैर्मही-
मुख्यैः सर्व मनोगतानधिगतान्मानैरकनेकैः स्फुटम् ।
कामक्रोधसूलोभमोहमदमात्सर्यारिषट्कं च य
द्बीजं भ्राजयति प्रणौमि तदहंते साधु कामेश्वरि ।।७।।

यद्भक्ताऽखिल काम पूरणचण स्वात्मप्रभावं महा
जाड्यध्वांत निवारणैकतरणिज्योतिः प्रबोधप्रदम् ।
यद्वेदेषु च गीयते श्रुतिमुखं मात्रात्रयेणोमिति
श्रीविद्ये तव सर्वराजवशकृत्तत्कामराज भजे ।।८।।

यत्ते देवि तृतीयबीजमनलज्वालावलीसंनिभं
सर्वाधारतुरीय बीजमपरं ब्रह्माभिधा शब्दितम् ।
मूर्धन्यान्तविसर्गभूषित महौकारात्मकं तत्परं
संविद्रूपमनन्यतुल्यमहिम स्वान्ते ममद्योतताम् ।।९।।

''सर्वः सर्वत एव सर्गसमये कार्येन्द्रियाण्यन्तरा
तत्तद्दिव्यहृषीक कर्मभिरियं संव्यश्नुवाना परा ।
वागर्थव्यवहारकारणतनुः शक्तिर्जगद्व्यापिनी
यद्बीजात्मकतांगता तव शिवे तन्नोमि बीजंपरम् ।।१०।।

अग्नीन्दुद्युमणिप्रभञ्जनधरानीराम्बरस्थायिनी
शक्तिर्ब्रह्महरीशवासवमुखामर्त्यासुरात्मस्थिता ।
सृष्टस्थावरजङ्गमस्थितमहाचैतन्य रूपा च या
यद्बीजस्मरणेन सैव भगती प्रादुर्भवत्यम्बिके ।।११।।

स्वात्मश्री विजिताजविष्णुधवश्रीपूरणैकव्रतं
यद्विद्याकविता वितानलहरी कल्लोलिनी दीपकम् ।
बीजंयत्त्रिगुणप्रवृत्तिजनकंब्रह्मेति यद्योगिनः
शान्ताः सत्यमुपासते तदिह ते चित्ते दधेश्रीपरे ।।१२।।

एकैकं तव मातृके परतरं संयोगिवाऽयोगिवा
विद्यादिप्रकटप्रभावजनकं जाड्यान्धकारापहम् ।
यन्निष्ठाश्च महोत्पलासन महाविष्णुप्रहत्रदियो
देवाः स्वेषु विधिष्वन्यमहिमस्फूर्ति दधत्येवतत् ।।१३।।

इत्थं त्रीण्यापि मूलवाग्भवमहाश्रीकामराज
स्फुरच्छक्त्याख्यानि चतुः श्रुतिप्रकटितान्युत्कृष्ट कूटानि ते ।
भूतर्तुश्रुतिसंख्यवर्णविदितान्यारक्ताकान्ते शिवे,
यो जानाति स एव सर्वजगतां सृष्टिस्थिति ध्वंसकृत् ।।१४।।

नित्यं यस्तवं कातृकाक्षरसखीं सौभाग्यविद्यां जपेत्
सम्पूज्याखिलचक्रराजनिलया सायंनाग्निप्रभाम् ।
कामाख्यं शिवनामतत्त्वमुभयं व्याप्यात्मना सर्वतो
दीव्यन्तीमिह तस्य सिद्धिरचिरात् स्यात्त्वत्स्वरूपैकता ।।१५।।

काव्योः पापठितैः किमल्पविदुषां जोघुष्यमाणैः पूनः
किं तैर्व्याकरणैर्विवोधिततया किं वाभिधानश्रिया ।
एतैरम्ब न वोभवीति सुकविस्तावत्त्व श्रीमता
धविन्नानुसरीसरीति सरणि पदाब्जयौः पावनीम् ।।१६।।

गेहं नाकति गर्वित प्रवणति स्त्री संगमो मोक्षति
द्वेषी मित्रति पातकं सुकृततिक्ष्मावल्लभो दासति ।
मृत्युर्वैद्यति दूषणं सुगुणति त्वतपादसंसेवनात्
त्वांवन्दे भवभीति भञ्जनकरीं गौरीं गिरीशप्रियां ।।१७।।

आद्यैरग्निरवीन्दु विम्बनिलयैरम्ब चिलिङ्गात्मभि-
मिश्रारक्तसितप्रभैरनुपमैर्युष्मत् पदैस्तै स्त्रिभिः ।
स्वात्मोत्पादिति काललोकनिगमावस्था मरादित्रयै
रुद्भतं त्रिपुरेति नामकलयेद्यस्ते सधन्यो बुधः ।।१८।।

आद्यो जाप्यतमार्थवाचकतया रुढः स्वरः पञ्चमः
सर्वोत्कृष्टतमार्थवाचकतया वर्णः पवगन्तिकः ।
वक्तृत्वेन महाविभूतिसरणस्त्वाधारगो हृद्गतो
भ्रूमध्यस्थित इत्यतः प्रणवता तेगीयते चागमैः ।।१९।।

गायत्री सशिरा तुरीयसहिता सन्ध्यामयीत्यागमै,
राख्यता त्रिपुरेत्वमेवमहतां शर्मप्रदा कर्मणाम् ।
तत्तद्दर्शनमुख्यशक्तिरपि चत्वं ब्रह्म कर्मेश्वरी,
कर्तार्हन्पुरुषो हरिश्च सविता बुद्धः शिवस्त्वंगुरुः ।।२०।।

अन्नाप्राणमनः प्रबोधपरमानन्दैः शिरः पक्षयु-
क्पूच्छात्म प्रकटै र्महोपनिषदां वाग्भिः प्रसिद्धीकृतैः ।
कोशैः पञ्चभिरेभिरम्ब भवतीमेतत्प्रीनामिति ज्योतिः
प्रज्वलदुज्ज्वलात्म चपला यो वेद स ब्रह्मवित् ।।२१।।

सच्चित्तत्त्वमसीतिवाक्यविदितैरध्यात्म विद्याशिव
ब्रह्माख्यैरतुल प्रभावसहितैस्तत्त्वैस्त्रिभिः सद्गुरोः ।
तद्रूपस्यमुखारविन्दविवरात् संप्राप्य दीक्षामतो
यस्त्वांविन्दति तत्त्वतस्तदहमित्त्यार्थे स मुक्तो भवेत् ।।२२।।

सिद्धान्तैर्बहुभिः प्रमाण गणितै रन्यैरविद्यातमो-
नक्षत्रैरिव सर्वमन्थतमसं तावन्न निर्भिद्यते ।
यावत्ते सवितेव संमतमिदं नोदेति विश्वान्तरे
जन्तोर्जन्म निवारणैकभिदुरं श्रीशांभवि श्रीशिवे ।।२३।।

आत्मासौ सकलेन्द्रियाश्रयमनोबुद्ध्यादिभिः शोचितः
कर्माबद्धतनुर्जनि च मरणं प्राप्नोति यत्कारणम् ।
तत्तेदेवि महाविलास लहरी दिव्यायुधानां जय-
स्तस्मात्त्वां गुरुमभ्युपेत्य कलयेत्वामेवचेन्मुच्यते ।।२४।।

नाना योनि सहस्र संभव वशाज्जाता जनन्यः कति
प्रख्याता जनकाः कियन्त इति मे सेत्स्यन्ति चाग्रेकति ।
एतेषां गणनैव नास्ति महतः संसार सिन्धोर्विधे-
र्भीतं मां नितरामनन्य शरणं रक्षानुकम्पानिधे ।।२५।।

देहशोभकरैर्व्रतैर्बहुविधैर्दानैश्च होमैर्जपैः
संतानैर्हयमेध मुख्य सुमुखैर्नानाविधै कर्मभिः ।
यत्संसकल्प विकल्प भावमलिनं ख्यातं पदं तस्यते
दूरादेव विवर्तते परतरं मातः पदं निर्मलम् ।।२६।।

पञ्चाशन्निज देहजाक्षर भवैर्नाना विधैर्धातुभि-
र्बह्वर्थैः पद वाक्य मानजनकैरर्था विनाभावितैः ।
साभिप्राय वदर्थ कर्म फलदैः ख्यातै रनन्तैरिदं
विश्वं व्याप्य चिदात्मनाहमह मित्युज्जृम्भसे मातृके ।।२७।।

श्रीचक्रं श्रुतिमूलकोश इति ते संसारचक्रात्मकं
विख्यातं तदधिष्ठिताक्षरशिवज्योतिर्भयं सर्वतः ।
एतन्मन्त्रमयात्मिकाभिररुणं श्रीसुन्दरीभिर्वृतं
मध्ये वैन्दवसिंह पीठललिते त्वंब्रह्मविद्या शिवे ।।२८।।

विन्दुप्राणविसर्गजीव सहितं बिन्दुत्रिबीजात्मकं
षट्कूटानि विपर्ययेण निगदेत्तारत्रिबालावलैः ।
एभिः संपुटितं प्रजप्य विरहेत्प्रासादमन्त्रं परं
गुह्याद्गुह्यतमं सयोगजनितं सद्भोगमोक्षप्नदम् ।।२९।।

आताम्राऽर्कसहस्त्रदीप्तिपरमा सौन्दर्यसारैरलं
लोमातीत महोदयैरुपयुता सर्वोपमागोचरैः ।
नानाऽनर्घ्यविभूषणै रगणितैर्जाज्वल्यमानाभितः
श्रीमातस्त्रिपुरारिसुन्दरि कुरु स्वान्ते निवास मम ।।३०।।

शिञ्जन्नूपुर पाद कङ्कण महामुद्रा सुलाक्षारसा-
लंकाराङ्कितमङ्घि पङ्कजयुगं श्रीपादुकालंकृतम् ।
उद्भास्वन्नखचन्द्रखण्ड रुचिरं राजज्जपासन्निभं-
ब्रह्मादि त्रिदशा सुरार्चितमहं मूर्ध्नि स्मराम्यम्बिके ।।३१।।

आरक्तच्छविनातिमार्दवयुजा निश्वासहार्येण सत्-
कौशयेन । विचित्ररत्नखचितैर्मुक्ताफलैरुज्ज्वलैः ।
कूजत्काञ्चनकिङ्किणीभिरभितः सन्नद्धकाञ्चीगुणै
रादीप्तं सुनितम्बबिम्बमरुणं ते पूजयाम्यम्बिके ।।३२।।

कस्तूरीधनसारकुंकुमरजोगन्धोत्कटैश्चन्दनै-
रालिप्तं मणिमालयातिरुचिरं ग्रैवेयहारादि भिः ।
दीप्तंदिव्यविभूषणैरगणितैर्ज्योतिर्विभास्वत्कुच-
व्याजस्वर्णघटद्वयं हरिहरब्रह्मादिपीतंभजे ।।३३।।

मुक्तारत्नविचित्रकान्तिललितैस्तेबाहुबल्लीरहं
केयूराङ्गदबाहुदण्डवलयैर्हस्ताङ्गुली भूषणैः ।
संपृक्ताः कलयामि हीरमणिमन्मुक्तावली कीलित-
ग्रीवापट्ट विभिूषणेन सुभगं कण्ठं च कम्बुश्रियम् ।।३४।।

उद्यत्पूर्णकलानिधिश्रिवदनं भक्तप्रसन्न सदा
संफुल्लाम्बुज पत्र कान्ति सुषमाधिक्कार दक्षेक्षणम् ।
सानन्दं कृतमंदहासमकृत् प्रादुर्भवत्कौतुकं
कुन्दाकार सुदन्तपङ्क्ति शशिभापूर्णं स्मराम्यम्बिके ।।३५।।

तप्तस्वर्णकृतोरुकुण्डलयुगंमाणिक्यमुक्तोल्लस
द्धीरावद्धमनन्यतुल्यमपरं हैमंच चक्रद्वयम् ।
शुक्रऽऽकारनिकारदक्षममलं मुक्ताफलं सुन्दरम्
विभ्रत् कर्णयुगं भजामि ललितं नासाग्रभागं शिवे ।।३६।।

जातीचम्पक कुन्दकेसररजो गन्धोत्किरत्केतकी-
नीपाशोकशिरीषमुख्यकुसुमैः प्रोत्संसितधूपिता ।
आनीलाञ्जन तुल्यमत्तमधुपश्रेणीव वेणीतव
श्री मातः श्रयतां मदीय हृदयाम्भोजं सरोजालये ।।३७।

लेखालभ्यविचित्ररत्नखचितं हैमं किरोटोत्तमं
मुक्ताकाञ्चन किंकिणीगण महाहीरप्रबोधोज्ज्वलम् ।
चञ्चच्चन्दकलाकलापललितं देवद्रूपुष्पार्चितम्
माल्यैरम्ब विलम्बितं सुशिखरं ब्रिभ्रच्छिरस्ते भजे ।।३८।।

श्रृङ्गारादि रसालयं त्रिभुवनैर्माल्यैरतुल्यैर्युतं
सर्वाङ्गीण सदङ्गरागसुरभि श्रीमद्वपुर्धूपितम् ।
ताम्बूलारुणपल्लवाधरयुतं रम्यं त्रिपुण्ड्रं दध-
द्धालंनन्दनचन्दनेन जननि ध्यायामिते मङ्गलम् ।।३९।।

एवं यः स्मरति प्रबुद्ध सुमतिः श्रीमत्स्वरूपं परं,
वृद्धोप्याशु युवा भवत्यनुपमः स्त्रीणामनङ्गायते ।
सोऽष्टैश्वर्यतिरस्कृताखिलसुरः श्रीजृम्भितात्मालयः,
पृथ्वीपाल किरीटकोटिवलभि पुष्पार्चिताङ्घ्रिर्भवेत् ।।४०।।

अथतवधनुःपुण्ड्रेक्षुकृत् प्रसिद्धमतिद्युति
त्रिभुवन वधूमुद्यज्जयोत्स्नाकलानिधि मण्डलम् ।
सकल जननि स्मारंस्मारं गतः स्मरतां नर
स्त्रिभुवन वधूमोहाम्भोधेः प्रपूर्ण विधुर्भवेत् ।।४१।।

प्रसूनशरपञ्चकप्रकटजृम्भणागुम्फितं
त्रिलोकमवलोकयत्यमलचेतसाचिन्तयन् ।
अशेष रमणी जन स्मर विजृम्भणे यः सदा
पटुर्भवथि ते शिवे त्रिजगदङ्गनाक्षोभणे ।।४२।।

पाशं प्रशरति महासुमति प्रकाशो
योवा तव त्रिपुर सुन्दरि सुन्दरीणाम् ।
आकर्षणेऽखिलवशीकरणे प्रवीणं
चित्ते दधाति स जगत्त्रयवश्यकृत् स्यात् ।।४३।।

यः स्वान्ते कलयति कोविदत्रिलोकस्तम्भरम्भण
चणमत्युदारवीर्यम् ।
मातस्ते विजयमहांकुशं सयोषान्
देवान् स्तम्भयति च भूभुजोऽन्य सैन्यम् ।।४४।।

चापध्यनवशाद्भवोद्भवमहामोहस्य व्युज्जृम्भणम्
प्रख्यातं प्रसवेषुचिन्तनवशात्तत्च्छख्यं सुधीः ।
पाशध्यान वशात्समस्तजगतां मृत्योर्वशत्व महा-
दुर्गस्तम्भमहाङ्कशस्य मननान्माया ममेयां तरेत् ।।४५।।

न्यासं कृत्वा गणेशग्रहभगण महायोगिनी राशिपीठेः
पञ्चाशन्मातकर्णैः सहित बहुकलै रष्टवाग्देवताभिः ।
पश्री कण्ठादि युग्मैर्निजविमलतनौ केशवाद्यैश्च तत्वैः
षट्त्रिंशाद्भिर्धराद्यैर्भगवतिभवतीयः स्मरेतस् त्वमेव ।।४६।।

*मालिनी छन्द*

सुरपतिपुरलक्ष्मीजृम्भणातीत लक्ष्मीः
प्रसरति निजगेहे यस्य दैवं त्वमार्ये ।
विविधबहुकलानां पात्रभूतस्य तस्य
त्रिभुवनविदिता सा जृम्भते स्फूर्तिरच्छा ।।४७।।

मातस्त्वं भूर्भुवः स्वर्महरसि सुतनुस्त्वन्तरिक्षेन्दुसूर्ये
रात्मा शुक्रामरेन्द्रैरपिनिगममहाब्रह्मभिः प्रोतशक्तिः ।
प्राणापानादियुक्तैः कलयति सकलं मानसं ध्यान योगं
येषां तेषां सपर्या भवति सुरकृता ब्रह्मता योगिनां च ।।४८।।

क्कमे बुद्धिर्वाचा परमविदुषो मन्दसरणिः
क्कते मातर्ब्रह्म प्रमुखबिवुधस्याप्तवचसाम् ।
अभून्मे विस्फूर्तिः परतरमहिम्नस्तव नुतिः
प्रसिद्धं क्षन्तव्यं बहुलत रचापल्यमितिमे ।।४९।।

प्रसीदपर देवते मम हृदि प्रभूतं भयं
विदारय दारिद्रितां दलय देहि सर्वज्ञताम् ।
विधेहि करुणानिधे चरणपद्मयुग्मं स्वयं
विदारितजरामृति त्रिपुरसुन्दरि श्री शिवे ।।५०।।

इति त्रिपुरसुन्दरीस्तुतिमिमां पठेद्यसुधीः
स सर्वदुरिताटवीपटलचण्डदावानलः ।
भवेन्मनसि वाञ्छितं प्रचुरसिद्धि ऋद्धिर्भवे-
दनेकविधसम्पदां पदमनन्यतुल्यो भवेत् ।।५१।।

सङ्गीत सरसं विचित्रकवितामाम्नायवांक्यस्मृति
व्याख्यानं हृदि तावकीचरणद्वन्द्वं चसर्वज्ञताम् ।
श्रद्धां कर्मणि शाम्भवेति विपुलं श्रीजृम्भणं मन्दिरे
सौन्दर्यं वपुषि प्रदेहि जगताम्बेश्वरि श्री शिवे ।।५२।।

पृथ्वीपाल-प्रकटमुकुटस्त्रग्रजो रञ्जिताङ्घ्रि
विद्वत्पूजास्तुतिशतसमाराधितो बाधितारिः ।
विद्याः सर्वाः कलयति हृदा व्याकरोति प्रवाचा
लोकाश्चर्यैर्नवनपदैरिन्दुबिम्बप्रकाशैः ।।५३।।

भूष्यं वैदुष्यमुद्यद्दिनकरकिरणाकारमाकारतेजः
सुज्ञानं भूरिमार्ग निगमनिगमनं दुर्गमं योगमार्गम् ।
आयुष्यं ब्रह्मपोष्यं हरगिरिविशदां कीर्तिमभ्येत्यभूमौ,
देहान्ते ब्रह्मापारं परतरचरणाकारमभ्येतिविद्वान् ।।५४।।

*वसन्त तिलका छन्द*

दुर्वाससाविदिततत्त्वमुनीश्वरेण विद्याकला युवतिमन्मथ मूर्तिनैतत् ।
स्तोत्रं व्यधायि रुचिरं त्रुपुराम्बिकाया वेदागमोक्त पटलैर्विदितैकमूर्ति ।।५५।।

सदसदनुग्रह निग्रह गृहीत मुनि विग्रहो भगवान् ।
सर्वासामुपनिषदां दुर्वासा जयति देशिकः प्रथमः ।।५६।।

।। इति श्रीमहासुनिदुर्वासा विरचितं श्रीत्रिपुरा महिम्न स्तोत्रं समाप्तम् ।।

## १७. बृहत्कर्पूरं

सपूज्य शुक्लारुणचक्रचारिणीम्। मूलादिविन्द्वान्तर्गतां विभावयन् ।
स्थितिस्वरूपां हृदयारविन्दगा मीडेसपाशांकुशवाणचापिनीम् ।।१।।

कपरं पूररेफैर्विरहितममलं योनियुक्तं महेशी
कारोपेतं ललज्जायुतमपि वरदे देवि वाक्कूटमाहुः ।।
एतन्नित्यं जपन्ति स्मरहरमहिले तर्ककाव्याऽऽगमज्ञा
स्तान्मुञ्चत्यब्जहस्ता कथमपि न च ते साधक सम्भवंति ।। २।।

ईशानः सोममारौ गिरिशशतमखौ भौवने शाख्यबीजमित्थं
ते कामकूटं प्रजपति सुजनो वारमेकं कदाचित् ।।
पार्श्वे नृत्यंति कामाकुलित-मृगदृशाः प्राणदाः साधकस्य।
नित्यं निर्वाणविद्या विलसति हृदयाम्भोजमध्ये च तस्य ।।३।।

सोमः कामेन्द्रलज्जायुतमिदनिशं शक्तिकूटं तृतीयम् ।
प्रातर्यश्चन्द्रचूडां विकसितवदनाम्भोज-संशोभितान्त्वाम् ।।
ध्यायन् राजाधिराजेश्वरि जपति जनः शान्तचित्तः प्रकामम्।
स स्यात्त्रैलोक्यनाथः सुरमुनिदनुजैः सेव्यमानो महात्मा ।।४।।

सर्वं वागादिकूटत्रयमपि ललितेदिष्यकौला-वतंसम् ।
कौलज्ञानैकगम्यां धृतकुसुमधनुर्वाणपाशां-कुशान्त्वाम् ।।
त्रैलोक्याकर्षकः स्याद्यदि जपति सदा भावयन् रक्तवर्णाम् ।
प्रातः स्वान्तोपचारैरतुलितविभवेऽभ्यर्च्य मूलाम्बुजस्थाम् ।।५।।

जपत्वा लक्षत्रयन्ते मनुमनलमुखे तद्दशांसं विधाय ।
कुर्य्याद्यश्चक्रपूजां सुरगणनमिते श्रीयुतः स्यात्स एव ।।
पृथ्वीपालोत्तमाङ्गास्रुतमणिमुकुट-ज्वालनी राजितांघ्रिर्वाचालः
काव्यकर्त्ताऽमरपुर-गणिकाचित्तचौरश्चिरायुः ।।६।।

वाक्कूटं कामकूटं तदनु तव शिवे शक्तिकटं नियोज्य ।
श्रीयुक्तं मन्त्रमेतज्जपति परशिवां षोडशीं षोडशार्णाम् ।।
ध्यायेत्पाशांकुशान्त्वामभयवरकरां सोमसूर्याग्निनेत्राम् ।
रक्तां चन्द्रावतंशां स भवति सकलैश्वर्ययुक्तः कुलज्ञः ।।७।।

तारं मायां सपद्मांतदनुनिगदितं देवि कूटत्रयञ्च
श्रीमायाकामवाणीस्मरहरदयिते शक्तियुक्तैस्तदेतैः ।।
इत्युक्तैः पञ्चबीजैः कृतपुटितमहाबीजषट्कं विधाय
श्रीविद्ये बीजरूपं भवति तव मनुं श्रीयुतं मोक्ष-दञ्च ।।८।।

मातः श्रीमन्त्रराजं स्मरति यदि जनो वारमेकं जितात्मा।
कामेशाङ्कस्थितां त्वामरुणितवसनां सुस्मिताम्बुजस्थाम् ।।
खं व्योमाकाशचन्द्रप्रमितदल युतांभोजमध्ये विभाव्य ।
सर्वैः पापैर्विमुक्तस्तदवधि चरितैः पुण्यरूपः स एव ।।९।।

तारान्ते वाक्त्रपान्ते स्मरमपि कमलान्तेऽपि तच्छक्तिकूटम् ।
पूर्वोक्तैः पञ्चबीजैः कृतपुटित महामन्त्रराजं तवेदम् ।।
ध्यायन् विद्याक्षपाशांकुशकरकमलां गौरवर्णी त्रिनेत्राम् ।
सर्वज्ञः स्याज्जपेद्यः कुलपथविधिना श्रीमहाषोडशीन्त्वाम् ।।१०।।

शक्त्याख्यं चैव कामं प्रथमनिगिदितं कूटमब्जा सनाढ्याम्।
मायावेदादियुक्तं पुटितमपि सदा पञ्चबीजैः पुरोक्तैः।।
ध्यायन् नीलाम्बरान्त्वां शशि सकलधरां पानपात्रां त्रिनेत्राम्।
त्रैलोक्यं क्षोभयेद्यः प्रजपति विधिना दीक्षितः कौलिकेन्द्रः।।११।

मातः श्रीमन्त्रमेतत्त्रितयमपि सदा दिव्यभावा-नुरक्तो ।
दीक्षां सम्प्राप्य यत्नाज्जपति निजगुरुप्रोक्त-मार्गेण कश्चित् ।।
जीवन्मुक्तः स एव त्रिभुवनविजयी सर्ववेदागमज्ञः ।
साक्षान्नरायणस्य प्रतिनिधिरचिरात्त्वत्पदं प्राप्नुयाद्यः ।।१२।।

प्रातः श्रीचक्रसंस्थाममममहिलाभियतः साधकेन्द्रः ।
शुक्लैर्वोक्तोपचारैः क्रमपथनिहितैर्मन्त्रवर्यैः समर्च्य ।।
साङ्गां साम्नायविद्यामकुलकुलगतां षोडशाधारमूलाम् ।
ध्यायन्यो वर्णलक्षं जपति शिवसमः स्यान्महाषोडशीन्त्वाम् ।।१३।।

त्रिवृत्तं भूगेहे रसविधुदलान्तर्वसुदलं
ततो मन्वस्त्रान्तः सुललितदशारद्वयमपि ।।
तदन्तः सर्पारं जननि कुलबालार्कसदृशम्
त्रिकोणं तन्मध्ये विमलतरविन्दुर्भगवति ।।१४।।

तवेदं श्रीचक्रं जगदखिलमात्मा त्वमिति च
शरीरं तच्छैवं चिदपि परमे शाक्तममलम् ।।
गुरोर्ज्ञात्वा सर्वं विलिखति सदा भावनपर स्त्रिलक्षं
सिन्दूरैः स भवति नरेन्द्रः क्षितितले ।।१५।।

सुधाक्तैः सिन्दूरैरपि कुलरजोभिः सुरुचिरम्
विलिख्य श्रीचक्रं प्रणमति च सन्तर्पयति यः ।।
निशायां प्रालेयाचलकुलमहोत्तंशकलिके भवेच्छक्त्या
युक्तः सकल जगतामेव वशकृत् ।।१६।।

गुरुप्रोक्तैर्मार्गैः परशिवमुकाम्भोजमुदिते स्वदेहे
श्रीचक्रं सततमपि सञ्चिन्तयति यः ।।
स योगीशो वाग्मी वरनिकरचूडामणिरपि
प्रवालप्राले य प्रभजति सुगुप्तं प्रभवन्ति ।।१७।।

तदस्मिञ्छ्रीपीठाश्रितरुचिरसिंहासनगताम्
महापञ्चप्रेतैः सुरनिकरकौलैश्च सहिताम् ।।
समुक्तामाणिक्यैरसुरविवुधालभ्य मणिभिः
कृताङ्गालङ्कारां जितमदनरूपां त्रिनयनाम् ।।१८।।

नवीनादित्याभां धृतशशिकलां मुक्तचिकुराम्
शरांश्चापं पाशं श्रृणिमपि धृतां हस्तकमलैः ।।
महाकामेशाङ्के कृतनिवसतीं रक्तवदनां स्मितिं
कामं दृष्ट्वा स्मितमुखसरोजां परशिवां ।।१९।।

जनो यो ध्यायेत्त्वामकुलकुलमार्गक्रमयुतः
समर्चायां नित्यं भुवनभयभङ्गव्यसनिनि ।।
मयूखाभिस्ताभिः प्रकटवदनाभिश्च सहिताम्
चतुःपीठासीनां त्रिदशगणवन्द्यः स भवति ।।२०।।

शिवे त्वं संक्षोभिण्यसि जननि विद्रावणकरी ।
परे सर्वाकर्षिण्यसि सुललिते सर्ववशिनी ।।
अजे सर्वोन्मादिन्यसि भगवति त्वं त्रिनयने ।
त्वमेका कल्याणीश्वरि कुलमहेश्यंकुशधरी ।।२१।।

भवाधारे खेचर्यसि जननि बीजा त्वमसि च ।
महायोनिस्त्वं वै निखिलभुवनानामपि सदा ।।
त्रिखण्डारूपा त्वं जगदघहरे कौलसुखदे ।
करेमुद्रारूपाव्रजसि यदि कस्यापि स शिवः ।।२२।।

समाराध्यां देवीं सकलकुलमुद्राक्रमयुतां ।
विभाव्य त्वां नित्यं परमशिवपर्यङ्कनिलये ।।
गुरुक्तैस्तद्बीजैः सहरचितमुद्रास्तव मुदे ।
पुरस्ते जायन्ते मदनहरतुल्याः सुरनुताः ।।२३।।

उमा त्वं काली त्व त्वमसि भुवना दुर्गतिहरे ।
परागुह्या तारा स्मरहरसतीचन्द्रवदने ।।
महाकुब्जा बाला त्रिपुरललिता त्वञ्च विमले ।
रमा वाणी सर्व्वावरणजननी त्वं भगवति ।।२४।।

कलाभिर्नित्याभिस्तिथिपरिमिताभिः परिवृताम् ।
समभ्यर्चच्छ्रीमद्गुरुकुलमपि प्रोक्तविधिना ।।
स्मरद्यस्त्वामङ्गाश्रितयुवति षड्भिः स्मितमुखि ।
स सर्वार्थावाप्तः प्रमुदितमना स्यादिह सदा ।।२५।।

धरित्रि चक्रस्थां स्फटिकदृशदच्छच्छविमयीम् ।
त्रिनेत्रामम्भोजद्वयधृतकरां पुस्तकधराम् ।।
तथाक्षस्त्रग्धस्तां प्रकटजननीभिः परिवृतां ।
स चार्वाकांरम्यां निखिलभवसम्मोहनकराम् ।।२६।।

त्रिवृत्तस्थां रक्तां कठिनकुचभारां त्रिनयनाम् ।
विचित्रालङ्कारामभययुतविद्याक्षवरदाम् ।
महाक्षैः संयुक्तां सविजितमनस्काञ्च युवतीम् सदा
त्रैवर्गाणां फलमपि सकृत् साधनकराम् ।।२७।।

कलापत्राब्जस्थां हिमिगिरिनिभां शुभ्रवसनाम्
महागुप्ताख्याभिः करकलितपाशामभियुताम् ।
त्रिनेत्रां पाणिभ्यामभयवरदामंकुशकराम् स
बौद्धां सर्वेषामभिलिषितदानाश्वासनिनीम् ।।२८।।

जपापुष्पारक्तामभयवरविद्याक्षविलसत्
कराम्भोजामष्टच्छदकमलसंस्थां त्रिनयनाम्
सजैनां देवीं गुप्ततरसकलाभिः परिवृताम
सुधासक्तां शान्तां पशुजनमहाक्षोभनकराम् ।।२९।।

सदा शक्रारस्थामरुणवसनां संपदयुत
प्रदायाख्याभिस्ताभिरखिलसुसौभाग्यजननीम्
त्रिनेत्रां विद्याक्षाभयवरकराब्जैरपि युताम्
ससांख्यां स्वच्छंदां स्मितमुखसरोजाञ्चसुभगाम् ।।३०।।

सहस्रार्काभासामखिलकुलकौलादिसहिताम्
त्रिनेत्रां विद्याक्षाभयवरकरां रक्तवसनाम्
बहिः कैकारस्थां निखिलनिगमैः संयुतपदाम् ।
सतां सर्वार्थानामपि सुतरसा साधनकरीम् ।।३१।।

दशारस्तथामन्तः सकलसुरसंरक्षणकरीम् ।
प्रवालारक्ताभां त्रिनयनयुक्तां साभयवराम् ।।
सपाशां शृण्याढ्यां सुरुधिरिकपालं जपवटीम् ।
धृतां सौरोपेतामभिनुतनिगर्भादिसहिताम् ।।३२।।

शशाङ्काभां शुभ्राभरणवसनां सस्मितमुखीम् ।
त्रिनेत्रां तां पाशाङ्कशयुतकपालाभयकराम ।।
रहस्याभिर्युक्तां निखिलभवरोगक्षयकरीम् ।
सदाष्टारे संस्थां सुमदमुदितां वैष्णवयुताम् ।।३३।।

महाचक्रे कोणाश्रितभुवनकूटादिसहिते ।
स्थितां माणिक्याभामभयवरदां पुस्तकधराम् ।।
तथा सालङ्कारां स्फटिकगुटिकामण्डितकराम् ।
त्रिनेत्रां मुण्डाढ्यामपि कुसुममालाञ्च दधतीम् ।।३४।।

स्मितास्यमारक्तामरुणवसनां मन्दहसिताम् ।
निशानाथोत्तंसामभयवरविद्याक्षसहिताम् ।
त्रिनेत्रां पञ्चाशत्परिमितमहामुण्डरचिताम् ।
दधानां तां मालां गलितिचिकुरां रत्नखचिताम् ।।३५।।

क्रमात् त्वां नित्यं यः स्मरति दशचक्रेषु परमे ।
पुनस्तत्तन्मन्त्रैः सहकुलगुरुप्रोक्तविधिना ।।
स वित्ते वित्तेशः सुरगुरुसमः शास्त्रकुशलो ।
भवेत् त्रैलोक्याधीश्वरि तव दयापाङ्गविषयः ।।३६।।

प्रतिहारान् मातस्तव चरणविद्याञ्च ललिते ।
प्रपञ्चाख्यां विद्यां तदनु दशदिक्पालनिवहाम् ।।
ततस्तेषां शस्त्राण्यपि कुलपथाभ्यर्च्य मुदितः ।
कहानन्ताराध्ये व्रजति परमधाममनुजः ।।३७।।

रसैकास्यामम्बां धृतशशिकलां मुक्तचिकुराम् ।
त्रिनेत्रामापीनोन्नतकुचयुगां रक्तवसनाम् ।।
हरिब्रह्मेशानाजिनमभिधानां करशतैरथाष्टोपेतैर्वा
सुरनिकरयुक्तैरपि युताम् ।।३८।।

महापञ्चप्रेतोपरि रुचिरसिंहासनमथो
परीशस्तन्नाभ्युद्भवममलरक्ताभकमलम् ।
श्मशानं तन्मध्ये वृषभविगतानन्दपुरुषोरसिस्थां
यो ध्यायेज्जननि स हि मोक्षञ्च लभते ।।३९।।

स्मरेन्निर्वाणाख्यं तव चरणसम्पूजनविधौ
षडाम्नायोपेतां व्रजगतममुं पञ्चवदनम् ।
कराम्भोजैः पद्मानि च दश दधानाञ्च
दशभिर्महाविद्यायुक्तं किमपि कुलकल्पं विदधतम् ।।४०।।

जपेद्यस्त्वमन्त्रं जननि सकलाम्नायजनकम्
सदा सर्वाचारैरपि यजनशीलः प्रमुदितः
स वाग्मारश्रीसम्पुटितदशकूटात्मकमथ
श्रुतिश्रीशाकिन्यादिकमिति सुगुह्यद्वयमपि ।।४१।।

स जीवनमुक्तः स्यादिह जननि निर्वाणसुखदे ।
पयोधिः सिद्धिर्नाममरदितिजैर्वन्दितपदः ।।
बहूक्तैः किं पञ्चाननदशशतास्याद्यविदितो
महिम्ना संयुक्तो मदनमहिलामोहनकरः ।।४२।।

जनो यो हालाभिर्जननि तव सम्पूज्य चरणौ ।
करे पात्रं धृत्वा भगवति कुलज्ञाननिरतः ।।
सहस्रारे ध्यात्वा परशिवगुरुं शक्तिसहितम् ।
पिवेद्वामोच्छिष्टंस हि भवति शम्भोःप्रतिनिधिः ।।४३।।

कुलागारं पश्यन्नतिदृढमना यस्तव मनुं ।
जपेल्लक्षं रात्रौ रहसि च मदामोदमुदितः ।।
तथा श्रीदूतीं तां गजदशनपर्यङ्कनिलयाम् ।
यजेद्यस्त्वद्रूपां स भवति हरिर्मन्मथकले ।।४४।।

स्मरागारे कुर्वन् निजकरसरोजं त्रिनयने ।
त्रिलक्षं त्वन्मन्त्रं भगवति सदा घोरविधिना ।।
महापीठे मातस्तव दशशतार्णं शुभमनुम् ।
जपेद्यः कौलेन्द्रः स हि भुवनसौख्यञ्चलभते ।।४५।।

शिवे लक्षं मन्त्रं जपति विपरीतो यदि नरः ।
स एव श्रीमातः सकलभुवनानामधिपतिः ।।
शवारूढः कौलः पितृवनगतः श्रीक्रमयुतस्त्रिकूटाख्यां
विद्यामपि जपति स स्यात्कुलपतिः ।।४६।।

नरं मेषं छागं महिषमपि मार्जारमथवा ।
शुभं मत्स्यं हंसं हरिहरनुते कुक्कुटमपि ।।
वलिं ते पूजायां वितरति यदा कौलिकजन
स्तदा क्रोधादीनामपि रिपुगणानां प्रहरणम् ।।४७।।

महामूलाधारोपरि रसदलं यद्रविनिभम् ।
ततो दिग्पत्राख्यं ललितमणिपूरं तदुपरि ।।
हृदम्भोजं मातस्तदुपरि विशुद्धाख्यमपरम् ।
ततस्त्वां वैध्यायन् द्विदलयतपद्मोपरिगताम् ।।४८।।

हठाभ्यां संयोगाद्विलसति सुषुम्णाख्यरमणि ।
तथा सार्द्धं पीत्वाऽमरमुनि मनोभ्यर्थितसुधाम् ।।
परां दीपाकारां निखिलभुवनाधारजननीम् ।
स्मरन्तस्त्वां मातर्भुवननमिताः कौलमुनयः ।।४९।।

त्वदीयं श्रीस्तोत्रं भगवति महामन्त्रसदनम् ।
तथा ते ध्यानाङ्गावरणनवमुद्रादिसहितम् ।।
महाचक्रोद्धारैयतमिदमहो साधकवरः ।
पठेद्यः पूजान्ते भुवि भवतिस श्रीप्रियतरः ।।५०।।

।।इति श्री श्रीविद्या वृहत्कपूरस्तोत्रम्।।

## १८. श्रीललिता अष्टोत्तरशतनाम

सौभाग्याष्टोत्तरशतं ऋषिर्भार्गव ईरितः । छन्दोऽनुष्टमप् देवता च ललिताम्बा प्रकीर्तिता।।१।।
कूटत्रयद्विरावृत्या न्यासं कृत्वा ततः परम् । ध्यात्वा सम्पूज्य मनसा स्तोत्रमेतदुदीरयेत्।।२।।
ॐ कामेश्वरी कामशक्तिः कामसौभाग्यदायिनी । कामरूपा कामकला कामिनी कमलासना।।३।।
कमला कल्पनाहीना कमनीयकलावती । कमला-भारती-सेव्या कल्पिताऽशेषसंसृतिः।।४।।
अनुत्तराऽनघाऽनन्ताऽद्भुतरूपाऽनलोद्भवा । अतिलोकचरित्राऽतिसुन्दर्यतिशुभप्रदा ।।५।।
अघहन्त्र्यतिविस्ताराऽर्चनतुष्टाऽमितप्रभा ।
एकरूपैकवीरैकनाथैकान्तार्चनप्रिया । एकैकभावतुष्टैकरसैकान्तजनप्रिया ।।६।।
एधमानप्रभा चैतत् भक्तपातकनाशिनी । एलामोदलसन्मुख्येनोद्रिशक्तायुधस्थिता।।७।।
ईहाशून्येप्सितेशादिसेव्येशानवराङ्गना । ईश्वरज्ञापिकेकारभावीप्सितफलप्रदा ।।८।।
ईशानेतिहरक्षेषदचारुणाक्षीश्वरेश्वरी । ललिता ललनारूपा लयहीना लसत्तनुः ।।९।।
लयसर्वा लयक्षोणी र्लयकर्त्रीलयात्मिका । लघिमा लघुमध्याढ्या ललमाना लघुद्रुता।।१०।।
हयारूढा हतामित्रा हरकान्ता हरिस्तुता । हयग्रीवेष्टदा हालाप्रिया हर्षसमुद्धता।।११।।
हषणा हल्लकाभांगी हस्त्यन्तैश्वर्यदायिनी । हलहस्तार्चितपदा हविर्दानप्रसादिनी।।१२।।
रामा रामार्चिता राज्ञी रम्या रवमयी रतिः । रक्षिणी रमणी राका रमणीमण्डलप्रिया।।१३।।
रक्षिताऽखिललोकेशी रक्षोगणनिषूदिनी । अम्बाऽन्तकारिण्यभोजप्रियान्तकभयङ्करी।।१४।।
अम्बुरूपाऽम्बुजकराऽबुजजातवरप्रदा । अन्तःपूजाप्रियान्तःस्थरूपिण्यन्तर्वचोमयी।।१५।।
अन्तकारातिवामाङ्कस्थिताऽन्तःसुखरूपिणी । सर्वज्ञा सर्वगा सारासमा समसुखा सती।।१६।।
सन्ततिः सन्तता सोमा सर्वा सांख्या सनातनी । एतत्ते कथितं देवि नाम्नामष्टोत्तरं शतम्।
अतिगोप्यमिदं यत्नान्नाम्नामष्टोत्तरं शतम् ।।१७।।

।।अष्टोत्तरनाम समाप्त।।

## १९. श्रीललिता-त्रिशती स्तोत्रम्

हयग्रीव उवाच—

तदहं संप्रवक्ष्यामि ललिताम्बानुशासनात् । श्रीमत्पञ्चदशाक्षर्याः कादिवर्णान् क्रमान्मुने ।।
पृथग्विंशतिनामानि कथितानि घटोद्भव । आहत्य नाम्नां त्रिशिती सर्वसंपूर्तिकारिणी ।।
रहस्यातिरहस्यैषा गोपनीया प्रत्नतः । तां शृणुष्व महाभाग सावधानेन चेतसा ।।

**केवलं नामबुद्धिस्ते न कार्या तेषु कुम्भज । मन्त्रात्मकत्वमेतेषां नाम्नां नामात्मताऽपि च ।।**
**तस्मादेकाग्रमनसा श्रोतव्यं च त्वया सदा ।**
सूत उपाच—
**इत्युक्त्वा तं हयग्रीवः प्रोचे नाम शतत्रयम् ।।**
हयग्रीव उवाच कुम्भज (अगस्त्य) ऋषिं प्रति—

**ककाररूपा कल्याणी कल्याणगुणशालिनी । कल्याणशैलनिलया कमनीया कलावती ।।**
**कमलाक्षी कल्मषघ्नी करुणामृतसागरा । कदंबकाननावासा कदंबकुसुमप्रिया ।।**
**कंदर्पविद्या कंदर्पजनकापांगवीक्षणा । कर्पूरवीटीसौरभ्यकल्लोलितककुप्तटा ।।**
**कलिदोषहरा कंजलोचना कम्रविग्रहा । कर्मादिसाक्षिणी कारयित्री कर्मफलप्रदा ।।**
**एकाररूपा एकाक्षर्यैकानेकाक्षराकृतिः । एतत्तदित्यनिर्देश्या एकानन्दचिदाकृतिः ।।**
**एवमित्यागमाबोध्या एकभक्तिमदर्चिता । एकाग्रचित्तनिर्ध्याता एषणारहितादृता ।।**
**एलासुगंधिचिकुरा एनः कूटविनाशनी । एकभोगा एकरसा एकैश्वर्यप्रदायिनी ।।**
**एकातपत्रसाम्राज्यप्रदा एकान्तपूजिता । एधमानप्रभा एजदनेकजगदीश्वरी ।।**
**एकवीरादिसंसेव्या एकप्राभवशालिनी । ईकाररूपिणी शित्री ईप्सितार्थप्रदायिनी ।।**
**ईदृगित्यविनिर्देश्या ईश्वरत्वविधायिनी । ईशानादिब्रह्ममयी ईशित्वाद्यष्टसिद्धिदा ।।**
**ईक्षित्री क्षणसृष्टांडकोटिरीश्वरवल्लभा । ईडिता ईश्वरार्धांगशरीरेशाधिदेवता ।।**
**ईश्वरप्रेरणकरी ईशतांडवसाक्षिणी । ईश्वरोत्संगनिलया ईतिबाधाधिनाशिनी ।।**
**ईहाविरिहिता ईशशक्तिरीषत्स्मितानना । लकाररूपा ललिता लक्ष्मीवाणीनिषेविता ।।**
**लाकिनी ललनारूपा लसद्दाडिमपाटला । ललान्तिका लसत्फाला ललाटनयंनार्चिता ।।**
**लक्षणोज्ज्वलदिव्यांगी लक्षकोट्यंडनायिका । लक्ष्यार्था लक्षणागम्या लब्धकामा लतातनुः ।।**
**ललामराजदलिका लम्बिमुक्तालतांचिता । लंबोदरप्रसूर्लभ्या लज्जाढ्या लयवर्जिता ।।**
**ह्रींकारूपा ह्रींकारनिलया ह्रींपदप्रिया । ह्रांकारबीजा ह्रींकारमंत्रा ह्रींकारलक्षणा ।।**
**ह्रींकारजपसुप्रीता ह्रींमती ह्रींविभूषणा । ह्रींशीला ह्रींपदाराध्या ह्रींगर्भा ह्रींपदाभिधा ।।**
**ह्रींकारवाच्या ह्रींकारपूज्या ह्रींकारपीठिका । ह्रींकारवेद्या ह्रींकारचिंत्ा ह्रीं ह्रींशरीरिणी ।।**
**हकाररूपा हलधृक्पूजिता हरिणेक्षणा । हरप्रिया हराराध्या हरिब्रह्मेंद्रवंदिता ।।**
**हयारूढा सेवितांघ्रिर्हयमेधसमर्चिता । हर्यक्षवाहना हंसवाहना हतदानवा ।।**
**हत्यादिपापशमनी हरिदश्वादिसेविता । हस्तिकुम्भोन्नतकुचा हस्तिकृत्तिप्रियाङ्गना ।।**

हरिद्राकुंकुमादिग्धा हर्यश्वाद्यमरार्चिता । हरिकेशसखी हादिविद्या हालामदालसा ।।
सकाररूपा सर्वज्ञा सर्वेशी सर्वमङ्गला । सर्वकर्त्री सर्वभर्त्री सर्वहन्त्री सनातनी ।।
सर्वानवद्या सर्वाङ्गसुन्दरी सर्वसाक्षिणी । सर्वात्मिका सर्वसौख्यदात्री सर्वविनोहिनी ।।
सर्वाधारा सर्वगता सर्वावगुणवर्जिता । सर्वारुणा सर्वमाता सर्वभूषणभूषिता ।।
ककारार्था कालहन्त्री कामेशी कामितार्थदा । कामसञ्जीवनी कल्या कठिनस्तनमण्डला ।।
करभोरूः कलानाथमुखी कचजिताम्बुदा । कटाक्षस्यान्दिकरुणा कपालिप्राणनायिका ।।
कारुण्यविग्रहा कान्ता कान्तिधूतंजपावलिः । कलालापा कम्बुकण्ठी करनिर्जितपल्लवा ।।
कल्पवल्लीसमभुजा कस्तूरीतिलिकाञ्चिता । हकारार्था हंसगतिर्हाटकाभरणोज्ज्वला ।।
हारहारिकुचाभोगा हाकिनी हल्यवर्जिता । हरित्यतिसमाराध्या हठात्कारहतासुरा ।।
हर्षप्रदा हविर्भोक्त्री हार्दसन्तमसापहा । हल्लीसंलास्यसन्तुष्टा हंसमन्त्रार्थरूपिणी ।।
हानोपादाननिर्मुक्ता हर्षिणी हरिसोदरी । हाहाहूहूमुखस्तुत्या हानिवृद्धिविवर्जिता ।।
हय्यङ्गवीनहृदया हरिगोपारुणांशुका । लकाराख्या लतापूज्या लयस्थित्युद्भवेश्वरी ।।
लास्यदर्शनसन्तुष्टा लाभालाभविवर्जिता । लंघ्येतराज्ञा लावण्यशालिनी लघुसिद्धिदा ।।
लाक्षारससवर्णाभा लक्ष्मणाग्रजपूजिता । लभ्येतरा लब्धभक्तिसुलभा लाङ्गलायुधा ।।
लग्नचामरहस्तश्रीशारदापरिवीजिता । लज्जापदसमाराध्या लम्पटा लकुलेश्वरी ।।
लब्धमाना लब्धरसा लब्धसम्पत्समुन्नतिः । ह्रींकारिणी ह्रींकाराद्या ह्रींमध्या ह्रींशिखामणिः ।।
ह्रींकारकुण्डाग्निशिखा ह्रींकारशशिचन्द्रिका । ह्रींकारभास्कररुचि ह्रींकाराम्भोदचञ्चला ।।
ह्रींकारकन्दांकुरिका ह्रींकारैकपरायणा । ह्रींकारदीर्घिकाहंसी ह्रींकारोद्यानकेकिनी ।।
ह्रींकारारण्यहरिणी ह्रींकारावालवल्लरी । ह्रांकारपञ्जरशुकी ह्रींकाराङ्गणदीपिका ।।
ह्रींकारकन्दरासिंही ह्रींकाराम्भोजभृङ्गिका । ह्रोंकारसुमनोमाध्वी ह्रींकारतरुमञ्जरी ।।
सकाराख्या समरसा सकलागमसंस्तुता । सर्ववेदान्ततात्पर्यभूमिः सदसदाश्रया ।।
सकला सच्चिदानन्दा साध्वी सद्गतिदायिनी । सनकादिमुनिध्येया सदाशिवकुटुम्बिनी ।।
सकलाधिष्ठानरूपा सत्यरूपा समाकृतिः । सर्वप्रपञ्चनिर्मात्री समानाधिकवर्जिता ।।
सर्वोत्तुङ्गा सङ्गहीना सद्गुणा सकलेष्टदा । ककारिणी काव्यलोला कामेश्वरमनोहरा ।।
कामेश्वर प्राणनाडी कामेशोत्सङ्गवासिनी । कामेश्वरालिङ्गिताङ्गी कामेश्वरसुखप्रदा ।।
कामेश्वरप्रणयिनी कामेश्वरविलासिनी । कामेश्वरतपःसिद्धिः कामेश्वरमनःप्रिया ।।
कामेश्वरप्राणनाथा कामेश्वरविमोहिनी । कामेश्वरब्रह्मविद्या कामेश्वरगृहेश्वरी ।।

कामेश्वराह्लादकरी कामेश्वरमहेश्वरी । कामेश्वरी कामकोटिनिलया कांक्षितार्थदा ।।
लकारिणी लब्धरूपा लब्धधीर्लब्धवाञ्छिता । लब्धपापमनोदूरा लब्धाहङ्कारदुर्गमा ।।
लब्धशक्तिर्लब्धदेहा लब्धैश्वर्यसमुन्नतिः । लब्धवृद्धिर्लब्धलीला लब्धयौवनशालिनी ।।
लब्धातिशियसर्वाङ्गसौन्दर्या लब्धविभ्रमा । लब्धरागा लब्धपतिर्लब्धनानागमस्थितिः ।।
लब्धभोगा लब्धसुखा लब्धहर्षाभिपूरिता । ह्रींकारमूर्ति ह्रींकारसौधशृङ्गकपोतिका ।।
ह्रींकारदुग्धाब्धिसुधा ह्रींकारकमलेन्दिरा । ह्रींकारमणिदीपार्चि ह्रांकारतरुशारिका ।।
ह्रींकारपेटकमणि ह्रींकारादर्शबिम्बिता । ह्रोंकारकोशासिलता ह्रींकारास्थाननर्तकी ।।
ह्रींकारशुक्तिकामुक्तामणिर्ह्रींङ्कारबोधिता । ह्रोंकारमयसौवर्णस्तम्भविद्रमपुत्रिका ।।
ह्रींकारवेदोपनिषद् ह्रींकाराध्वरदक्षिणा । ह्रींकारनन्दनारामनवकल्पकवल्लरी ।।
ह्रींकारहिमवद्गङ्गा ह्रींकारार्णवकौस्तुभा । ह्रींकारमन्त्रसर्वस्वा ह्रींकारपरसौख्यदाश्रीं ह्रीं ऐं ।।

## फलश्रुतिः

इत्येवं ने मयाख्यातं देव्या नामशतत्रयम् । रहस्यातिरहस्यत्वाद्गोपनीयं त्वया मुने।।१।।
शिववर्णानि नामानि श्रीदेव्या कथितानि हि । शक्त्यक्षराणि नामानि कामेशकथितानि च।।२।।
उभयाक्षरनामानि ह्युभाभ्यां कथितानि वै । तदन्यैर्ग्रथितं स्तोत्रमेतस्य सदृशं किमु।।३।।
नानेन सदृशं स्तोत्रं श्रीदेवीप्रीतिदायकम् । लोकत्रयेऽपि कल्याणं संभवेन्नात्र संशयः।।४।।
इति हयमुखगीतं स्तोत्रराजं निशम्य प्रगलितकलुषोऽभूच्चित्तपर्याप्तिमेत्य।
निजिगुरुमथ नत्वा कुम्भजन्मा तदुक्तं पुनरधिकरहस्यं ज्ञातुमेवं जगाद।।५।।
अगस्त्य उवाच—
अश्वानन महाभाग रहस्यमपि मे वद । शिववर्णानि कान्यत्र शक्तिवर्णानि कानि हि।।६।।
उभयोरपि वर्णानि कानि वा वद देशिक । इति पृष्टः कुम्भजेन हयग्रीवोऽवदत्पुनः।।७।।
तव गोप्यं किमस्तीह साक्षादम्बानुशासनात् । इदं त्वतिरहस्यं ते वक्ष्यामि शृणु कुम्भज।।८।।
एतद्विज्ञानमात्रेण श्रीविद्या सिद्धिदा भवेत् । कत्रयं हद्वयं चैव भागः प्रकीर्तितः।।९।।
शकत्यक्षराणि शेषाणि ह्रींकार उभयात्मकः । एवं विभागमज्ञात्वा ये विद्याजपशालिनः।।१०।।
न तेषां सिद्धिदा विद्या कल्पकोटिशतैरपि । चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः।।११।।
नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः । त्रिकोणमष्टकोणं च दशकोणद्वयं तथा।।१२।।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च । बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम्।।१३।।

चतुरश्रं च चत्वारि शिवचक्राण्यनुक्रमात् । त्रिकोणे बैन्दवं श्लिष्टं अष्टारेऽष्टदलाम्बुजम्।।१४।।
दशारयोः षोडशारं भूगृहं भुवनाश्रके । शैवानामपि शाक्तानां चक्राणां च परस्परम्।।१५।।
अविनाभावसंबन्धं यो जानाति स चक्रवित् । त्रिकोणरूपिणी शक्तिर्बिन्दुरूपपरः शिवः।।१६।।
अविनाभावसंबन्धं तस्माद्बिन्दुत्रिकोणयोः । एवं विभागमज्ञात्वा श्रीचक्रं यः समर्चयेत्।।१७।।
न तत्फलमवाप्नोति ललिताम्बा न तुष्यति । ये च जानन्ति लोकेऽस्मिन्श्रीविद्याचक्रवेदिनः।।१८।।
सामान्यवेदिनः सर्वे विशेषज्ञोऽतिदुर्लभः । स्वयंविद्याविशेषज्ञो विशेषज्ञं समर्चयेत्।।१९।।
तस्मै देयं ततो ग्राह्यमशक्तस्तस्य दापयेत् । अन्धंतमः प्रविशन्ति येऽविद्यां समुपासते।।२०।।
इति श्रुतिरपाहैतानविद्योपासकान्पुनः । विद्यान्योपासकानेव निन्दत्यारुणिकी श्रुतिः।।२१।।
अश्रुता सश्रुतासश्च यज्वानो येऽप्ययज्वनः । स्वर्यन्तो नापेक्षन्ते इन्द्रमग्निं च ये विदुः।।२२।।
सिकता इव संयन्ति रश्मिभिः समुदीरिताः । अस्माल्लोकादमुष्माच्चेत्याह चारण्यकश्रुतिः।।२३।।
यस्य नो पश्चिमं जन्म यदि वा शंकरः स्वयम्। तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी।।२४।।
इति मन्त्रेषु बहुधा विद्याया महिमोच्यते । मोक्षैकहेतुविद्या तु श्रीविद्या नात्र संशयः।।२५।।
न शिल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते । मोक्षैकहेतुविद्या सा श्रीविद्यैव न संशयः।।२६।।
तस्माद्विद्याविदेवात्र विद्वान्विद्वानितीर्यते । स्वयं विद्याविदे दद्यात्ख्यापयेत्तद्गुणान्सुधीः।।२७।।
स्वयंविद्यारहस्यज्ञो विद्यामाहात्म्यवेद्यपि । विद्याविदं नार्चयेच्चेत्को वा तं पूजयेज्जनः।।२८।।
प्रसङ्गादिदमुक्तं ते प्रकृतं शृणु कुम्भज । यः कीर्तयेत्सकृद्भक्त्या दिव्यनामशतत्रयम्।।२९।।
तस्य पुण्यमहं वक्ष्ये शृणु त्वं कुम्भसंभव । रहस्यनामसाहस्रपाठे यत्फलमीरितम्।।३०।।
तत्फलं कोटिगुणितमेकनामजपाद्भवेत् । कामेश्वरीकामेशाभ्यां कृतं नामशतत्रयम्।।३१।।
नान्येन तुलयेदेतत्स्तोत्रेणान्यकृतेन च । श्रियः परंम्परा यस्य भावि वा चोत्तरोत्तरम्।।३२।।
तेनैव लभ्यते चैतत्पश्चाच्छ्रेयः परीक्षयेत् । अस्या नाम्नां त्रिशत्यास्तु महिमा केन वर्ण्यते।।३३।।
या स्वयं शिवियोर्वक्रपद्माभ्यां परिनिःसृता । नित्यं षोडशसंख्याकान्विप्रानादौ तु भोजयेत्।।३४।।
अभ्यक्तांस्तिलतैलेन स्नातानुष्णेन वारिणा । अभ्यर्च्य गन्धपुष्पाद्यैः कामेश्वर्यादिनामभिः।।३५।।
सूपापूपैः शर्कराद्यैः पायसैः फलसंयुतैः । विद्याविदो विशिषेण भोजयेत्षोडश द्विजान्।।३६।।
एवं नित्यार्चनं कुर्यादादौ ब्राह्मणभोजनम्। त्रिशतीनामभिः पश्चाद्ब्राह्मणान्क्रमशोऽर्चयेत्।।३७।।
तैलाभ्यङ्गादिकं दत्वा विभवे सति भक्तितः। शुक्लप्रतिपिदारभ्य पौर्णमास्यवधि क्रमात्।।३८।।
दिवसे दिवसे विप्रा भोज्या विंशतिसंख्यया। दशभिः पञ्चभिर्वापि त्रिभिरेकेन वा दिनैः।।३९।।
त्रिंशत्षष्टिःशतं विप्राः संभोज्यास्त्रिशतं क्रमात्। एवं यः कुरुते भक्त्या जन्ममध्ये सकृन्नरः।।४०।।

तस्यैव सफलं जन्म मुक्तिस्तस्य करे स्थिरा । रहस्यनामसाहस्रभोजनेऽप्येवमेव हि।।४१।।
आदौ नित्यवलिं कुर्यात्पश्चाद्ब्राह्मणभोजनम् । रहस्यनामसाहस्रमहिमा यो मयोदितः।।४२।।
सशीकराणुरत्रैकनाम्नो महिमवारिधेः । वाग्देवीरचिते नामसाहस्रे यद्यदीरितम्।।४३।।
तत्फलं कोटिगुणितं नाम्नोऽप्येकस्य कीर्तनात्। एतदन्यैर्जपैः स्तोत्रैरर्चनैर्यत्फलं भवेत्।।४४।।
तत्फलं कोटिगुणितं भवेन्नामशतत्रयात् । वाग्देवीरचितास्तोत्रे तादृशो महिमा यदि।।४५।।
साक्षात्कामेशकामेशीकृतेऽस्मिन्गृह्यतामिति । सकृत्संकीर्तनादेव नाम्नामस्मिन्शतत्रये।।४६।।
भवेच्चित्तस्य पर्याप्तिर्न्यूनमन्यानपेक्षिणी । न ज्ञातव्यमितोऽप्यन्यत्र जप्तव्यं च कुम्भज।।४७।।
यद्यत्साध्यतमं कार्य तत्तदर्थमिदं जपेत् । तत्तत्फलमवाप्नोति पश्चात्कार्यं परीक्षयेत्।।४८।।
ये ये प्रयोगास्तन्त्रेषु तैस्तैर्यत्साध्यते फलम् । तत्सर्वं सिध्यति क्षिप्रं नामत्रिशतकीर्तनात्।।४९।।
आयुष्करं पुष्टिकरं पुत्रदं वश्यकारकम् । विद्याप्रदं कीर्तिकरं सुकवित्वप्रदायकम्।।५०।।
सर्वसंपत्प्रदं सर्वभोगदं सर्वसौख्यदम् । सर्वाभीष्टप्रदं चैव देव्या नामशतत्रयम्।।५१।।
एतज्जपपरो भूयान्नान्यदिच्छेत्कदाचन । एतत्कीर्तनसंतुष्टा श्रीदेवी ललिताम्बिका।।५२।।
भक्तस्य यद्यदिष्टं स्यात्तत्तत्पूरयते ध्रुवम् । तस्मात्कुम्भोद्भव मुने कीर्तय त्वमिदं सदा।।५३।।
नापरं किंचिदपि ते बोद्धव्यं नावशिष्यते । इति ते कथितं स्तोत्रं ललिताप्रीतिदायकम्।।५४।।
नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन । न शठाय न दुष्टाय नाविश्वासाय कर्हिचित्।।५५।।
यो ब्रूयात्त्रिशतीं नाम्नां तस्यानर्थो महान्भवेत् । इत्याज्ञा शांकरी प्रोक्ता तस्माद्गोप्यमिदं त्वया।।५६।।
ललिताप्रेरितेनैव मयोक्तं स्तोत्रमुत्तमम् । रहस्यनामसाहस्रादपि गोप्यमिदं मुने।।५७।।
एवमुक्त्वा हयग्रीवः कुम्भजं तापसोत्तमम् । स्तोत्रेणानेन ललितां स्तुत्वा त्रिपुरसुन्दरीम्।।५८।।
आनन्दलहरीमग्नमानसः समवर्तत।।४९।।

।।इति श्रीललितात्रिशतीस्तोत्रं संपूर्णम्।।

## २०. श्रीललितासहस्रनामस्तोत्रम्

### विनियोग

अस्य श्रीललितातासहस्रनामस्तोत्रमालामन्त्रस्य वशिन्यादिवाग्देवताऋषयः अनुष्टुपछन्दः श्रीललितामहात्रिपुरसुन्दरी देवता वाग्भवकूटबीजं शक्तिकूट शक्तिः कामराज कीलकं श्रीललितामहात्रिपुरसुन्दरीप्रसादसिद्ध्यर्थे जपे विनियोगः।

## न्यास

वशिन्यादिवाग्देवताऋषिभ्यो नमः शिरसि। अनुष्टुपछन्दसे नमः मुखे। श्रीललितामहात्रिपुरसुन्दरी देवतायै नमः हृदये। क-४ बीजाय नमः नाभौ। स-३ शक्तये नमः गुह्ये। ह-५ कीलकाय नमः पादयोः। श्रीललितामहात्रिपुरसुन्दरीप्रसाद-सिध्यर्थे जपे विनियोगाय नमः सर्वाङ्गे। कूटत्रयं द्विरावृत्य करषडङ्गं कुर्यात्।

## ध्यान

सिन्दूरारुणविग्रहां त्रियनां माणिक्यमौलिस्फुरत्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम्।।
पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं। सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्परामम्बिकाम्।।
इति ध्यात्वा मानसैः सम्पूज्य योनिमुद्रया प्रणमेत्।

श्री हयग्रीव उवाच—

## *सहस्रनाम*

श्रीमाता श्रीमहाराज्ञी श्रीमत्सिंहासनेश्वी । चिदग्निकुण्डसम्भूता देवकार्यसमुद्यता ।।
उद्यद्भनुसहस्राभा चतुर्बाहुसमन्विता । रागस्वरूपपाशाढ्या क्रोधाकारांकुशोज्ज्वला ।।
मनोरूपेक्षुकोदण्डा पञ्चतन्मात्रसायका । निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डला ।।
चम्पकाशोकपुन्नागसौगन्धिकलसत्कचा । कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डिता ।।
अष्टमीचन्द्रविभ्राजदलिकस्थलशोभिता । मुखचन्द्रकलङ्काभमृगनाभिविशेषका ।।
वदनस्मरमाङ्गल्यगृहतोरणचिल्लिका । वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचना ।।
नवचम्पकपुष्पाभनासादण्डविराजिता । ताराकान्तितिरस्कारिनासाभरणभासुरा ।।
कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहरा । ताटङ्कयुगलीभूततपनोडुपमण्डला ।।
पद्मरागशिलादर्शपरिभाविकपोलभूः । नवविद्रुमविम्बश्रीन्यक्कारिदशनच्छदा ।।
शुद्धविद्यांकुराकारद्विजपंक्तिद्वयोज्जवला । कर्पूरवीटिकामोदसमाकर्षिदिगन्तरा ।।
निजसंल्लापमाधुर्यविनिर्भर्त्सितकच्छपी । मन्दस्मितप्रभापूरमज्जत्कामेशमानसा ।।
अनाकलितसादृश्यचिबुकश्रीविराजिता । कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरा ।।
कनकाङ्गदकेयूरकमनीयभुजान्विता । रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्विता ।।
कामेश्वरप्रेमरत्नमणिप्रतिपणस्तनि । नाभ्यालवालरोमालिलताफलकुचद्वयी ।।
लक्ष्यरोमलताधारतासमुन्नेयमध्यमा । स्तनभारदलन्मध्यपट्टबन्धवलित्रया ।।

अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतटी । रत्नकिङ्किणिका रम्यरशनादामभूषिता ।।
कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्विता । माणिक्यमुकुटाकारजानुद्वयविराजिता ।।
इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिका । गूढगुल्फा कूर्मपृष्ठजयिष्णुप्रपदान्विता ।।
नखदीधितिसंछिन्ननमज्जनतमोगुणा । पदद्वयप्रभाजालपराकृतसरोरुहा ।।
शिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बुजा । मरालीमन्दगमन महालावण्यशेवधिः ।।
सर्वारुणाऽनवद्याङ्गी सर्वाभरणभूषिता । शिवकामेश्वराङ्कस्था शिवा स्वाधीनवल्लभा ।।
सुमेरुशृङ्गमध्यस्था श्रीमन्नगरनायिका । चिन्तामणिगृहान्तसथा पञ्चब्रह्मासनस्थिता ।।
महापद्माटवीसंस्था कदम्बवनवासिनी । सुधासागरमध्यस्था कामाक्षी कामदायिनी ।।
देवर्षिगणसंघातस्तूयमानात्मवैभवा । भण्डासुरवधोद्युक्तशक्तिसेनासमन्विता ।।
सम्पत्करी समारूढसिन्धुरव्रजसेविता । अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृता ।।
चक्रराजरथारूढसर्वायुधपरिष्कृता । गेयचक्ररथारूढमन्त्रिणीपरिसेविता ।।
किरिचक्ररथारूढदण्डनाथापुरस्कृता । ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगा ।।
भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षिता । नित्यापराक्रमाटोपनिरीक्षणसमुत्सुका ।।
भण्डपुत्रवधोद्युक्तबालाविक्रिमनन्दिंता । मन्त्रिण्यम्बाविरचितविषङ्गवधतोषिता ।।
विशुक्रप्राणहरणवाराहीवीर्यनन्दिता । कामेश्वरमुखालोककल्पितश्रीगणेश्वरी ।।
महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षिता । भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिणी ।।
करांगुलिनखोत्पन्ननारायणदशाकृतिः । महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिका ।।
कामेश्वरास्त्रनिर्दग्धसभण्डासुरसैनिका । ब्रह्मोपेन्द्रमहेन्द्रादिदिवसंस्तुतवैभवा ।।
हरनेत्राग्निसन्दग्धकामसञ्जीवनौषधिः । श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजा ।।
कण्ठाधःकटिपर्यन्तमध्यकूटस्वरूपिणी । शक्तिकूटैकतापन्नकट्यधोभागधारिणी ।।
मूलमन्त्रात्मिका मूलकूटत्रयकलेवरा । कुलामृतैकरसिका कुलसङ्केतपालिनी ।।
कुलाङ्गना कुलान्तस्था कौलिनी कुलयोगिनी। अकुलासमयान्तःस्था समयाचारतत्परा ।।
मूलाधारैकनिलया ब्रह्मग्रन्थिविभेदिनी । मणिपूरान्तरुदिता विष्णुग्रन्थिविभेदिनी ।।
आज्ञाचक्रान्तरालस्था रुद्रग्रन्थिविभेदिनी। सहस्त्राराम्बुजारूढा सुधासाराभिवर्षिणी ।।
तडिल्लतासमरुचिः षट्चक्रोपरिसंस्थिता। महाशक्तिः कुण्डलिनी बिसतन्तुतनीयसी ।।
भवानी भावनागम्या भवारण्यकुठारिका । भद्रप्रिया भद्रमूर्तिर्भक्तसौभाग्यदायिनी ।।
भक्तिप्रिया भक्तिगम्या भक्तिवश्या भयापहा। शाम्भवी शारदाराध्या शर्वाणी शर्मदायिनी।।

शाङ्करी श्रीकरी साध्वी शरच्चन्द्रनिभानना । शातोदरी शान्तिमती निराधारा निरञ्जना ।।
निर्लेपा निर्मला नित्या निराकारा निराकुला । निर्गुणा निष्कला शान्ता निष्कामा निरुपप्लवा।।
नित्यमुक्ता निर्विकारा निष्प्रपञ्चा निराश्रया । नित्यशुद्धा नित्यबुद्धा निरवद्या निरन्तरा।।
निष्कारणा निष्कलङ्का निरुपाधिर्निरीश्वरी । नीरागा रागमथना निर्मदा मदनाशिनी ।।
निश्चिन्ता निरहङ्कारा निर्मोहा मोहनाशिनी । निर्ममा ममताहन्त्री निष्पापा पापनाशिनी ।।
निष्क्रोधा क्रोधशमनी निर्लोभा लोभनाशिनी । निःसंशया संशयघ्नी निर्भवा भवनाशिनी ।।
निर्विकल्पा निराबाधा निर्भेदा भेदनाशिनी । निर्नाशा मृत्युमथिनी निष्क्रिया निष्परिग्रहा ।।
निस्तूला नीलचिकुरा निरपाया निरत्यया । दुर्लभा दुर्गमा दुर्गा दुःखन्त्री सुखप्रदा ।।
दुष्टदूरा दुराचारशमनी दोषवर्जिता । सर्वज्ञा सान्द्रकरुणा समानाधिकवर्जिता ।।
सर्वशक्तिमयी सर्वमङ्गला सद्गतिप्रदा । सर्वेश्वरी सर्वमयी सर्वमन्त्रस्वरूपिणी ।।
सर्वयन्त्रात्मिका सर्वतन्त्ररूपा मनोन्मनी । माहेश्वरी महादेवी महालक्ष्मीर्मृडप्रिया ।।
महारूपा महापूज्या महापातकनाशिनी । महामाया महासत्वा महाशक्तिर्महारतिः ।।
महाभोगा महैश्वर्या महावीर्या महाबला । महाबुद्धिर्महासिद्धिर्महायोगेश्वरेश्वरी ।।
महातन्त्रा महामन्त्रा महायन्त्रा महासना । महायागक्रमाराध्या महाभैरवपूजिता ।।
महेश्वरमहाकल्पमहाताण्डवसाक्षिणी । महाकामेशमहिषी महात्रिपुरसुन्दरी ।।
चतुःष्ट्युपचाराढ्या चतुःषष्टिकलामयी । महाचतुःषष्टिकोटियोगिनीगणसेविता ।।
मनुविद्या चन्द्रविद्या चन्द्रमण्डलमध्यगा । चारुरूपा चारुहासा चारुचन्द्रकलाधरा ।।
चराचरजगन्नाथा चक्रराजनिकेतना । पार्वती पद्मनयना पद्मरागसमप्रभा ।।
पञ्चप्रेतासनासीना पञ्चब्रह्मस्वरूपिणी । चिन्मयी परमानन्दा विज्ञानघनरूपिणी ।।
ध्यानध्यातृध्येयरूपा धर्माधर्मविवर्जिता । विश्वरूपा जागरिणी स्वपन्ती तैजसात्मिका ।।
सुप्ता प्राज्ञात्मिका तुर्या सर्वावस्थाविर्जिता । सृष्टिकर्त्री ब्रह्मरूपा गोप्त्री गोविन्दरूपिणी ।।
संहारिणी रुद्ररूपा तिरोधानकरीश्वरी । सदाशिवानुग्रहदा पञ्चकृत्यपरायणा ।।
भानुमण्डलमध्यस्था भैरवी भगमालिनी । पद्मासना भगवती पद्मनाभसहोदरी ।।
उन्मेषनिमिषोत्पन्नविपन्नभुवनावली । सहस्रशीर्षवदना सहस्राक्षी सहस्रपात् ।।
आब्रह्मकीटजननी वर्णाश्रमविधायिनी । निजाज्ञारूपनिगमा पुण्यापुण्यफलप्रदा ।।
श्रुतिसीमन्तसिन्दूरीकृतपादाब्जधूलिका । सकलागमसन्दोहशुक्तिसम्पुटमौक्तिका ।।
पुरुषार्थप्रदा पूर्णा भोगिनी भुवनेश्वरी । अम्बिकाऽनादिनिधना हरिब्रह्मेन्द्रसेविता ।।
नारायणी नादरूपा नामरूपविवर्जिता । ह्रींकारी ह्रीमती हृद्या हेयोपादेयवर्जिता ।।

राजराजार्चिता राज्ञी रम्या राजीवलोचना । रञ्जनी रमणी रस्या रणत्किङ्किणिमेखला ।।
रमा राकन्दुवदना रतिरूपा रतिप्रिया । रक्षाकरी राक्षसघ्नी रामा रमणलम्पटा ।।
काम्या कामकलारूपा कदम्बकुसुमप्रिया । कल्याणी जगतीकन्दा करुणारससागरा ।।
कलावती कलालापा कान्ता कदाम्बरीप्रिया । वरदा वामनयना वारुणीमदविह्वला ।।
विश्वाधिका वेदवेद्या विन्ध्याचलनिवासिनी । विधात्री वेदजननी विष्णुमायाविलासिनी ।।
क्षेत्रस्वरूपा क्षेत्रेशी क्षेत्रक्षेत्रज्ञपालिनी । क्षयवृद्धिविनिर्मुक्ता क्षेत्रपालसमर्चिता ।।
विजया विमला वन्द्या वन्दारुजनवत्सला । वाग्वादिनी वामकेशी वह्निमण्डलवासिनी ।।
भक्तिमत्कल्पलतिका पशुपाशविमोचिनी । संहृताशेषपाखण्डा सदाचारप्रवर्तिका ।।
तापत्रयाग्निसन्तप्तसमाह्लादनचन्द्रिका । तरुणी तापसाराध्या तनुमध्या तमोपहा ।।
चितिस्तत्पदलक्ष्यार्था चिदेकरसरूपिणी । स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः ।।
परा प्रत्यकचितीरूपा पश्यन्ती परदेवता । मध्यमा वैखरीरूपा भक्तमानसहंसिका ।।
कामेश्वरप्राणनाडी कृतज्ञा कामपूजिता । शृङ्गाररससम्पूर्णा जया जालन्धरस्थिता ।।
ओड्याणपीठनिलया बिन्दुमण्डलवासिनी । रहोयागक्रमाराध्या रहस्तर्पणतर्पिता ।।
सद्यःप्रसादिनी विश्वसाक्षिणी साक्षिवर्जिता । षडङ्गदेवतायुक्ता षाड्गुण्यपरिपूरिता ।।
नित्यक्लीन्ना निरुपमा निर्वाणसुखदायिनी । नित्याषोडशिकारूपा श्रीकण्ठार्धशरीरिणी ।।
प्रभावती प्रभारूपा प्रसिद्धा परमेश्वरी । मूलप्रकृतिरव्यक्ता व्यक्ताव्यक्तस्वरूपिणी ।।
व्यापिनी विविधाकारा विद्याविद्यास्वरूपिणी । महाकामेशनयनकुमुदाह्लादकौमुदी ।।
भक्तहार्दतमोभेदभानुमद्भानुसन्ततिः । शिवदूती शिवाराध्या शिवमूर्तिः शिवङ्करी ।।
शिवप्रिया शिवपरा शिष्टेष्टा शिष्टपूजिता । अप्रमेया स्वप्रकाशा मनोवाचामगोचरा ।।
चिच्छक्तिश्चेतनारूपा जडशक्तिर्जडात्मिका । गायत्री व्याहृतिः सन्ध्या द्विजवृन्दनिषेविता ।।
तत्त्वासना तत्त्वमयी पञ्चकोशान्तरस्थिता । निःसीममहिमा नित्ययौवना मदशालिनी ।।
मदाघूर्णितरक्ताक्षी मदपाटलगण्डभूः । चन्दनद्रवदिग्धाङ्गी चाम्पेयकुसुमप्रिया ।।
कुशला कोमलाकारा कुरुकुल्ला कुलेश्वरी । कुलकुण्डालया कौलमार्गतत्परसेविता ।।
कुमारगणनाथाम्बातुष्टिः पुष्टिर्मतिर्धृतिः । शान्तिः स्वस्तिमती कान्तिर्नन्दिनी विघ्ननाशिनी।।
तेजोवती त्रिनयनां लोलाक्षी कामरूपिणी । मालिनी हंसिनी मता मलयाचलवासिनी ।।
सुमुखी नलिनी सुभ्रूः शोभना सुरनायिका । कालकण्ठी कान्तिमती क्षोभिणी सूक्ष्मरूपिणी।।
वज्रेश्वरी वामदेवी वयोऽवस्थाविवर्जिता । सिद्धेश्वरी सिद्धविद्या सिद्धमाता-यशस्विनी।।
विशुद्धिचक्रनिलयाऽऽरक्तवर्णा त्रिलोचना । खट्वाङ्गादिप्रहरणा वदनैकसमन्विता ।।

पायसान्नप्रिया त्वक्स्था पशुलोकभयङ्करी । अमृतादिमहाशक्ति सम्वृता डाकिनीश्वरी ।।
अनाहताब्जनिलया श्यामाभा वदनद्वया । दंष्ट्रोज्ज्वलाऽक्षमालादिधरा रुधिरसंस्थिता ।।
कालरात्र्यादिशक्त्योघवृता स्निग्धौदनप्रिया । महावीरेन्द्रवरदा राकिण्यम्बास्वरूपिणी ।।
मणिपूराब्जनिलया वदनत्रयसंयुता । वज्रादिकायुधोपेता डामर्यादिभिरावृता ।।
रक्तवर्णा मांसनिष्ठा गुडान्नप्रीतमानसा । समस्तभक्तसुखदा लाकिन्यम्बास्वरूपिणी ।।
स्वाधिष्ठानाम्बुजगता चतुर्वक्त्रमनोहरा । शूलाद्यायुधसम्पन्नापीतवर्णाऽतिगर्विता ।।
मेदोनिष्ठा मधुप्रीता वन्दिन्यादिसमन्विता । दध्यन्नासक्तहृदया काकिनीरूपधारिणी ।।
मूलाधाराम्बुजारूढा पञ्चवक्त्राऽस्थिसंस्थिता । अंकुशादिप्रहरणा वरदादिनिषेविता ।।
मुद्गौदनासक्तचित्ता साकिन्यम्बास्वरूपिणी । आज्ञाचक्राब्जनिलया शुक्लवर्णा षडानना ।।
मज्जासंस्था हंसवती मुख्यशक्तिसमन्विता । हरिद्रान्नैकरसिका हाकिनीरूपधारिणी ।।
सहस्त्रदलपद्मस्था सर्ववर्णोपशोभिता । सर्वायुधधरा शुक्लसंस्थिता सर्वतोमुखी ।।
सर्वौदनप्रीतचित्ता याकिन्यम्बास्वरूपिणी । स्वाहा स्वधा मतिर्मेधा श्रुतिः स्मृतिरनुत्तमा ।।
पुण्यकीर्तिः पुण्यलभ्या पुण्यश्रवणकीर्तना । पूलोमजार्चिता बन्धमोचनी बन्धुरालका ।।
विमर्शरूपिणी विद्या वियदादिजगत्प्रसूः । सर्वव्याधिप्रशमनी सर्वमृत्युनिवारिणी ।।
अग्रगण्याऽचिन्त्यरूपा कलिकल्मषनाशिनी । कात्यायनी कालहन्त्री कमलाक्षनिषेविता ।।
ताम्बूलपूरितमुखी दाडिमीकुसुमप्रभा । मृगाक्षी मोहिनी मुख्या मृडानी मित्ररूपिणी ।।
नित्यतृप्ता भक्तनिधिर्नियन्त्री निखिलेश्वरी । मैत्र्यादिवासनालभ्या महाप्रलयसाक्षिणी ।।
पराशक्तिः परानिष्ठा प्रज्ञानघनरूपिणी । माध्वीपानालसा मत्ता मातृकावर्णरूपिणी ।।
महाकैलासनिलया मृणालमृदुदोर्लता । महनीया दयामूर्तिर्महासाम्राज्यशालिनी ।।
आत्मविद्या महाविद्या श्रीविद्या कामसेविता । श्रीषोडशाक्षरीविद्यां त्रिकूटा कामकोटिका ।।
कटाक्षकिङ्करीभूतकमलाकोटिसेविता । शिरःस्थिता चन्द्रनिभा भालस्थेन्द्रधनुःप्रभा ।।
हृदयस्था रविप्रख्या त्रिकोणान्तरदीपिका । दाक्षायणी देत्यन्त्री दक्षयज्ञविनाशिनी ।।
दरान्दोलितदीर्घाक्षी दरहासोज्ज्वलन्मुखी । गुरुमूर्तिर्गुणनिधिर्गोमाता गुहजन्मभूः ।।
देवेशी दण्डनीतिस्था दहराकाशरूपिणी । प्रतिपन्मुख्याराकन्ततिथिमण्डलपूजिता ।।
कलात्मिका कलानाथा काव्यालापविनोदिनी । सचामररमावाणीसव्यदक्षिणसेविता ।।
आदिशक्तिरमेयात्मा परमा पावनाकृतिः । अनेककोटिब्रह्माण्डजननी दिव्यविग्रहा ।।
क्लींकारी केवला गुह्या कैवल्यपददायिनी । त्रिपुरा त्रिजगद्वन्द्या त्रिमूर्तिस्त्रिदशेश्वरी ।।
त्र्यक्षरी दिव्यगन्धाढ्या सिन्दूरतिलकाञ्चिता । उमाशैलेन्द्रतनया गौरी गन्धर्वसेविता ।।

विश्वगर्भा स्वर्णगर्भा वरदा वागधीश्वरी । ध्यानगम्याऽपरिच्छेद्या ज्ञानदा ज्ञानविग्रहा ।।
सर्ववेदान्तसंवेद्या सत्यानन्दस्वरूपिणी । लोपामुद्रार्चिता लीलाक्लृप्तब्रह्माण्डमण्डला ।।
अदृश्या दृश्यरहिता विज्ञात्री वेद्यवर्ज्जिता । योगिनी योगदा योग्या योगानन्दा युगन्धरा ।।
इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिस्वरूपिणी । सर्वाधारा सुप्रतिष्ठा सदसद्रूपधारिणी ।।
अष्टमूर्तिरजाजैत्री लोकयात्राविधायिनी । एकाकिनी भूमरूपा निर्द्वैता द्वैतवर्जिता ।।
अन्नदा वसुदा वृद्धा ब्रह्मात्मैक्यस्वरूपिणी । वृहती ब्राह्मणी ब्राह्मी ब्रह्मानन्दा बलिप्रिया ।।
भाषारूपा बृहत्सेना भावाभावविर्जिता । सुखाराध्या शुभकरी शोभना सुलभा गतिः ।।
राजराजेश्वरी राज्यदायिनी राज्यवल्लभा । राजत्कृपा राजपीठनिवेशितनिजाश्रिता ।।
राज्यलक्ष्मीः कोशनाथा चतुरङ्गबलेश्वरी । साम्राज्यदायिनी सत्यसन्धा सागरमेखला ।।
दीक्षिता दैत्यशमनी सर्वलोकवशङ्करी । सर्वार्थदात्री सावित्री सच्चिदानन्दरूपिणी ।।
देशकालापरिच्छिन्ना सर्वगा सर्वमोहिनी । सरस्वती शास्त्रमयी गुहाम्बा गुह्यरूपिणी ।।
सर्वोपाधिविनिर्मुक्ता सदाशिवपतिव्रता । सम्प्रदायेश्वरी साध्वी गुरुमण्डलरूपिणी ।।
कुलोत्तीर्णा भगाराध्या माया मधुमती मही । गणाम्बा गुह्यकाराध्या कोमलाङ्गी गुरुप्रिया ।।
स्वतन्त्रा सर्वतन्त्रेशी दक्षिणामूर्तिरूपिणी । सनकादिसमाराध्या शिवज्ञानप्रदायिनी ।।
चित्कलानन्दकलिका प्रेमरूपा प्रियङ्करी । नामपारायणप्रीता नन्दिविद्या नटेश्वरी ।।
मिथ्याजगदधिष्ठाना मुक्तिदा मुक्तिरूपिणी । लास्यप्रिया लयकरी लज्जा रम्भादिवन्दिता ।।
भवदा वसुधावृष्टिः पापारण्यदवानला । दौर्भाग्यतूलवातूला जराध्वान्तरविप्रभा ।।
भाग्यब्धिचन्द्रिका भक्तचित्तकेकिघनाघना । रोगपर्वतदम्भोलिर्मृत्युदारुकुठारिका ।।
महेश्वरी महाकाली महाग्रासा महाशना । अपर्णा चण्डिका चण्डमुण्डासुरनिषूदिनी ।।
क्षराक्षरात्मिका सर्वलोकेशी विश्वधारिणी । त्रिवर्गदात्री सुभगा त्र्यम्बका त्रिगुणात्मिका ।।
स्वर्गापवर्गदा शुद्धा जपापुष्पनिभाकृतिः । ओजोवती द्युतिधरा यज्ञरूपा प्रियव्रता ।।
दुराराध्या दुराधर्षा पाटलीकुसुमप्रिया । महती मेरुनिलया मन्दारकुसुमप्रिया ।।
वीराध्या विराड्रूपा विरजा विश्वतोमुखी । प्रत्यग्रूपा पराकाशा प्राणदा प्राणरुपिणी ।।
मार्तण्डभैरवाराध्या मन्त्रिणीन्यस्तराज्यधूः । त्रिपुरेशी जयत्सेना निस्त्रैगुण्या परापरा ।।
सत्यज्ञानानन्दरूपा सामरस्यपरायणा । कपर्दिनी कलामाला कामधुक्कामरुपिणी ।।
कलानिधिः काव्यकला रसज्ञा रसशेवधिः । पुष्टा पुरातना पूज्या पुष्करा पुष्करेक्षणा ।।
परंज्योतिः परधाम परमाणुः परात्परा । पाशहस्ता पाशहन्त्री परमन्त्रविभेदिनी ।।
मूर्ताऽमूर्ता नित्यतृप्ता मुनिमानसहंसिका । सत्यव्रता सत्यरूपा सर्वान्तर्यामिनी सती ।।

ब्रह्माणी ब्रह्मजननी बहुरूपाबुधार्चिता । प्रसवित्री प्रचण्डाज्ञा प्रतिष्ठा प्रकटाकृतिः ।।
प्राणेश्वरी प्राणदात्री पञ्चाशत्पीठरूपिणी । विशृङ्खला विविक्तस्था वीरमाता वियत्प्रसूः ।।
मुकुन्दा मुक्तिनिलया मूलविग्रहरूपिणी । भावज्ञा भवरोगघ्नी भवचक्रप्रवर्तिनी ।।
छन्दःसारा शास्त्रसारा मन्त्रसारा तलोदरी । उदारकीर्तिरुद्दामवैभवा वर्णरूपिणी ।।
जन्ममृत्युजरातप्तजनविश्रान्तिदायिनी । सर्वोपनिषदुद्घुष्टा शान्त्यतीता कलात्मिका ।।
गम्भीरा गगनान्तस्था गर्विता गानलोलुपा । कल्पनारहिता काष्ठा कान्ता कान्तार्धविग्रहा ।।
कार्यकारणनिर्मुक्ताकामकेलीतरङ्गिता । कनत्कनकताटङ्का लीलाविग्रहधारिणी ।।
अजा क्षयविनिमक्ता मुग्धा क्षिप्रप्रसादिनी । अन्तर्मुखसमाराध्या बहिर्मुखसुदुर्लभा ।।
त्रयी त्रिवर्गनिलया त्रिस्था त्रिपुरमालिनी । निरामया निरालम्बा स्वात्मारामा सुधासृतिः ।।
संसारपङ्कनिर्मग्नसमुद्धरणपण्डिता । यज्ञप्रिया यज्ञकर्त्री यजमानस्वरूपिणी ।।
धर्माधारा धनाध्यक्षा धनधान्यविवर्धिनी । विप्रप्रिया विप्ररूपा विश्वभ्रमणकारिणी ।।
विश्वग्रासा विद्रुमाभा वैष्णवी विष्णुरूपिणी । अयोनिर्योनिनिलया कूटस्था कुलरूपिणी ।।
वीरगोष्ठीप्रिया वीरा नैष्कर्म्या नादरूपिणी । विज्ञानकलना कल्या विदग्धा बैन्दवासना ।।
तत्त्वाधिका तत्त्वमयी तत्त्वमर्थस्वरूपिणी । सामगानप्रिया सौम्या सदाशिवकुटुम्बिनी ।।
सव्यापसव्यमार्गस्था सर्वापद्विनिवारिणी । स्वस्था स्वभावमधुरा धीरा धीरसमर्चिता ।।
चैतन्यार्घ्यसमाराध्या चैतन्यकुसुमप्रिया । सदोदिता सदा तुष्टा तरुणादित्यपाटला ।।
दक्षिणा दक्षिणाराध्या दरस्मेरमुखाम्बुजा । कौलिनी केवलाऽनर्घ्यकैवल्यपददायिनी ।।
स्तोत्रप्रिया स्तुतिमती श्रुतिसंस्तुतवैभवा । मनस्विनी मानवती महेशी मङ्गलाकृतिः ।।
विश्वमाता जगद्धात्री विशालाक्षी विरागिणी । प्रगल्भा परमोदारा परामोदा मनामयी ।।
व्योमकेशी विमानस्था वज्रिणी वामकेश्वरी । पञ्चयज्ञप्रिया पञ्चप्रेतमञ्चाधिशायिनी ।।
पञ्चमी पञ्चभूतेशी पञ्चसंख्योपचारिणी । शाश्वती शाश्वतैश्वर्या शर्मदा शम्भुमोहिनी ।।
धरा धरसुता धन्या धर्मिणी धर्मवर्धिनी । लोकातीता गुणातीता सर्वातीता शमात्मिका ।।
बन्धूककुसुमप्रख्या बाला लीलाविनोदिनी । सुमङ्गली सुखकरी सुवेषाढ्या सुवासिनी ।।
सुवासिन्यर्चनप्रीता शोभना शुद्धमानसा । विन्दुतर्पणसन्तुष्टा पूर्वजा त्रिपुराम्बिका ।।
दशमुद्रासमाराध्या त्रिपुरा श्रीवशङ्करी । ज्ञानमुद्रा ज्ञानगम्या ज्ञातृज्ञेयस्वरूपिणी ।।
योनिमुद्रा त्रिखण्डेशी त्रिगुणाऽम्बा त्रिकोणगा । अनघाऽद्भुतचारित्रा वाञ्छितार्थप्रदायिनी ।।
अभ्यासातिशयज्ञाता षडध्वातीतरूपिणी । अव्याजकरुणामूर्तिरज्ञानध्वान्तदीपिका ।।

आबालगोपविदिता सर्वानुल्लंघ्यशासना । श्रीचक्रराजनिलया श्रीमत्त्रिपुरसुन्दरी ।।
श्रीशिवा शिवशक्त्यैक्यरूपिणी ललिताम्बिका ।।

फलश्रुति

इत्येवं नामसाहस्रं कथितं ते घटोद्भव । रहस्यानां रहस्यञ्च ललिताप्रीतिदायकम् ।।१।।
अनेन सदृशं न भूतं न भविष्यति । सर्वरोगप्रशमनं सर्वसम्पत्प्रवर्धनम् ।।२।।
सर्वापमृत्युशमनं दीर्घायुष्यप्रदायकम् । पुत्रप्रदमपुत्राणां पुरुषार्थप्रदायकम् ।।३।।
इदं विशेषाच्छीदेव्याः स्तोत्रं प्रीतिविधायकम् जपेन्नित्यं प्रयत्नेन ललितोपास्तितत्परः ।।४।।
सर्वेरोगाः प्रणश्यन्ति दीर्घमायुश्च विन्दति । निष्कामः कीर्तयेद्यस्तु नामसाहस्रमुत्तमम् ।
ब्रह्मज्ञानमवाप्नोति येन मुच्यते बन्धनात् ।।५।।
कलौ पापैकबहुले धर्मानुष्ठानवर्जिते । नामानुकीर्तनं मुक्त्वा नृणां नान्यत्परायणम् ।।६।।
येनान्यदेवतानामकीर्तितं जन्मकोटिषु । तस्यैव भवति श्रद्धा श्रीदेवीनामकीर्तने ।।७।।
मन्त्रराजजपश्चैव चक्रराजार्चनं तथा । रहस्यनामपाठश्च नाल्पस्य तपसः फलम् ।।८।।
अपठन्नामसाहस्रं प्रीणयेद्यो महेश्वरीम् । स चक्षुषा विनारूपं पश्येदेव विमूढधीः ।।९।।
यो भक्तो ललितादेव्याः स नित्यं कीर्तयेदिदम्। नान्यथा प्रीयते देवी कल्पकोटिशतैरपि ।।१०।।

इति श्रीब्रह्माण्डपुराणे ललितोपाख्याने हयग्रीवागस्त्यसंवादे ललितासहस्रनामस्तोत्र सम्पूर्ण

## २१. *श्रीललिताम्बा नीराजनं*

जय देवि जय देवि जय सुन्दरि तनये जय सुन्दरि ललिते।
शश्वद्वसतिं कुरु भोरीश्वरि मम हृदये।। जय देवि जगदम्ब।।

बिन्दुत्रिकोणसहितं षट्कोणं वृत्तम् । तदुपरि वसुदलपत्रं वतलमपि धत्तं ।।
द्विगुणीकृतवसुपत्रं मोहितहरचित्तं । द्वारचतुष्टपनिर्मितयन्त्रोपरि तन्त्रम् ।।जय. १।।
वामे कलशे पूजितपपूरितमाधारम् । तस्मिन्नर्पितपूजितपूरितमाधारम् ।।
एवं पञ्चावरणितकर्णितगुणसारं । मा देहि त्वं भुवने दुर्घटसंसारं ।।जय. २।।
कलशामृतजलपूजितनवपात्रसमेतं । गणपतियोगिनीबटुकक्षेत्राधिपयुक्तम् ।।
अर्चनविधिना सहितं श्रीगुरुविधियुक्तम् । तारकपण्डितविद्याभक्त्याखिलदत्तम् ।।जय. ३।।

## २२. श्रीललिता पुष्पांजलि स्तोत्रं

ॐ समस्तमुनियक्षकिंपुरुषसिद्धविद्याधरग्रहा सुरसुराप्सरोगणमुखैर्गणैः सेविते ।
निवृत्तित्तिलकाम्बराप्रकृतिशान्तिविद्याकलाकलापमधुराकृते कलित एष पुष्पाञ्जलिः ।।१।।
त्रिवेदकृतविग्रहे त्रिविधकृत्यसन्धायिनि त्रिरूप समवायिनि त्रिपुरमार्गसञ्चारिणि ।
त्रिलोचनकुटुम्बिनि त्रिगुणसंविदुद्यत्पदे त्रयि त्रिपुरसुन्दरि त्रिजगदीशि पुष्पाञ्जलिः ।।२।।
पुरन्दरजलाधिपान्तककुबेररक्षोहरप्रभञ्जनधनञ्जयप्रभृतिवन्दनानन्दिते ।
प्रवालपदपीठिकानिकट नित्यवर्त्तिस्वभूविरिञ्चिविहितस्तुते विहित एष पुष्पाञ्जलिः ।।३।।
यदानतिबलादहङ्कृतिरुदेतिविद्यावयस्तपोद्रविणरूपसौरभकवित्वसंविन्मयि ।
जरामरणजन्मजं भयमुपैति तस्यै समाखिलसमीहितप्रसवभूमि तुभ्यं नमः ।।४।।
निरावरणसंविदुद्भ्रमपरास्तभेदोल्लसत्परात्परचिदेकतावरशरीरिणि स्वैरिणि ।
रसायनतरङ्गिणीरूचितरङ्गसञ्चारिणि प्रकामपरिपूरिणि प्रकृत एष पुष्पाञ्जलिः ।।५।।
तरङ्गयति सम्पदं तदनुसंहरत्यापदं सुखं वितरति श्रियं परिचिनोति हन्ति द्विषः ।
क्षिणोति दुरितानि यत् प्रणतिरम्ब तस्यै सदा शिवङ्करि शिवे पदे शिवपुरन्ध्रि तुभ्यं नमः ।।६।।
शिवे शिवसुशितलामृततरङ्गगघ्नोल्लसन्नवावरणदेवते नवनवामृतस्पन्दिनि ।
गुरुक्रमपुरस्कृते गुणशरीर-नित्योज्वले षडङ्गपरिवारिते कलित एष पुष्पाञ्जलिः ।।७।।
त्वमेव जननी पिता त्वमेबं बन्धवस्त्वं सखा त्वमायुरपरा त्वमाभरणमात्मनस्त्वं कलाः ।
त्वमेव चपुषः स्थितिस्त्वमखिला यतिस्त्वं गुरुः प्रसीदपरमेश्वरि प्रणतपात्रि तुभ्यं नमः ।।८।।
कञ्जासनादिसुरवृन्दलसत्किरीटकोटिप्रघर्षण समुज्वलदंघ्रिपीठे ।
त्वामेव यामि शरणं विगतान्य भाव दीनं विलोकय यदार्द्रविकनेन ।।९।।

।।इति श्रीललिता नीराजनं।।

## २३. श्रीत्रिपुरसुन्दर्यपराधक्षमापणास्तवः

क-ञ्जमनोहरपादचलन्मणिनूपुरहंसविराजिते ।
कञ्जभवादिसुरौधपरिष्टुतलोकविसृत्वरवैभवे ।।
मंजुलवाङ्मयनिर्जितकीरकुले चलराजसुकन्यके ।
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ।।

ए-णधरोज्ज्वलफालतलोल्लसदैणमदाङ्कसमन्विते ।
शोषणपरगविचित्रितकन्दुकसुन्दरसुस्तन शोभिते ।।
नीलपयोधर काल सुकुन्तल निर्जित भृङ्ग कदम्बके ।
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ।।

ई-तिविनाशिनि भीतिनिवारिणि दानवहंत्रि दयापरे ।
शीतकराङ्कित रत्नविभूषित हेमकिरीटसमन्विते ।।
दीप्ततरायुध भण्डमहासुरगर्वनिहंत्रि पुराम्बिके ।
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ।।

ल-ब्धवरेण जगत्त्रयमोहन दक्षलतान्तमहेषुणा ।
लब्धमनोहर सालनिषण्ण सुदेह भुवा परिपूजिते ।।
लङ्घितशासन दानवनाशन दक्षमहायुधराजिते ।
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ।।

ह्रीं-पदभूषित पञ्चदशाक्षर षोशवर्णसुदेवते ।
ह्रीमति हादि महामनुमन्दिर रत्नविनिर्मितदीपिके ।।
हस्तिवराननदर्शित युद्धसमादर साहसतोषिते ।
पालय हे ललितापरमेश्वरि मामपराधिनम्बिके ।।

ह-स्तलसन्नवपुष्पशरेक्षुशरासन पाशमहांकुशे ।
हर्यज शम्भुमहेश्वरपादचतुष्टयमञ्चनिवासिनि ।।
हंसपदार्थ महेश्वरि योगिसमूह समादृतवैभवे ।
पालय हे ललितापरमेश्वरि मामपराधिनम्बिके ।।

स-र्वजगत्करणावननाशनकर्त्रि कपालिमनोहरे ।
स्वच्छमृणालमरालतुषारसमानसुहारविभूषिते ।।
सज्जनचित्तविहारिणि शङ्करि दुर्जननाशनतत्परे ।
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ।।

क-ञ्जदलाक्षि निरंजनि कुंजरगामिनि मंजुलभाषिते ।
कुंकुमपङ्कविलेपनि शोभितदेहलते त्रिपुरेश्वरि ।।
दिव्यमतङ्गसुताधृतराज्यभरे करुणारसवारिधे ।
पालय हे ललितापरमेश्वरि माम पराधिनमम्बिके ।।

ह-ल्लकचम्पकपङ्कजकेतक पुष्पसुगन्धितकुन्तले ।
हाटकभूधरश‍ृङ्गविनिर्मित सुन्दरमन्दिरवासिनि ।।
हस्तिमुखाम्ब वराहमुखीधृतसैन्यवरे गिरिकन्यके ।
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ।।

ल-क्ष्मणसोदरसादरपूजितपादयुगे वरदे शिवे ।
लोहमयादिबहून्नतसाल निषण्णबुधेश्वरसंवृते ।।
लोलमदालसलोचननिर्जित नीलसरोजसुमालिके ।
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ।।

ह्री-मिति मंत्रमहाजपसुस्थिर साधक मानसहंसिके ।
हेषित शीतकरानन शोभिनि हेमलतेव सुभास्वरे ।।
हार्द तमोगुणनाशिनि पाशविमोचनि मोक्षसुखप्रदे ।
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ।।

स-च्छिद भेदसुखामृतवर्षिणि तत्त्वमसीति सदादृते ।
सद्‌गुणशालिनि साधुसमर्चित पादयुगे परशांभवि ।।
सर्वजगत्परिपालनदीक्षितबाहुलतायुगशोभिते ।
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ।।

क-म्बुगले वरकुन्दरदे रसरंजित पादसरोरुहे ।
काममहेश्वरकामिनि कोकिलकोमलभाषिणी भैरवि।।
चिन्तित सर्वमनोरथपूरणकल्पलते करुणार्णवे ।
पालय हे ललितापरमेश्वरि मामपराधिनमंबिके ।।

ल-स्तकशोभिकरोज्वलङ्कण कान्तिसुदीपितदिङ्मुखे ।
शस्ततरत्रिदशालयकार्यसमादृतदिव्यतनूज्ज्वले ।।
कश्चतुरो भुवि देवि पुरेशि भवानि तव स्तवने भवेत् ।
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ।।

ह्रीं-पदलांछित मंत्रपयोनिर्धिमंथनजातपरामृते ।
हव्यवहानिलभूयजमान खेन्दुदिवाकररूपिणि ।।
हर्यजरूद्रमहेश्वरसंस्तुत वैभवशालिनि सिद्धिदे ।
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ।।

श्रीपुरवासिनि हस्तलसद्वरचामरवाक्कमलानुते ।
श्रीगुहपूर्वभवार्जितपुण्यफले भवभक्तविलासिनि ।।
श्रीवशिनी विमलादि सदा नतपादचलन्मणिनूपुरे ।
पालय हे ललितापरमेश्वरि मामपराधिनमम्बिके ।।

इति श्री त्रिपुरसुन्दर्यपराधक्षमापणस्तवः

## २४. श्रीत्रिपुरसन्दरी वेदसारस्तवः

कस्तूरीपङ्कभास्वद्गलललदमलस्थूलमुक्तावलीका ।
ज्योत्सना शुद्धावदाता शशिशिशु मकुटालंकृता ब्रह्मपत्नि ।।
साहित्याम्भोजभृङ्गी कविकुलविनुता सात्विकीं वाग्विभूतिं
देयान्मे शुभ्रवस्त्रा करचल-वलया वल्लकीं वादयन्ती ।।१।।

एकान्ते योगिवृन्दैः प्रशमितकरणैः क्षुत्पिपासा-विमुक्तैः ।
सानन्दं ध्यानयोगाद्बिसगुणसदृशी दृश्यते चित्तमध्ये ।।
या देवी हंसरूपा भवभयहरणं साधकानां विधत्ते ।
सा नित्यं नादरूपा त्रिभुवनजननी मोद माविष्करोतु ।।२।।

ईक्षित्री सृष्टिकाले त्रिभुवनमथ या तत्क्षणेनु प्रवेश्या ।
स्थेमान प्रापयन्ती निजगुणविभवैः सर्वथा व्याप्य विश्वम् ।।
संहर्त्री सर्वभासां विलयनसमये स्वात्मनि स्वप्रकाशा ।
सा देवी कर्मबन्धं मम भवकरणं नाशयत्यादिशक्तिः ।।३।।

लक्ष्या या चक्रराजे नवपुरलसितेयोगिनीवृन्दगुप्ते ।
सौवर्णे शैलशृङ्गे सुरगणरचिते तत्त्वसोपानयुक्ते ।।
मन्त्रिण्या मेचकाङ्ग्या कुचभरणतया कोलमुख्या च सार्धं ।
साम्राज्ञी सा मदीया मदगजगमना दीर्घमायु स्तनोतु ।।४।।

ह्रींङ्कारम्भोजभृङ्गी हयमुखविनुता हानिवृध्यादि हीना ।
हंसोहं मन्त्रराज्ञी हरिहयवरदा हादिमन्त्रार्थ रूपा ।।
हस्ते चिन्मुद्रिकाढ्या हतबहुदनुजा हस्तिकृत्ति प्रिया मे ।
हार्दं शोकातिरेकं शमयतु ललिताधीश्वरी पाशहस्ता ।।५।।

हस्ते पङ्केरुहाभे सरससरसिजं विभ्रती लोक माता ।
क्षीरोदन्वत्सुकन्या करिवरविनुता नित्यपुष्टा व्जगेहा ।।
पद्माक्षी हेमवर्णा मुररिपुदयिता शेवधि सम्पदां या ।
सा मे दारिद्र्यदोषं दमयतु करुणा दृष्टिपातैरजस्रम् ।।६।।

सच्चिद्ब्रह्मास्वरूपां सकलगुणयुतां निर्गुणां निर्विकारां ।
रागद्वेषादिहन्त्रीं रविशशिनयनां राज्यदानप्रवीणाम् ।।
चत्वारिंशत्त्रिकोणे चतुरधिकतमे चक्रराजेलसन्तीं ।
कामाक्षीं कामितानां वितरणचतुरां चेतसा भावयामि ।।७।।

कन्दर्पे शान्तदर्पे त्रिणयन नयनज्योतिषा देववृन्दैः ।
शाशङ्कं साश्रुपातं सविनयकरुणं याचिता कामपत्न्या ।।
या देवी दृष्टिपातैः पुनरपि मदनं जीवयामास सद्यः ।
सा नित्यं रोगशान्त्यै प्रभवतु ललिताधीश्वरी चित्प्रकाशा ।।८।।

हव्यैः कव्यैश्म सर्वैः श्रुतिजयविहितैः कर्मभिः कर्मशीला।
ध्यानाधैरष्टमिश्च प्रशमितकलुषा योगिनः पर्णभक्षाः ।।
यामेवानेकरूपां प्रतिदिनमवनौसंश्रयन्तो विधिज्ञाः ।
सा मे मोहान्धकारं बहुभवजनितं नाशयत्वादिमाता ।।९।।

लक्ष्या मूलत्रिकोणे गुरुवरकरुणालेशतः कामपीठे ।
यस्या विश्वं समस्तं बहुतरविततं जायते कुण्डलिन्याः ।।
यस्याश्शक्तिप्ररोहादविरलममृतं विन्दते योगिवृन्दं ।
तां वन्दे नादरूपां प्रणपदरायीं प्राणिनां प्राणदात्रीं ।।१०।।

ह्रींङ्कराम्बोधिलक्ष्मी हिमगिरितनयामीश्वरीमीश्वराणां ।
ह्रींमन्त्राराध्यदेवीं श्रुतिशतशिखरैः मृग्यमाणां मृगाक्षीम् ।।
ह्रींमन्त्रान्तैस्त्रिकूटैःस्थिरतरमति भिर्धार्यमाणां ज्वलन्तीं ।
ह्रीं ह्रीं ह्रीमित्यजस्रं हृदयसरसिजे भावयेऽहं भवानाम् ।।११।।

सर्वेषां ध्यानमात्रात् सवितुरुदरगा चोदयन्ती मनीषां ।
सावित्री तत्पदार्था शशियुतमुकुटा पञ्चशीर्षा त्रिनेत्रा ।।
हस्ताग्रैः शङ्खचक्राद्यखिलजनपरित्राणदक्षायुधानां ।
विभ्राणा वृन्दमम्बा विशदयतु मतिं मामकीनां महेशी ।।१२।।

कर्त्री लोकस्य लीलाविलसितविधिना कारयित्रिक्रियाणां ।
भर्त्री स्वानुप्रवेशाद्वियदनिलमुखैः पञ्चभूतैः स्वसृष्टैः ।।
हर्त्री स्वेनैव धाम्ना पुनरपि विलये कालरूपं दधाना ।
हन्यादामूलमस्मत्कलुषभरमुमा भक्तिमुक्तिप्रदात्री ।।१३।।

लक्ष्या या पुण्यजालैर्गुरुवरचरणां भोजसेवाविशेषात् ।
दृश्या स्वान्त सुधीभिर्दरदलितमहापद्मकोशेन तुल्ये ।।
लक्षं जप्त्वापि यस्या मनुवरमणिमासिद्धिमन्तो महान्तः सा।
नित्यं मामकीने हृदयसरसिजे वासमङ्गीकरोतु ।।१४।।

ह्रीं श्रीमैम्मन्त्ररूपा हरिहरविनुतागस्त्यपत्नीप्रदिष्टा ।
हादिः काद्यर्णतत्त्वा सुरपतिवरदा कालराजप्रदुष्टा ।।
दुष्टानां दानवानां मदभरहरणा दुःखहन्त्री बुधानां ।
साम्राज्ञी चक्रराज्ञी प्रदिशतु कुशलं मह्यमोङ्काररूपा ।।१५।।

श्रीमन्त्रार्थस्वरूपाश्रितजनदुरितध्वान्तहन्त्री शरण्या ।
श्रौतस्मार्तक्रियाणामविकलफलदा फालनेत्रस्य दाराः ।।
श्रीचक्रान्तर्निषण्णा गुहवरजननी दुष्टहन्त्री वरेण्या ।
श्रीमत्सिंहासनेशी प्रदिशतु विपुला कीर्तिमानन्दरूपा ।।१६।।

।।इति श्रीमत्त्रिपुरसुन्दरी वेदसारस्तवः।।

## २५. कल्याणवृष्टिस्तवः

ॐ कल्याणवृष्टिभिरिवामृतपूरिताभिर्लक्ष्मीः स्वयंवरणमङ्गलदीपिकाभिः ।।
सेवाभिरम्ब तव पादसरोजमूले । नाकारि किं मनसि भाग्यवतां जनानाम् ।।१।।
एतावदेव जननि स्पृहणीयमास्ते । त्वद्वन्दने च सलिलस्थगिते च नेत्रे ।।
सान्निध्यमद्य तरुणाम्बुजसोदरस्य । त्वद्विग्रहस्य परया सुधयाऽऽप्लुतस्य ।।२।।
ईशत्वनामकलुषाः कति नाम सन्ति । ब्रह्मादयः प्रतिभिवं प्रलयाभिभूताः ।।
एकस्स एव जगति स्थिरसंस्थितास्ते । यः पादयोस्तव सकृत्प्रणतिं करोति ।।३।।
लब्ध्वा सकृत्त्रिपुरसुन्दरि तावकीनं । कारुण्यकन्दलितकान्तिभरं कटाक्षम् ।।
कन्दर्पभावसुभगा खलु भक्तिभाज स्सम्मोहयन्ति तरुणीर्भुवनत्रयेऽपि ।।४।।

ह्रींकारमेव तव नाम गृणन्ति वेदा । मातस्त्रिकोणनिलये त्रिपुरे त्रिनेत्रे ।।
त्वत्संस्मृतौ यमभटादिभयं विहाय । दीव्यन्ति नन्दनवने सह लोकपालैः ।।५।।
हन्तुः पुरामधिगलं परिपीयमानः । क्रूरः कथं न भविता गरलस्य वेगः ।।
नाश्वासनाय यदि मातरिदं तवार्ध देहस्य शश्वदमृताप्लुतशीतलस्य ।।६।।
सर्वज्ञतां सदसि वाक्पटुतां प्रसूते । देवि त्वदंघ्रिसरसीरुहयोः प्रणामः ।।
किं च स्फुरन्मुकुटमुज्ज्वलमातपत्रं । द्वे चामरे च महतीं वसुधां ददाति ।।७।।
कल्पद्रुमैरभिमतप्रतिपादनेषु । कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः ।।
आलोकय त्रिपुरसुन्दरि मामनाथं । त्वय्येव भक्तिभरितं त्वयि बद्धतृष्णम् ।।८।।
हन्तेतरेष्वपि मनांसि विधाय चान्यभक्तिं वहन्ति किल पामरदैवतेषु ।।
त्वामेव देवि मनसा समनुस्मरामि । त्वामेवे नौमि शरणं जननि त्वमेव ।।९।।
लक्ष्येषु सत्स्वपि कटाक्षषनिरीक्षकाना मालोकय त्रिपुरसुन्दरि मां कदाचित् ।।
नूनं मया तु सदृशः करुणैकपात्रं । जातो जनिष्यति जनो न च जायते वा ।।१०।।
ह्रों ह्रींमिति प्रतिदिनं जपतां तवाख्यां । किन्नाम् दुर्लभमिह त्रिपुराधिवासे ।।
मालाकिरीटमदवारणमाननीयां । तां सेवते वसुमती स्वयमेव लक्ष्मीः ।।११।।
संपत्कराणि सकलेन्द्रियनन्दनानि । साम्राज्यदाननिरतानि सरोरुहाक्षि ।।
त्वद्वन्दनानि दुरिताहरणोद्यतानि । मामेव मातरनिशं कलयन्तु नान्यम् ।।१२।।
कल्पोपसंहृतिष कल्पितताण्डवस्य । देवस्य खण्डपरशोः परभैरवस्य ।।
पाशांकुशैक्षवशरासनपुष्पबाणा । सा साक्षिणी विजयते तव मूतिरेका ।।१३।।
लग्नं सदा भवतु मातरिदं तवार्धं । तेजः पर बहुलकुंकुमपङ्कशोणम् ।।
भास्वत्किरीटममृतांशुकरावतंसं । मध्ये त्रिकोणनिलयं परमामृतार्द्रम् ।।१४।।
ह्रींकारमेव तव नाम तदेव रूपं । त्वन्नाम दुर्लभमिह त्रिपुरे गृणन्ति ।।
तत्तेजसा परिणतं वियदादिभूत । सौख्यं तनोति सरसीरुहसम्पदाद्यैः ।।१५।।
ह्रांकारत्रयसम्पुटेन महता मन्त्रेण सन्दीपितं।
स्तोत्र यः प्रतिवासरं तव परो मातर्जपेन्मन्त्रवित्।।
तस्य क्षोणिभुजो भवन्ति वशगा लक्ष्मीश्चिरस्थायिनी।
वाणी निर्मलसूक्तिभारभरिता जागर्ति दीर्घं वयः।।

इति श्रीमच्छङ्करभगवदाचार्यकृतिषु कल्याण वृष्टिस्तवस्सम्पूर्णः।

## २६. श्रीत्रिपुरसुन्दरी चक्रराजस्तवः

कर्तु देवि जगद्विलासविधिना सृष्टेन ते मायया
सर्वानन्दमयेन मध्यविलसत्श्रीबिन्दुनालंकृतम् ।।
श्रीमत्सद्गुरुपूज्यपादकरुणासंवेद्यतत्वात्मकं
श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ।।१।।

एकस्मिन्नणिमादिभिर्विलसितं बूमीगृहे सिद्धिभिः
ब्रह्माद्याभिरुपाश्रितं च दशभिर्मुद्राभिरुद्भासितम् ।
चक्रेश्याप्रकटेड्यया त्रिपुरया त्रैलोक्यसम्मोहनं । श्रीचक्रम्...।।२।।

ईड्याभिर्नव विद्रुमच्छविसमाभिख्यपभिरङ्गीकृतं
कामाकर्षणिकादिभिः खरदले गुप्तभिधर्षाभिः सदा ।
सर्वाशापरिपूरके परिलसद्देव्या पुरेश्या युतं । श्रीचक्रम्...।।३।।

लब्धप्रोज्वल यौवनाभिरिभितोनङ्ग प्रसूनादिभिः
सेव्यं गुप्तरसुन्दभिरष्टकमले संक्षोभकाख्ये सदा ।
चक्रेश्या पुरसुन्दुरीति जगति प्रख्यातया संगतं । श्रीचक्रम्...।।४।।

ह्रींङ्काराङ्कितमन्त्रराजनिलयं श्रीसर्व संक्षोभिणी
मुख्याभिश्चलकुन्तलाभिरुचितं मन्वश्रचक्रे शुभे ।
यत्र श्रीपुरवासिनी विजयते श्रीसर्वसौभाग्यदे । श्रीचक्रम्...।।५।।

हस्ते पाशगदादि शस्त्रनिचयं दीप्तं वहन्तीभिरु-
त्तीर्णाख्याभिरुपास्ययतिशुभदे सर्वार्थसिद्धिप्रदे ।
चक्रे बाह्यदशारके विलसितं देव्या पुरश्श्याख्यया । श्रीचक्रम्...।।६।।

सर्वज्ञादिभिरिन्दुकान्ति धवलाकाराभिरारक्षिते
चक्रेन्तर्दशकोणकेतिविमले नाम्ना च रक्षाकरे ।
यत्र श्रीपुरमालिनी विजयते नित्यं निगर्भास्तुता । श्रीचक्रम्...।।७।।

कर्तुं मूकमनर्गलस्त्रुवदतिद्राक्षादिवाग्वैभव
द्राक्षाभिर्वशिनी मुखाभिरभितो वाग्देवतामिर्युतम् ।
अष्टारे पुरसिद्धया विलसितं रोगप्रणाशे शुभं । श्रीचक्रम्...।।८।।

हन्तुं दानवसंघमाहवभुवि स्वेच्छासमाकल्पितैः
शस्त्रैरस्त्रचयैश्च चापनिवहैरत्युग्रतेजोमरैः ।
आर्तत्राणपरायणैररिकुलप्रध्वंसिभिस्संवृतं । श्रीचक्रम्...।।९।।

लक्ष्मीवागगजात्मभिः करलसत्पाशासिघण्टादिभिः
कामेश्यादिभिरावृतं शुभकरं श्रीसर्वसिद्धिप्रदम् ।
चक्रेशी च पुरांबिका विजयते यत्र त्रिकोणे मुदा । श्रीचक्रम्...।।१०।।

ह्रीङ्कारं परमं जपद्भिरनिशं मित्रैशनाथादिभि
र्दिव्यौघैर्मनुजौधसिद्धनिवहैः सारूप्यमुक्तिं गतैः ।
नानामन्त्ररहस्यविद्भिरखिलौरन्वासितं योगिभिः । श्रीचक्रम्...।।११।।

सर्वोत्कृष्टवपुर्धराभिरिभितो देवीसभाभिर्जग-
त्संरक्षार्थमुपागताभिरसकृन्नित्याभिधाभिर्मुदा ।
कामेश्यादिभिराज्ञयैव ललितादेव्याः समुद्भासितं । श्रीचक्रम्...।।१२।।

कर्तुं श्रीललिताङ्गरक्षणविधिं लावण्यपूर्णो तनू
मास्थायास्त्रवरोल्लसत्करपयोजाताभिरध्यासितम् ।
देवीभिर्हृदयादिभिश्च परितो बिन्दुं सदानन्ददं । श्रीचक्रम्...।।१३।।

लक्ष्मीशादिपदैर्युतेन महता मञ्चेन संशोभितं
षट्त्रिंशद्भिरनर्घरत्नखचितैः सोपानकैर्भूषितम् ।
चिन्तात्नविनितेन महता सिंहासनेनोज्ज्वलं । श्रीचक्रम्...।।१४।।

ह्रीङ्कारैकमहामनुं प्रजपता कामेश्वरेणार्पितं
तस्याङ्के च निषण्णया त्रिजगतां मात्रा चिदाकारया ।
कामेश्या करुणारसैकनिधिना कल्याणदात्र्यायुतं । श्रीचक्रम्...।।१५।।

श्रीमत्पञ्चदशाक्षरैकनिलयं श्रीषोडशीमन्दिरं
श्रीनाथादिभिरर्चितं च बहुधा देवैः समाराधितम् ।
श्रीकामेशरहस्सखीनिलयलयनं श्रीमद्गुहाराधितं ।
श्रीचक्रं शरणं व्रजामि सततं सर्वेष्टसिद्धिप्रदम् ।।१६।।

इति श्रीमत्तिपुरसुन्दरी चक्रराजस्यवः।।

## इति श्रीचक्रराजरथं विभाव्य

धरणी सदनत्रय धरणी वृत्तत्रय सर्वाशपरिपूरकचक्र सर्वसंक्षोभणचक्र सर्वसौभाग्यदायकचक्र सर्वार्थसाधकचक्र सर्वरक्षाकरचक्र सर्वरोगहरचक्र सर्वसिद्धिप्रदचक्र परब्रह्मचक्र सर्वानन्दमयचक्र सहिता समस्तदिव्यचक्र सृष्टिस्थित्यन्तकारिणि एषामुद्राशक्ति ब्राह्मयाध्यष्टमातृशक्ति प्रकटयोगिनि अणिमाद्यष्टसिद्धिशिवशक्ति विष्णुशक्ति ब्रह्मशक्ति गुप्तयोगिनि गुप्ततरयोगिनि संप्रदाययोगिनी कुलोत्तीर्णयोगिनी निगर्भयोयिनी रहस्ययोगिनी परापररहस्ययोगिनी प्रदिपदाति तिथिरूपिणी दशावतारदेवी मन्त्रिणी दण्डनाथसहिता महालक्ष्मी महासरस्वती समेता परापररहस्ययोगिनी समेता सर्वानन्दमयबैन्दवचक्रे परब्रह्मस्वरूपिणी परामृतशक्ति सर्वमन्त्रेश्वरी सर्वयन्त्रेश्वरी सर्वविश्वेश्वरी सर्वयोगेश्वरी सर्वसिद्धेश्वरी सकलजकत्युतपतिस्थिति संहारमातृका श्रीललीतामहाभट्टारिका श्रीराजराजेश्वरी श्रीचक्रराज संराज्ञी महामाहेश्वरी महामहाराज्ञि महामहाशक्ति महामहागुप्ते महामहाशक्ति महामहागुप्ते महामहाज्ञप्ते महामहानन्दे महामहास्पन्दे महामहाशये महामहाश्रीचक्रनगरसंराज्ञि नमस्ते नमस्ते श्रीमहात्रिपुरसुन्दरी।। श्री ललितांबिकायै नमः।।

महीं मूलाधारे कमपि मणिपूरे हुतवहं स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।
मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं सहस्रारे पद्मे सह रहसि पत्या विहरसि ।।
ततो गत्वा ज्वा ज्योत्स्नामयसमयलोकं समयिनां पराख्या सादाख्या जयति शिवतत्वेन मिलिता।
सहस्रारे पद्मे शिशिरमहसां बिम्बमपरं तदेव श्रीचक्रं सरथमिति तद्वैन्दवमिति ।।

## २७. श्रीसर्वसिद्धिकरश्चण्डीचरित्रस्तवः

यत्कर्मधर्मनिलयं प्रवदन्ति तज्ज्ञा यज्ञादिपुण्यमखिलं सकलं त्वयैव ।
त्वं चेतना यत इति प्रविचार्य चित्ते नित्यं त्वदीयचरणौ शरणम्प्रपद्ये ।।१।।
पाशेधिनाथतनयापतिरेष शेषपर्यङ्कलालितवपुः पुरुषः पुराणः ।
त्वन्मोहपाशविवशो जगदम्ब! सोऽपि व्याघूर्णमाननयनः शकनञ्चकार ।।२।।
तत्कौतुकं जननि यस्य जनार्दनस्य कर्णप्रसूतमलजौमधुकैटभाख्यो।
तस्यापि यौ त भवतः सुलभौनिहन्तुंत्वन्माययाकवलितौ विलयं गतौ तौ ।।३।।
यन्माहिषं वपुरपूर्वबलोपपन्नं यन्नाकनायकपराक्रमजित्वरञ्च ।
यल्लोकशोकजननव्रतबद्धहार्द तल्लीलयैव दलितं गिरिजे भवत्या ।।४।।

यो धूम्रलोचन इति प्रथितः पृथिव्यां भस्मीवभूव स रणे तव हुङ्कतेन ।
सर्वासुरक्षयकरे गिरिराजकन्ये मन्ये स्वमन्युदहनेकृत एव होमः ।।५।।
केषामपि त्रिदशनायकपूर्वकाणां हन्तुं न जातु सुलभाविति चण्डमुण्डौ ।
तौ दुर्मदौ सपदि चाम्बरतुल्यभूर्तेर्मातस्तवासिकुलिशात्पतितौ विशीर्णौ ।।६।।
दौत्येन ते शिव इति प्रथितः प्रभावो देवोऽपि दानवपतेः सदनं जगाम ।
भूयोऽपि तस्य चरितं प्रथयाञ्चकार सा त्वं प्रसीद शिवदूति विजृम्भितेन ।।७।।
चित्रं तदेतदमरैरपि ये न जेयाः शस्त्राभिघातपतिताद्रुधिरादपर्णे ।
भूमौ वभूवरुरमिताः प्रतिरक्तबीजास्तेऽपि त्वयैव गगने गिलिताः समस्ताः ।।८।।
आश्चर्यमेतदतुलं यदभूत्सुरारी त्रैलोक्यवैभवविलुण्ठनहृष्टपाणी ।
शस्त्रैर्निहत्य भुवि शुम्भनिशुम्भसञ्ज्ञौनीतौ स्त्वया जननितावपिनाकलोकम् ।।९।।
त्वत्तेजसि प्रलयकालहुताशनेऽस्मिं स्तस्मिन्प्रयान्ति विलयं भुवनानि सद्यः ।
तस्मिन्निपित्य शलभा इव दानवेन्द्रा भस्मीभवन्ति हि भवानि किमत्र चित्रम् ।।१०।।
तत्किं गृणामि भवतीं भवतीव्रतापसम्वर्धनप्रणयिनीं प्रणमज्जनेषु ।
तत्किं गृणामि भवतीं भवतीव्रतापसम्बर्धनप्रणयिनीं विपदि स्थिंतेषु ।।११।।
वामे करे तदितरे च तथोपरिष्टात् पात्रं सुधारसयुतं वरमातुलुङ्गम् ।
खेटं गदां च दधतीं भवतीं भवानि ध्यायन्ति येऽरुणनिभांकृतिनस्त एव ।।१२।।
यद्वारुणात्परमिदं यदि मानवस्ते बीजं स्मरेदनुदिनं दहनाधिरूढम् ।
मायाङ्कितं तिलकितं तरुणेन्दुबिन्दुनातै रसन्दमिह राज्यमसौ भुनक्ति ।।१३।।
आवाहनं यजनवर्णनमग्निहोत्रं कर्मार्पणं तव विसर्जनमत्र देवि ।
मोहान्मया कृतमिदं सकलापराधं मातःक्षमस्व वरदे बहिरन्तरस्थे ।।१४।।
अन्तःस्थिताऽप्यखिलजन्तुषु जन्तुरूपा विद्योतसे बहिरिवाऽखिलविश्वरूपा ।
का भूरि शब्दरचना वचनाधिका सा दीनं जनं जननि! मामव निष्प्रपञ्चम् ।।१५।।
एतत्पठेदनुदिनं दनुजान्तकारि चण्डीचरित्रमतुलं भुवि यस्त्रिकालम् ।
श्रीमान् सुखी विजयी सुभगः कृती स्यात् त्यागी चिरन्तनवपुः कविचक्रवर्ती ।।१६।।
श्रीसद्धनाथपरनामधेयः श्रीशम्भुनाथो भुवनैकनाथः ।
तस्व प्रसादात्सकलागमश्रीः पृथ्वीधरः स्तोत्रमिदं चकार ।।१७।।

।।श्री पृथ्वीधराचार्य विरचितं सर्वसिद्धिकरं चण्डोचरित्रस्तोत्रं समाप्तम्।।

## २८. श्रीबालात्रिपुरसुन्दरीमानसपूजास्तोत्रम्

[भगवान् श्रीमदादिशङ्कराचार्य-कृत मानसपूजा-स्तोत्र में भगवती राजराजेश्वरी त्रिपुरसुन्दरी की कन्या बाला-त्रिपुरसुन्दरी की आराधनापरक स्तुति है। प्रत्येक श्लोक से भगवती बाला-त्रिपुरसुन्दरी की सपर्या सम्पादित की जा सकती है। प्रस्तुत स्तोत्र का पाठ करने से बिना श्रीयन्त्र-पूजन के भी साधक को यन्त्रराज के अर्चन का फल प्राप्त होता है।]

**ओं उषसि मागधमङ्गलगायनैर्झटिति जागृहि जागृहि जागृहि ।**
**अतिकृपार्द्रकटाक्षनिरीक्षणैर्जगदिदं जगदम्ब सुखीकुरु ।।१।।**

**कनकमयवितर्दि शोभमानं दिशि-दिशि पूर्णसुवर्णकुम्भयुक्तम् ।**
**मणिमयमण्डपमध्यमेहि मातर्मयि कृपया हि समर्चनं गृहीतुम् ।।२।।**

**कनककलशशोभमानशीर्षं जलधरचुम्बितसमुल्लसत्पताकम् ।**
**भगवति तव सन्निवासहेतोर्मणिमयमन्दिरमेतदर्पयामि ।।३।।**

**तपनीयमयी सतूलिका कमनीया मृदुलोत्तरच्छदा ।**
**नवरत्नविभूषिता मया शिविकेयं जगदम्ब तेऽर्पिता ।।४।।**

**कनकमयवितर्दिस्थापिते तूलिकाढ्ये विविधकुसुमकीर्णे कोटिबालार्कवर्णे ।**
**भगवति रमणीये रत्नसिंहासनेऽस्मिन् उपविश पदयुग्मं मेहपीठे निधेहि ।।५।।**

**मणिमयमौक्तिकनिर्मितं महान्तं कनकस्तम्भचतुष्टयेन युक्तम् ।**
**कमनीयतमं भवानि तुभ्यं नवमुल्लोचमहं समर्पयामि ।।६।।**

**दुर्वया सरसिजान्वितविष्णुक्रान्तया च सहितं कुसुमाढ्यम् ।**
**पद्मयुग्मसदृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः! ।।७।।**

**गन्धपुष्पयवसर्षपदूर्वासम्मितं तिलकुशाक्षतमिश्रम् ।**
**हेमपात्रनिहितं सह रत्नैरर्घ्यमेतदुररीकुरु मातः ।।८।।**

**जलजद्युतिनाकरेण जातीफलकक्कोललवङ्गगन्धयुक्तैः ।**
**अमृतैरमृतैरिवाहृतैर्भगवत्याचमनं विधीयताम् ।।९।।**

**निहितः कनकस्य सम्पुटे पिहितो रत्नपिधानकेन सः ।**
**तदयं भवतीकरेऽर्पितो मधुपर्को भवति प्रगृह्यताम् ।।१०।।**

एतच्चम्पकतैलमेव विविधैः पुष्पैर्मुहुर्वासितं
न्यस्तं रत्नमये सुवर्णचषके भृङ्गैर्भ्रमद्भिर्वृतम् ।
सानन्दं सुरसुन्दरीभिरभितो हस्तैर्धृतं यन्मया
केशेषु भ्रमरप्रभेषु सकलेष्वङ्गेषु चालिप्यताम् ।।११।।

मातः कुङ्कुमपङ्कनिर्मितमिदं देहे तवोद्वर्तनं
भक्त्याऽहङ्कलयामि हेमरजसा सम्मिश्रितं केसरम् ।
केशानामलकैर्विशोध्य विशदान् कस्तूरिकाद्यन्वितं
स्नानं ते नवरत्नकुम्भसहितैः संवासितोष्णोदकैः ।।१२।।

दधिदुग्धघृतैः समाक्षिकैः सितया शर्करया समन्वितैः ।
स्नपयामि तवाहमादृतो जननि ! त्वां पुनरुष्णवारिभिः ।।१३।।

एलोशीरसुवासितैः सुकुसुमैर्गङ्गादितीर्थोदकै-
र्माणिक्यामलमौक्तिकामृतयुतैः स्वच्छैः सुवर्णोदकैः ।
मन्त्रान् वैदिकतान्त्रिकान् परिपठन् सानन्दमत्यादरात्
स्नानं ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु ।।१४।।

बालार्कद्युतिदाडिमीयकुसुमप्रस्पर्धिसर्वोत्तमं
मातस्त्वं परिधेहि दिव्यवसनं भक्त्या मया कल्पितम् ।
मुक्ताभिर्ग्रथितं सकञ्चुकमिदं स्वीकृत्य पीतप्रभं
तप्तस्वर्णसमानवर्णबहुलं प्रावर्णमङ्गीकुरु ।।१५।।

नवरत्नयुते मयार्पिते कमनीये तपनीयपादुके ।
सविलासमिदं पदद्वयं कृपया देवि! तयोर्निधीयताम् ।।१६।।

बहुभिरगरुधूपैः सादरं धूपयित्वा। भगवति ! तव केशान् कङ्कतैर्मार्जयित्वा ।।
सुरभिररविन्दैश्चम्पकैश्चार्चयित्वा झटिति कनकसूत्रैर्जूटमावेष्टयामि ।।१७।।

सौवीराञ्जनमिदमम्ब ! चक्षुषोरते विन्यस्तं कनकशलाकया मया यत् ।
तन्नूनं मलिनमपि त्वदक्षिसङ्गाद् ब्रह्मेन्द्राद्यभिलषणीयतामियाय ।।१८।।

मञ्जीरे पदयोर्निधाय रुचिरे विन्यस्य काञ्चीं कटौ
मुक्ताहारमुरोजयोरनुपमां नक्षत्रमालां गले ।
केयूराणि भुजेषु रत्नवलयश्रेणीः करेषु क्रमात्
ताटङ्के तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम् ।।१९।।

धम्मिल्ले तव देवि हेमकुसुमान्याधाय भालस्थले
मुक्ताराजिविराजिहेमतिलकं नासापुटे मौक्तिकम् ।
मातर्मौक्तिकजालिकाञ्च कुचयोः सर्वाङ्गुलीषूर्मिकाः
कट्यां काञ्चनकिङ्किणीर्विनिदधे रत्नावतंसं श्रुतौ ।।२०।।

मातर्भालतले तवातिविमले काश्मीरकस्तूरिका
कर्पूरागरुभिः करोमि तिलकं देहेऽङ्गरागं ततः ।
वक्षोजादिषु यक्षकर्दमरसैः सित्कांचपुष्पद्रवैः
पादौ कुङ्कुमलेपनादिभिरहं सम्पूजयामि क्रमात् ।।२१।।

रत्नाक्षतैस्त्वां परिपूजयामि मुक्ताफलैश्चारुरुचैर्विचित्रैः ।
अखण्डितैर्देवि ! यवादिभिर्वा काश्मीरपङ्काङ्किततण्डुलैर्वा ।।२२।।

जननि चम्पकतैलमिदं पुरो मृगमदोऽयमयं पटवासकः।।
सुरभिगन्धमिदं च चतुःसमं सपदि सर्वमिदं प्रतिगृह्यताम्।।२३।।

सीमन्ते ते भगवती मया सादरं न्यस्तमेतत् सिन्दूरं मे हृदयकमले देवि हर्षं तनोतु।
बालादित्यद्युतिरिव सदा लोहिता यस्य कान्तिरन्तर्ध्वान्तं हरतु सकलं चेतसा चिन्तयामि।।२४।।

मन्दारकुन्दकरवीरलवङ्गपुष्पैस्त्वां देवि सन्ततमहं परिपूजयामि।
जातीजपाबकुलचम्पककेतकादिनानाविधानि कुसुमानि च तेऽर्पयामि।।२५।।

मालतीबकुलहेमपुष्पिकालाञ्चनारकरवीरचम्पकैः ।
कर्णिकारगिरिकर्णिकादिभिः पूजयामि जगदम्ब ते वपुः।।२६।।

पारिजातशतपत्रपाटलैर्मल्लिकाबकुलचम्पकादिभिः ।
अम्बुजैश्च कुसुमैश्च सादरं पूजयामि जगदम्ब ! ते वपुः ।।२७।।

लाक्षासम्मिलितैः शिलारसयुतैः श्रीवामसम्मिश्रितैः
कर्पूराकलितैः सितामधुद्युतैर्गोसर्पिषालोडितैः ।
श्रीखण्डागरुगुग्गुलप्रभृतिभिर्नानाविधैर्वस्तुभिः
धूपं ते परिकिल्पयामि जननि! त्वं धूपमङ्गीकुरु ।।२८।।

रत्नालङ्कृतहेमपात्रनिहितैर्गोसर्पिषोद्दीपितैः
दीपैर्दीर्घतरान्धकारविधुरैर्बालार्ककोटिप्रभैः।
आताम्रज्वलदुज्ज्वलज्ज्वलनवद्रत्नप्रदीपैः सदा
मातस्त्वामहमादरादनुदिनं नीराजयाम्युच्चकैः।।२९।।

महति कनकपात्रे स्थापयित्वा विशालान् डमरुसदृशरूपान् पक्वगोधूमदीपान् ।।
बहुघृतमथ तेषु न्यस्त दीपैरकम्पैर्भुवनजननि कुर्वे नित्यमारार्तिकन्ते ।।३०।।

सविनयमथ दत्त्वा जानुयुग्मं धरायां सपदि शिरसि धृत्वा पात्रमारार्तिकस्य ।
मुखकमलसमीपे तेऽम्ब सार्धत्रिवारं भ्रमयति मयि भूयात् ते कृपार्द्रः कटाक्षः ।।३१।।

मातस्त्वां दधिदुग्धपायसमहाशाल्यन्नसन्तानकान्
सूपापूपसिताघृतैः सवटकैः सक्षौद्ररम्भाफलैः।
एलाजीरकहिंगुनागरनिशाकौस्तुम्बरीसंयुतैः
शाकैः साकमहं सुधाधिकरसैः सन्तर्पयाम्यर्पयन्।।३२।।

सापूपसूपदधिदुग्धसिताघृतानि सुस्वादुभक्ष्यपरमान्नपुरःसराणि ।
साकोल्लसन्मरिचजीरकवल्लिकानि भक्ष्याणि भुङ्क्ष्व जगदम्ब मयार्पितानि ।।३३।।

क्षीरमेतदिदमुतमोत्तमं प्राज्यमाज्यमिदमुज्वलं मधु
मातरेतदमृतोपमं त्वया संभ्रमेण परिपीयतां मुहुः ।।३४।।

उष्णोदकैः पाणियुगं मुखञ्च प्रक्षाल्य मातः कलधौतपात्रम् ।
कर्पूरमिश्रेण सकुङ्कुमेन हस्तौ समुद्वर्तय चन्दनेन ।।३५।।

अतिशीरमुशीरवासितं तव पाणौ च मया निवेदितम् ।
पटपूतमिदं जितामृतं शुचि गङ्गामृतमम्ब पीयताम् ।।३६।।

आताम्ररम्भाफलसंयुतानि द्राक्षाफलाक्षोटसमन्वितानि ।
सनारिकेलानि सदाडिमानि फलानि ते देवि! समर्पयामि ।।३७।।

कलिङ्गकोशातकसंयुतानि जम्बीरनारङ्गसमन्वितानि ।
सबीजपूराणि सदाडिमानि फलानि ते देवि! समर्पयामि ।।३८।।

कपूरिण युतैर्लवङ्गसहितैः कङ्कोलचूर्णान्वितैः
सुस्वादुक्रमुकैः सगौरखदिरैः सुस्निग्धजातीफलैः ।
मातः! केतकिपत्रपाण्डुरुचिरैस्ताम्बूलवल्लीदलैः
सानन्दं मुखमण्डनार्थमतुलं ताम्बूलमङ्गीकुरु ।।३९।।

एलालवङ्गादिसमन्वितानि कङ्कोलकर्पूरविमिश्रितानि ।
ताम्बूलवल्लीदलसंयुतानि फलानि ते देवि! समर्पितानि।।४०।।
ताम्बूलवल्लीदलनिर्जितहेमवर्णस्वर्णाक्तपूगफलमौक्तिकचूर्णयुक्तम् ।।
रत्नस्थलीस्थितमिदं खदिरेण सार्धं ताम्बूलमम्ब वदनाम्बुरुहे ! गृहाण।।४१।।
अथ बहुमणिमिश्रैर्मौक्तिकैस्त्वां विकीर्य त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः।
मिलितविविधमुक्तां दिव्यमाणिक्ययुक्तां जननि कनकवृष्टिं दक्षिणां तेऽर्पयामि।।४२।।
मातः काञ्चनदण्डमण्डितमिदं पूर्णेन्दुबिम्बप्रभं
नानारत्नविशोभिहेमकलशं लोकत्रयाह्लादकम् ।
भास्वन्मौक्तिकजालिकापरिवृतं प्रीत्यात्महस्ते
छत्रन्ते परिकल्पयामि शिरसि त्वष्ट्रा स्वयं निर्मितम् ।।४३।।
शरदिन्दुमरीचिगौरवर्णैर्मणियुक्तैर्विलसत्सुवर्णदण्डैः ।
जगदम्ब विचित्रचामरैस्त्वामहमानन्दभरेण बीजयामि ।।४४।।
मार्त्तण्डमण्डलनिभो जगदम्ब ! योऽयं भक्त्या मया मणिमयो मुकुरोऽर्पितस्ते ।
पूर्णेन्दुबिम्बरुचिरं वदनं स्वकीयमस्मिन् विलोकय विलोलविलोचने त्वम् ।।४५।।
इन्द्रादयो नतिनतैर्मुकुटप्रदीपैर्नीराजयन्ति सततं तव पादपीठम् ।
तस्मादहं तव शरीरमशेषमेतन् नीराजयामि जगदम्ब सहस्रदीपैः ।।४६।।
प्रियगतिरतितुङ्गो रत्नपल्लाणयुक्तः कनकमयविभूषः स्निग्धगम्भीरघोषः ।
भगवति कलितोऽयं वाहनार्थं मया ते तुरगशतसमेतो वायुवेगस्तरङ्गः ।।४७।।
मधुकरवृतकुम्भो न्यस्तसिन्दूररेणुः कनककलितघण्टः किङ्किणीशोभिकण्ठः।
श्रवणयुगलचञ्चच्चामरो मेघतुल्यो जननि तव मुदे स्यान्मत्तमातङ्ग एषः ।।४८।।
द्रुततरतुरगैर्विराजमानं मणिमयचक्रचतुष्टयेन युक्तम् ।
कनकमयहं वितानवन्तं भगवति ते हि रथं समर्पयामि ।।४९।।
हयगजरथपत्तिशोभमानं दिशि दिशि दुन्दुभिमेघनादयुक्तम् ।
अभिनवचतुरङ्गसैन्यमेतद् भगवति भक्तिभरेण तेऽर्पयामि ।।५०।।
परिधिकृतसप्तसागरं बहुसम्पत्सहितं मयाऽम्ब ते ।
विपुलं धरणीतलाभिधं प्रबलं दुर्गमिदं समर्पितम् ।।५१।।
शतपत्रयुतैः स्वभावशीतैरतिसौरभ्ययुतैः परापगीतैः ।
भ्रमरीमुखरीकुतैरनेकैर्व्यजनैस्त्वां जगदम्ब बीजयामि ।।५२।।

भ्रमविलुलितलोलकुन्तलालिर्विगलितमाल्यविकीर्णरङ्गभूमिः ।
इयमतिचतुरा नटी नटन्ती तव हृदये मुदमातनोतु मातः! ।।५३।।

मुखचलनविलासलोलवेणीविलसितनिर्णितलोलभृङ्गमालाः ।
युवजनसुखकारिचारुलीला भगवति ! ते पुरतो नटन्ति बालाः ।।५४।।

रुचिरकुचतटीनां नाट्यकाले नटीनां प्रतिगृहमथ तत्र प्रत्यहं प्रादुरासीत्।
धिमिकि धिमिकि धिद्धी धिद्धी धिद्धेति धिद्ध-
धिकिति धिकिति तत्थै त्थै तथेथेति शब्दः।।५५।।

भ्रमदलिकुलतुल्या लोलधम्मिल्लभारा स्मितमुखकमलोद्यद्दिव्यलावण्यपूरा।
अभिनवनववेषा वारयोषा नटन्ती परभृतकलकण्ठी देवि मोदन्तनोतु।।५६।।

डमरुडिण्डिमझर्झरझल्लरी मृदुरवार्द्रघटार्द्रघटादयः ।
झटितिझङ्कृतिभिर्जगदम्बिके बहुदयं हृदयं सुखयन्तु ते ।।५७।।

विपञ्चीषु सप्तस्वरान् वादयन्त्यस्तव द्वारि गायन्ति गन्धर्वकन्याः ।
क्षणं सावधानेन चित्तेन मातः समाकर्णय त्वं मया प्रार्थिताऽसि ।।५८।।

अतिशयकमनीयैर्नर्त्तनैर्नर्त्तकीनां झटिति च रमयित्त्वा चेत एवं त्वदीयम् ।
स्वयमहमपि चित्रैर्नृत्यवादित्रगीतैर्भगवति भवदीयं मानसं रञ्जयामि ।।५९।।

तव देवि गुणानुवर्णने चतुरा नो चतुराननादयः ।
तदिहैकमुखेषु जन्तुषु स्तवनं कस्तव कर्त्तुमीश्वरः ।।६०।।

पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादिफलन्ददाति ।
तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ।।६१।।

रक्तोत्पलारक्ततलप्रभाभ्यां ध्वजोर्ध्वरेखाकुलिशाङ्किताभ्याम् ।
अशेषवृन्दारकवन्दिताभ्यां नमो भवानीपदपङ्कजाभ्याम् ।।६२।।

चरणनलिनयुग्मं पङ्कजैः पूजयित्वा कनककमलमालां कण्ठदेशेऽर्पयित्वा ।
शिरसि विनिहितोऽयं रत्नपुष्पाञ्जलिस्ते हृदयकमलमध्ये देवि हर्षन्तनोतु ।।६३।।

अथ मणिमयमञ्चकाभिरामे द्युतिमति पुष्पवितानराजमाने ।
प्रसरदगरुधूपैर्धूपितेऽस्मिन् भगवति वासगृहेऽस्तु ते निवासः ।।६४।।

एतस्मिन् मणिखचिते सुवर्णपीठे त्रैलोक्याभयवरदौ निधाय पादौ ।
विस्तीर्णे मृदुलतरच्छदेऽस्मिन् पर्यङ्के कनकमये निषीद मातः ।।६५।।

तव देवि सरोजचिह्नयोः पदयोर्निर्जितपद्मरागयोः ।
अतिरक्ततरैरलक्तकैः पुनरुक्तां रचयामि रक्तताम् ।।६६।।
अथ मातरुशीरवासितं निजताम्बूलरसेन राजिताम् ।
तपनीयमये हि पात्रके मुखगण्डूषजलं विधीयताम् ।।६७।।
क्षणमथ जगदम्ब मञ्चकेऽस्मिन् मृदुतरतूलिकया विराजमाने ।
अतिमहति मुदा निजेच्छया त्वं सुखशयनं कुरु मां हृदि स्मरन्ती ।।६८।।
मुक्ताकुन्देन्दुगौरां मणिमयमुकुटां रत्नताटङ्कयुक्ता-
मक्षस्रक्पुष्पहस्तामभयवरकरां चन्द्रचूडां त्रिनेत्राम् ।
नानालङ्कारयुक्तां सुरमुकुटलसद्द्योतितस्वर्णपीठां
सानन्दां सुप्रसन्नां त्रिभुवनजननीं चेतसा चिन्तयामि ।।६९।।
एषा भक्त्या तव विरचिता या मया देवि पूजा
स्वीकृत्यैनां सपदि सकलान् मेऽपराधान् क्षमस्व ।
न्यूनं यत्तत्तव करुणया पूर्णतामेतु सद्यः
सानन्दम्मे हृदयकमले तेऽस्तु नित्यं निवासः ।।७०।।
पूजामिमां पठेत् प्राज्ञः पूजाकर्तुमनीश्वरः ।
पूजाफलमवाप्नोति वाञ्छितार्थांश्च विन्दति ।।७१।।
प्रत्यहं भक्तियुक्तो यो देवीपूजामिमां पठेत् ।
वाग्वादिन्याः प्रसादेन वत्सरात्स कविर्भवेत् ।।७२।।



## २९. श्रीमत्त्रिपुरसुन्दरीमानसपूजास्तोत्रम्

[ यह भगवान् भाष्यकार श्रीमच्छङ्कराचार्य प्रणीत पराम्बा का बृहद् मानस-पूजा-स्तोत्र है। बाह्य सपर्या-संसाधनों के अभाव में मानस-पूजा का विधान है। प्रस्तुत स्तोत्र में भगवती के समस्त राजोपचार वर्णित हैं। इस स्तोत्र के पाठ से भगवती की सपर्या पूर्ण हो जाती है तथा कुछ भी अवशिष्ट नहीं रह जाता है।]

मम न भजनशक्तिः पादयोस्ते न भक्तिर्न च विषयविरक्तिर्ध्यानयोगे न सक्तिः ।
इति मनसि सदाऽहं चिन्तयन्नाद्यशक्ते रुचिरवचनपुष्पैरर्चनं सञ्चिनोमि ।।१।।

व्याप्तं हाटकविग्रहैर्जलधरैरारूढदेवव्रजैः
पोतैराकुलितान्तरं मणिधरैर्भूमीधरैर्भूषितम् ।
आरक्तामृतसिन्धुमुद्धुरचलद्वीचीजलव्याकुल-
व्योमानं परिचिन्त्य सन्ततमहो चेतः कृतार्थीभव ।।२।।

तस्मिन्नुज्ज्वलरत्नजालविलसत्कान्तिच्छटाभिः स्फुटं
कुर्वाणं वियदिन्द्रचापनिचयैराच्छादितं सर्वतः ।
उच्चैः श्रृङ्गनिषण्णदिव्यवनितावृन्दाननप्रोल्लसद्-
गीताकर्णननिश्चलाखिलमृगं द्वीपं नमस्कुर्महे ।।३।।

जातीचम्पकपाटलादिसुमनस्सौरभ्यसम्भावितं
ह्रींकारध्वनिकण्ठकोकिलकुहूप्रोल्लासिचूतद्रुमम् ।
आविर्भूतसुगन्धिचन्दनवनं दृष्टिप्रियं नन्दनं
चञ्चच्चञ्चलचञ्चरीकचटुलं चेतश्चिरं चिन्तये ।।४।।

परिपतितपरागैः पाटलक्षोणिभागो
वि कसितकुसुमोच्चैः पीतचन्द्रार्करश्मिः ।
अलिशुकपिकराजीकूजितैः श्रोत्रहारी
स्फुरतु हृदि मदीये नूनमुद्यानराजः ।।५।।

रम्यद्वारपुरप्रचारतमसां संहारकारिप्रभ-
स्फूर्जत्तोरणभारहारकमहाविस्तारहारद्युते ।
क्षोणीमण्डलहेमहारविलसत्संसारपारप्रद-
प्रोद्यद्भक्तमनोविहारकनकप्राकार तुभ्यं नमः ।।६।।

उद्यत्कान्तिकलापकल्पितनभः स्फूर्जद्वितानप्रभः
सत्कृष्णागरुधूपवासितवियत्काष्ठान्तरे विद्युतः ।
सेवायातसमस्तदैवतगणैरासेव्यमानोऽनिशं
सोऽयं श्रीमणिमण्डपोऽनवरतं मच्चेतसि द्योतताम् ।।७।।

क्वाऽपि प्रोद्भटपद्मरागकिरणव्रातेन सन्ध्यायितं
कुत्राऽपि स्फुटविस्फुरन्मरकतद्युत्या तमिस्रायितम् ।
मध्यालम्बिविशालमौक्तिकरुचा ज्योत्स्नायितं कुत्रचि-
न्मातः श्रीमणिमन्दिरं तव सदा वन्दामहे सुन्दरम् ।।८।।

उत्तुङ्गालयविस्फुरन्मरकतप्रोद्यत्प्रभामण्डला
न्यालोक्याङ्कुरितोत्सवैर्नवतृणाकीर्णस्थलीशङ्कया।
नीतो वाजिभिरुत्पथं बत रथस्सूतेन तिग्मद्युते-
र्वल्गावल्गितहस्तमस्तशिखरं कष्टैरितः प्राप्यते।।९।।

मणिसदनसमुद्यत्कान्तिधारानुरक्ते वियति चरमसंध्याशंकिनो भानुरथ्याः।
शिथिलितगतकुप्यत्सूतहुंकारनादैः कथमपि मणिगेहादुच्चकैरुच्चलन्ति।।१०।।

भक्त्या किन्तु समर्पितानि बहुधा रत्नानि पाथोधिना
किं वा रोहणपर्वतेन सदनं यैर्विश्वकर्माऽकरोत् ।
आज्ञातं गिरिजे कटाक्षकलया नूनं त्वया तोषिते
शम्भौ नृत्यति नागराजफणिना कीर्णा मणिश्रेणयः।।११।।

विदूरमुक्तवाहनैर्विनम्रमौलिमण्डलै-
र्निबद्धहस्तसम्पुटैः प्रयत्नसंयतेन्द्रियैः ।
विरिञ्चिविष्णुशङ्करादिभिर्मुदा तवाऽम्बिके
प्रतीक्ष्यमाणनिर्गमो विभाति रत्नमण्डपः ।।१२।।

ध्वनन्मृदङ्गकाहलः प्रगीतकिन्नरीगणः प्रनृत्तदिव्यकन्यकः प्रवृत्तमङ्गलक्रमः ।
प्रकृष्टसेवकव्रजः प्रहृष्टभक्तमण्डलो मुदे ममाऽस्तु सन्तं त्वदीयरत्नमण्डपः ।।१३।।

प्रवेशनिर्गमाकुलैः स्वकृत्यरत्नमानसैः बहिःस्थितामरावलीविधीयमानभक्तिभिः ।
विचित्रवस्त्रभूषणैरुपेतमङ्गनाजनैः सदा करोतु मङ्गलं ममेह रत्नमण्डपः ।।१४।।

सुवर्णरत्नभूषितैर्विचित्रवस्त्रधारिभिः गृहीतहेमयष्टिभिर्निरुद्धसर्वदैवतैः ।
असंख्यसुन्दरीजनैः पुरःस्थितैरधिष्ठितो मदीयमेतु मानसं त्वदीयतुङ्गतोरणः ।।१५।।

इन्द्रादींश्च दिगन्तरान्सहपरीवारानथो सायुधान्
योषिद्रूपधरान्स्वदिक्षु निहितान्सञ्चिन्त्य हृत्पङ्कजे।
शंखे श्रीवसुधारया वसुमतीयुक्तश्च पद्मं स्मरन्
कामं नौमि रतिप्रियं सहचरं प्रीत्यां वसन्तं भजे।।१६।।

गायन्तीः कलवीणयाऽतिमधुरं हुंकारमातन्वती-
र्द्वाराभ्यासकृतस्थितीरिह सरस्वत्यादिकाः पूजयन् ।
द्वारे नौमि मदोन्मदं सुरगणाधीशं मदेनोन्मदां
मातङ्गीमसिताम्बरां परिलसन्मुक्ताविभूषां भजे ।।१७।।

कस्तूरिकाश्यामलकोमलाङ्गी कादम्बरीपानमदालसाङ्गीम्।
वामस्तनालिङ्गितरत्नवीणां मातङ्गकन्यां मनसा स्मरामि।।१८।।

विकीर्णचिकुरोत्करे विगलिताम्वराडम्बरे
मदाकुलितलोचने विमलभूषणोद्भासिनी ।
तिरस्करिणि ! तावकं चरणपङ्कजं चिन्तयन्
करोमि पशुमण्डलीमलिकमोहदुग्धाशयाम् ।।१९।।

प्रमत्तवारुणीरसैर्विघूर्णमानलोचनाः
प्रचण्डदैत्यसूदनाः प्रविष्टभक्तमानसाः ।
उपोढकज्जलच्छविच्छटाविराजिविग्रहाः
कपालशूलधारिणीः स्तुवे त्वदीय दूतिकाः।।२०।।

स्फूर्जन्नव्ययवाङ्कुरोपलसिताभोगैः पुरःस्थापितैः
दीपोद्भासिशरावशोभितमुखैः कुम्भैर्नवैः शोभिता ।
स्वर्णाबद्धविचित्ररत्नपटलीचञ्चत्कपाटश्रिया
युक्तं द्वारचतुष्टयेन गिरिजे वन्दे मणीमन्दिरम् ।।२१।।

आस्तीर्णारुणकम्बलासनयुतं पुष्पोपहारान्वितं
दीप्तानेकमणिप्रदीपसुभगं राजद्वितानोत्तमम् ।
धूपोद्गारिसुगन्धिसम्भ्रममिलद्भृङ्गावलीगुञ्जितं
कल्याणं वितनोतु मेऽनवरतं श्रीमण्डपाभ्यन्तरम् ।।२२।।

कनकरचिते पञ्चप्रेतासनेन विराजिते
मणिगणचिते रक्तश्वेताम्बरास्तरणोत्तमे ।
कुसुमसुरभौ तल्पे दिव्योपधानसुखावहे
हृदयकमले प्रादुर्भूतां भजे परदेवताम् ।।२३।।

सर्वाङ्गस्थितिरम्यरूपरुचिरां प्रातः समभ्युत्थितां
जृम्भामञ्जुमुखाम्बुजां मधुमदव्याघूर्णदक्षत्रयाम्।
सेवायातसमस्तसन्निधिसखीस्सम्मानयन्तीं दृशा
सम्पश्यन् परदेवतां परमहो मन्ये कृतार्थं जनुः।।२४।।

उच्चैस्तोरणवर्तिवाद्यनिवहध्वाने समुज्जृम्भिते
भक्तैर्भूमिविलग्नमौलिभिरलं दण्डप्रणामे कृते ।
नानारत्नसमूहनद्धकथनस्थालीसमुद्भासितां
प्रातस्ते परिकल्पयामि गिरिजे नीराजनामुज्ज्वलाम् ।।२५।।

पाद्यं ते परिकल्पयामि पदयोरर्घ्यं तथा हस्तयोः
सौधीभिर्मधुपर्कमम्ब मधुरं धाराभिरास्वादय ।
तोयेनाचमनं विधेहि शुचिना गाङ्गेन मत्कल्पितं
साष्टाङ्गप्रणिपातमीशदयिते दृष्ट्या कृतार्थीकुरु ।।६।।

मातः पश्य मुखम्बुजं सुविमले दत्ते मया दर्पणे
देवि स्वीकुरु दन्तधावनमिदं गङ्गाजलेनान्वितम् ।
सुप्रक्षालितमाननं विरचयन्स्निग्धाम्बरप्रोञ्छनं
द्रागङ्गीकुरु तत्त्वमम्ब मधुरं ताम्बूलमास्वादय ।।२७।।

निधेहि मणिपादुकोपरि पदाम्बुजं मज्जना-
लयं व्रज शनैः सखीकृतकराम्बुजालम्बनम् ।
महेशि करुणानिधे तव दृगन्तपातोत्सुकान्
विलोकय मनागमूनुभयसंस्थितान्दैवतान् ।।२८।।

हेमरत्नवरणेन वेष्टितं विस्तृतारूणवितानशोभितम् ।
सज्जसर्वपरिचारिकाजनं पश्य मज्जनगृहं मनो मम ।।२९।।

कनककलशजालस्फाटिकस्नानपाना-
द्युपकरणविशालं गन्धमत्तालिमालम् ।
स्फुरदरुणवितानं मञ्जुगन्धर्वगानं
परमशिवमहेले मज्जनागारमेहि ।।३०।।

पीनोत्तुङ्गपयोधरा परिलसत्सम्पूर्णचन्द्रानना
रत्नस्वर्णविनिर्मिताः परिलसत्सूक्ष्माम्बरप्रावृताः ।
हेमस्नानघटीस्तथा मृदुपटीरुद्वर्तनं कौसुमं
तैलं कङ्कतिकां करेषु दधतीर्वन्देऽम्ब ते दासिकाः ।।३१।।

तत्र स्फाटिकपीठमेत्य शनकैरुत्तारितालङ्कृति-
र्नीचैरुज्झितकञ्चुकोपरिहिता रक्तोत्तरीयाम्बरा ।
वेणीबन्धमपास्य कङ्कतिकया केशप्रसादं मना-
क्कुर्वाणा परदेवता भगवती चित्ते मम द्योतताम् ।।३२।।

अभ्यङ्गं गिरिजे गृहाण मृदुना तैलेन सम्पादितं
काश्मीरैरगरुद्रवैर्मलयजैरुद्वर्तनं कारय ।
गीते किन्नरकामिनीभिरभितो वाद्ये मुदावादिते
नृत्यन्तीमिह पश्य देवि पुरतो दिव्याङ्गनामण्डलीम् ।।३३।।

कृतपरिकरबन्धास्तुङ्गपीनस्तनाढ्या
मणिनिवहनिबद्धा हेमकुम्भीर्दधानाः ।
सुरभिसलिलनिर्यद्गन्धलुब्धालिमालाः
सविनयमुपतस्थुस्सर्वतः स्नानदास्य ।।३४।।

उद्गन्धैरगरुद्रवैस्सुरभिणा कस्तूरिकावारिणा
स्फूर्जत्सौरभयक्षकर्दमजलैः काश्मीरनीरैरपि ।
पुष्पाम्भोभिरशेषतीर्थसलिलैः कर्पूरपाथोभरैः
स्नानं ते परिकल्पयामि गिरिजे भक्त्या तदङ्गीकुरु ।।३५।।

प्रत्यङ्गं परिमार्जयामि शुचिना वस्त्रेण संप्रोञ्छनं
कुर्वे केशकलापमायततरं धूपोत्तमैर्धूपितम् ।
आलीवृन्दविनिर्मितां यवनिकामास्थाय रत्नप्रभं
भक्तत्राणपरे महेशगृहिणि स्नानाम्बरं मुच्यताम् ।।३६।।

पीतं ते परिकल्पयामि निबिडं चण्डातकं चण्डिके
सूक्ष्मं स्निग्धमुरीकुरुष्व वसनं सिन्दूरपूरप्रभम् ।
मुक्तारत्नविचित्रहेमरचनाचारुप्रभाभास्वरं
नीलं कञ्चकमर्पयामि गिरिशप्राणप्रिये सुन्दरि ।।३७।।

विलुलितचुकुरेण च्छादितांशप्रदेशे
मणिनिकरविराजत्पादुकान्यस्तपादे ।
सुललितमवलम्ब्य द्राक्सखीमंशदेशे
गिरिशगृहिणि भूषामण्डपाय प्रयाहि ।।३८।।

लसत्कनककुट्टिमस्फुरदमन्दमुक्तावली
समुल्लसितकान्तिभिः कलितशक्रचापव्रजे ।
महाभरणमण्डपे निहितहेमसिंहासनं
सखीजनसमावृतं समधितिष्ठ कात्यायनि ।।३९।।

स्निग्धं कङ्गतिकामुखेन शनकैस्संशोध्य केशोत्करं
सीमन्तं विरचय्य चारु विमलं सिन्दूररेखान्वितम् ।
मुक्ताभिर्ग्रथितालकां मणिचितैस्सौवर्णसूत्रैः स्फुटं
प्रान्ते मौक्तिकगुच्छकोपलतिकां ग्रथ्नामि वेणीमिमाम् ।।४०।।

विलम्बिवेणीभुजगोत्तमाङ्गस्फुरन्मणिभ्रान्तमुपानयन्तम् ।
स्वरोचिषोल्लासितकेशपाशं महेशि चूडामणिमर्पयामि ।।४१।।

त्वामाश्रयद्भिः कबरीतमिस्रैर्बन्दीकृतं द्रागिव भानुबिम्बम् ।
मृडानि ! चूडामणिमादधानं वन्दामहे तावकमुत्तमाङ्गम् ।।४२।।

स्वमध्यनद्धहाटकस्फुरन्मणिप्रभाकुलं
विलम्बिमौक्तिकच्छटाविराजितं समन्ततः ।
निबद्धलक्षचक्षुषा भवेन भूरि भावितं
समर्पयामि भास्वरं भवानि फालभूषणम् ।।४३।।

मीनाम्भोरुहखञ्जरीटसुषमा विस्तारविस्मारके
कुर्वाणे किल कामवैरिमनसः कन्दर्पबाणप्रभाम् ।
माध्वीपानमदारुणेऽतिचपले दीर्घे दृगम्भोरुहे
देवि ! स्वर्णशलाकयोर्जितमिदं दिव्याञ्जनं दीयताम् ।।४४।।

मध्यस्थारुणरत्नकान्तिरुचिरां मुक्तामुखोद्भासितां
देवाद्भार्गवजीवमध्यगरवेर्लक्ष्मीमधः कुर्वतीम् ।
उत्सिक्ताधरबिम्बकान्तिविसरैर्भौमीभवन्मौक्तिकां
मद्दत्तामुररीकुरुष्व गिरिजे नासाविभूषामिमाम् ।।४५।।

उडुकृतपरिवेषस्पर्द्धया शीतभानो-
रिवविरचितदेहद्वन्द्वमादित्यबिम्बम् ।
अरुणमणिसमुद्यत्प्रान्तविभ्राजिमुक्तं
श्रवसि परिनिधेहि स्वर्णताटङ्कयुगमम् ।।४६।।

मरकतवरपद्मरागहीरोत्थितगुलिकात्रितयावनद्धमध्यम् ।
विततविमलमौक्तिकञ्च कण्ठाभरणमिदं गिरिजे समर्पयामि ।।४७।।

नानादेशसमुत्थितैर्मणिगणप्रोद्यत्प्रभामण्डल-
व्याप्तैराभरणैर्विराजितगलां मुक्ताच्छटालङ्कृताम् ।
मध्यस्थारुणरत्नकान्तिरुचिरां प्रान्तस्थमुक्ताफल-
व्रातामम्ब चतुष्किकां परशिवे वक्षःस्थले स्थापय ।।४८।।

अन्योन्यं प्लावयन्ती सततपरिचलत्कान्तिकल्लोलजालैः
कुर्वाणा मज्जदन्तःकरणविमलतां शोभितेव त्रिवेणी ।
मुक्ताभिः पद्मरागैर्मरकतमणिभिर्निर्मिता दीप्यमानै-
र्नित्यं हारत्रयी ते परशिवरसिके चेतसि द्योततां नः ।।४९।।

करसरसिजनाले विस्फुरत्कान्तिजाले
विलसदमलशोभे चञ्चदीशाक्षिलोभे ।
विविधमणिमयूखोद्भासितं देवि दुर्गे
कनककटकयुग्मं बाहुयुग्मे निधेहि ।।५०।।

व्यालम्बमानसितपट्टकगुच्छशोभि स्फूर्जन्मणीघटितहारविरोचमानम्।
मातर्महेशमहिले तव बाहुमूले केयूरकद्वयमिदं विनिवेदयामि ।।५१।।

विततनिजमयूखैर्निर्मितामिन्द्रनीलैः
विजितकमलनालालीनमत्तालिमालाम् ।
मणिगणखचिताभ्यां कङ्कणाभ्यामुपेतां
कलय वलयराजीं हस्तमूले महेशि ।।५२।।

नीलपट्टमृदुगुच्छशोभितां बद्धनैकमणिजालमञ्जुलाम्।
अर्पयामि वलयात्पुरःसरे विस्फुरत्कनकतैतृपालिकाम्।।५३।।

आलवालमिव पुष्पधन्वना बालविद्रुमलतासु निर्मितम् ।
अङ्गुलीषु विनिधीयतां शनैरङ्गुलीयकमिदं मदर्पितम् ।।५४।।

विजितहरमनोभूमत्तमातङ्गकुम्भस्थलविलुलितकूजत्किङ्किणीजालतुल्याम् ।
अविरितकलनादैरीशचेतो हरन्तीं विविधमणिनिबद्धां मेखलामर्पयामि ।।५५।।

व्यालम्बमानवरमौक्तिकगुच्छशोभि विभ्राजिहाटकपुटद्वयरोचमानम्।
हेम्ना विनिर्मितमनेकमणिप्रबन्धं नीवीनिबन्धनगुणं विनिवेदयामि।।५६।।

विनिहतनवलाक्षापङ्कबालातपौघे
मरकतमणिराजीमञ्जुमञ्जीरघोषे ।
अरुणमणिसमुद्यत्कान्तिधाराविचित्र-
स्तव चरणसरोजे हंसकः प्रीतिमेतु ।।५७।।

निबद्धशितिपट्टकप्रवरगुच्छसंभोभितां
कलक्वणितमञ्जुलां गिरिशचित्तसंमोहिनीम् ।
अमन्दमणिमण्डलीविमलकान्तिकिम्मीरितां
निधेहि पदपङ्कजे कनकघुङ्घुरूनम्बिके ! ।।५८।।

विस्फुरत्सहजरागरञ्जिते शिञ्जितेन कलितां सखीजनैः ।
पद्मरागमणिनूपुरद्वयीमर्पयामि तव पादपङ्कजे ।।५९।।

पादाम्बुजमुपासितं परिगतेन शीतांशुना
कृतां तनुपरस्परामिव दिनान्तरागारुणाम् ।
महेशि नवयावकद्रवभरेण शोणीकृतां
नमामि नखमण्डलीं चरणपङ्कजस्थां तव ।।६०।।

आरक्तश्वेतपीतस्फुरदुरुकुसुमैश्चित्रितां पट्टसूत्रै-
र्देवस्त्रीभिः प्रयत्नागरुसमुदितैर्धूपितां दिव्यधूपैः ।
उद्यद्गन्धान्धपुष्पन्धयनिवहसमारब्धझङ्कारगीतां
चञ्चत्कह्लारमालां परिपरशिवरसिके कण्ठपीठेऽर्पयामि ।।६१।।

गृहाण परमामृतं कनकपात्रसंस्थापितं
समर्पय मुखाम्बुजे विमलवीटिकामम्बिके।
विलोकय मुखाम्बुजं मुकुरमण्डले निर्मले
निधेहि मणिपादुकोपरि पदाम्बुजं सुन्दरि।।६२।।

आलम्ब्य स्वसखीं करेण शनकैस्सिंहासनादुत्थिता
कूजन्मन्दमरालमञ्जुलगतिप्रोल्लासिभूषाम्बरा ।
आनन्दप्रतिपादकैरुपनिषद्वाक्यैः स्तुता वेधसा
मच्चित्ते स्थिरतामुपैतु गिरिजा यान्ती सभामण्डपम् ।।६३।।

चलन्त्याम्बायां प्रचलति समस्ते परिजने
सवेगं संयाते कनकलतिकालङ्कृतिभरे ।
समन्तादुत्तालस्फुरितपदसम्पातजनितै-
र्झणत्कारैस्तारैर्झणितिमासीन्मणिगृहम् ।।६४।।

चञ्चद्वेत्रकराभिरङ्गविलसद्भूषाम्बराभिः पुरो-
यान्तीभिः परिचारिकाभिरमरव्राते समुत्सारिते ।
रुद्धे निर्जरसुन्दरीभिरभितः कक्षान्तरे निर्गतं
वन्दे नन्दितशम्भुनिर्मलचिदानन्दैकरूपं महः ।।६५।।

वेधाः पादतले पतत्ययमसौ विष्णुर्नमत्यग्रतः
शम्भुर्देहि दृगञ्चलं सुपरतिं दूरस्थमालोकय ।
इत्येवं परिचारिकाभिरुदिते सम्माननां कुर्वती
दृग्द्वन्द्वेन यथोचितं भगवती भूयाद्विभूत्यै मम ।।६६।।

मन्दं चारणसुन्दरीभिरभितो यान्तीभिरुत्कण्ठया
नामोच्चारणपूर्वकं प्रतिदिशं प्रत्येकमावेदितान् ।
वेगादक्षिपथं गतान् सुरगणानालोकयन्ती शनै-
र्दित्सन्ती चरणाम्बुजं पथि जगत्पायन्महेशप्रिया ।।६७।।

अग्रे केचन पार्श्वयोः कतिपये पृष्ठे परे प्रस्थिता
आकाशे समवस्थिताः कतिपये दिक्षु स्थिताश्चाऽपरे।
सम्मर्दं शनकैरपास्य पुरतो दण्डप्रणामान्मुहुः
कुर्वाणाः कतिचित्सुराः गिरिसुते दृक्पातमिच्छन्ति ते।।६८।।

अग्रे गायति किन्नरी कलपदं गन्धर्वकान्ताश्शनै-
रातोद्यानि च वादयन्ति मधुरं सव्यापसव्यस्थिताः ।
कूजन्नूपुरवादमञ्जु पुरतो नृत्यन्ति दिव्याङ्गना
गच्छन्तः परितः स्तुवन्ति निगमस्तुत्यां विरिञ्च्यादयः ।।६९।।

कस्मैचित्सुचिरादुपासितमहामन्त्रौघसिद्धिं क्रमा-
देकस्मै भवनिःस्पृहाय परमानन्दस्वरूपां गतिम् ।
अन्यस्मै विषयानुरक्तमनसे दीनाय दुःखापहं
द्रव्यं द्वारसमाश्रिताय ददतीं वन्दामहे सुन्दरम् ।।७०।।

नम्रीभूय कृताञ्जलिप्रकटितप्रेमप्रसन्नानने
मन्दं गच्छति सन्निधौ सविनयात्सोत्कण्ठमोघत्रये ।
नानामन्त्रगणं तदर्थमखिलं तत्साधनं तत्फलं
व्याचक्षाणमुदग्रकान्ति कलये यत्किञ्चिदाद्यं महः ।।७१।।

तव दहनसदृक्षैरीक्षणैरेव चक्षु-
र्निखिलपशुजनानां भीषयद्भीषणास्यम् ।
कृतवसति परेशप्रेयसि द्वारि नित्यं
शरभमिथुनमुच्चैर्भक्तियुक्तो नतोऽस्मि ।।७२।।

कल्पान्ते सरसैकदासमुदितानेकार्कतुल्यप्रभां
रत्नस्तम्भनिबद्धकाञ्चनगुणस्फूर्जद्वितानोत्तमाम् ।।
कर्पूरागरुगर्भवर्तिकलिकाप्राप्तप्रदीपावलीं
श्रीचक्राकृतिमुल्लसन्मणिगणां वन्दामहे वेदिकाम् ।।७३।।

स्वस्थानस्थितदेवतागणवृते बिन्दौ मुदा स्थापितं
नानारत्नविराजिहेमविलसत्कान्तिच्छटादुर्दिनम् ।
चञ्चत्कौसुमतूलिकासनयुतं कामेश्वराधिष्ठितं
नित्यानन्दनिदानमम्ब ! सततं वन्दे च सिंहासनम् ।।७४।।

वदद्भिरभितो मुदा जय जयेति वृन्दारकैः
कृताञ्जलिपरम्परा विदधती कृतार्था दृशा।
अमन्दमणिमण्डलीखचितहेमसिंहासनं
सखीजनसमावृतं समधितिष्ठ दाक्षायणि !।।७५।।

कर्पूरादिकवस्तुजातमखिलं सौवर्णभृङ्गारकं
ताम्बूलस्य करण्डकं मणिमयं चैलाञ्चलं दर्पणम्।
विस्फूर्जन्मणिपादुके च दधतीः सिंहासनस्याभित-
स्तिष्ठन्तीः परिचारिकास्तव सदा वन्दाहमे सुन्दरि।।७६।।

त्वदमलवपुरुद्यत्कान्तिकल्लोलजालैः
स्फुटमिव दधतीभिर्बाहुविक्षेपलीलाम् ।
मुहुरपि च विधूते चामरग्राहिणीभिः
सितकरकरशुभ्रे चामरे चालयामि ।।७७।।

प्रान्तस्फुरद्विमलमौक्तिकगुच्छजालं
चञ्चन्महामणिविचित्रितहेमदण्डम् ।
उद्यत्सहस्रकरमण्डलचारुहेमच्छत्रं
महेशमहिले विनिवेशयामि ।।७८।।

उद्यत्तावकदेहकान्तिपटलीसिन्दूरपूरप्रभा-
शोणीभूतमुदग्रलोहितमणिच्छेदानुकारिच्छवि।
दूरादादरनिर्मिताञ्जलिपुटैरालोक्यमानं सुर-
व्यूहैः काञ्चनमातपत्रमतुलं वन्दामहे सुन्दरम्।।७९।।

सन्तुष्टां परमामृतेन विलसत्कामेश्वराङ्कस्थितां
पुष्पौघैरभिपूजितां भगवतीं त्वां वन्दमाना मुदा।
स्फूर्जत्तावकदेहरश्मिकलनाप्राप्तस्वरूपाभिदाः
श्रीचक्रावरणस्थितास्सविनयं वन्दामहे देवताः।।८०।।

आधारशक्त्यादिकमाकलय्य मध्ये समस्ताधिकयोगिनीं च ।
मित्रेशनाथादिकमत्र नाथ-चतुष्टयं शैलसुते नतोऽस्मि ।।८१।।

त्रिपुरासुधार्णवासनमारभ्य त्रिपुरमालिनी यावत् ।
आवरणाष्टकसंस्थितमासनषट्कं नमामि परमेशि ! ।।८२।।

ईशाने गणपं स्मरामि विचरद्विघ्नान्धकारच्छिदं
वायव्ये बटुकञ्च कज्जलरुचिं व्यालोपवीतान्वितम् ।
नैर्ऋत्ये महिषासुरप्रमथिनीं दुर्गाञ्च सम्पूजय-
न्नाग्नेयेऽखिलभक्तरक्षणपरं क्षेत्राधिनाथं भजे ।।८३।।

उड्ड्याणजालन्धरकामरूपपीठानिमान्पूर्णगिरिप्रसक्तान् ।
त्रिकोणदक्षाग्रिमसव्यभागमध्यस्थतान् सिद्धिकरान्नमामि ।।८४।।

लोकेशः पृथिवीपतिर्निगदितो विष्णुर्जलानां प्रभु-
स्तेजोनाथ उमापतिश्च मरुतामीशस्तथा चेश्वरः ।
आकाशाधिपतिस्सदाशिव इति प्रेताभिधामागता-
नेतांश्चक्रबहिःस्थितान्सुरगणान्वन्दामहे सादरम् ।।८५।।

तारानाथकलाप्रवेशनिगमव्याजाद्गतासुप्रथं
त्रैलोक्ये तिथिषु प्रवर्तितकलाकाष्ठादिकालक्रमम् ।
रत्नालङ्कृतिचित्रवस्त्रललितं कामेश्वरीपूर्वकं
नित्याषोडशकं नमामि लसितं चक्रात्मनोरन्तरे ।।८६।।

हृदि भावितदैवतं प्रयत्नाभ्युपदेशानुगृहीतभक्तसङ्गम् ।
स्वगुरुक्रमसंज्ञचक्रराजस्थितमोघत्रयमानतोऽस्मि मूर्ध्ना ।।८७।।

हृदयमथ शिरःशिखाखिलाद्ये कवचमयो नयनत्रयञ्च देवि !
मुनिजनपरिचिन्तितं तथाऽस्त्रं स्फुरतु सदा हृदये षडङ्गमेतत् ।।८८।।

त्रैलोक्यमोहनमिति प्रथिते तु चक्रे चञ्चद्विभूषणगणत्रिपुराधिवासे ।
रेखात्रये स्थितवतीरणिमादिसिद्धीर्मुद्रा नमामि सततं प्रकटाभिधास्ताः ।।८९।।

सर्वाशापरिपूरके वसुदलद्वन्द्वेन विभ्राजिते
विस्फूर्जत्त्रिपुरेश्वरीनिवसतौ चक्रे स्थिता नित्यशः ।
कामाकर्षणिकादयो मणिगणभ्राजिष्णुदिव्याम्बरा
योगिन्यः प्रदिशन्तु कांक्षितफलं विख्यातगुप्ताभिधाः ।।९०।।

महेशि ! वसुभिर्दलैर्लसति सर्वसंक्षोभणे
विभूषणगणस्फुरत्त्रिपुरसुन्दरीसद्मनि ।
अनङ्गकुसुमादयो विविधभूषणोद्भासिता
दिशन्तु मम कांक्षितं तनुतराश्च गुप्ताभिधाः ।।९१।।

लसद्युगदशारके स्फुरति सर्वसौभाग्यदे
शुभाभरणभूषितत्रिपुरवासिनीमन्दिरे ।
स्थिता दधतु मङ्गलं सुभगसर्वसंक्षोभिणी
मुखास्सकलसिद्धयो विदितसम्प्रदायाभिधाः ।।९२।।

बहिर्दशारे सर्वार्थसाधके त्रिपुराश्रयाः ।
कुलकौलाभिधाः पान्तु सर्वसिद्धिप्रदायिकाः ।।९३।।

अन्तःशोभिदशारकेऽतिललिते सर्वादिरक्षाकरे
मालिन्या त्रिपुराद्या विरचितावासे स्थितं नित्यशः ।
नानारत्नविभूषणं मणिगणभ्राजिष्णु दिव्याम्बरं
सर्वज्ञादिकशक्तिवृन्दमनिशं वन्दे निगर्भाभिधम् ।।९४।।

सर्वरोगहरेऽष्टारे त्रिपुरासिद्धयान्विते ।
रहस्ययोगिनीर्नित्यं वशिन्याद्या नमाम्यहम् ।।९५।।

चूताशोकविकासिकेतकरजःप्रोद्भासिनीलाम्बुज-
प्रस्फुर्जन्नवमल्लिकासमुदितैः पुष्पैः शरन्निर्मितान्।
रम्यं पुष्पशरासनं सुललितं पाशं तथा चाङ्कुशं
वन्दे तावकमायुधं परशिवे चक्रान्तराले स्थितम्।।९६।।

त्रिकोण उदितप्रभे जगति सर्वसिद्धिप्रदे ।
युते त्रिपुरयाम्बया स्थितवती च कामेश्वरी ।
तनोतु मम मङ्गलं सकलशर्म वज्रेश्वरी
करोतु भगमालिनी स्फुरतु मामके चेतसि ।।९७।।

सर्वानन्दमये समस्तजगतामाकाङ्क्षिते बैन्दवे
भैरव्या त्रिपुराद्यया विरचितावासे स्थिता सुन्दरी ।
आनन्दोल्लसितेक्षणा मणिगणभ्राजिष्णु भूषाम्बरा
विस्फूर्जद्वदना परापररहः सा पातु मां योगिनी ।।९८।।

उल्लसत्कनककान्तिभासुरं सौरभस्फुरणवासिताम्बरम् ।
दूरतः परिहृतं मधुव्रतैरर्पयामि तव देवि! चम्पकम् ।।९९।।

वैरमुद्धतमपास्य शम्भुना मस्तके विनिहितं कलाच्छलात् ।
गन्धलुब्धमधुपाश्रितं सदा केतकीकुसुममर्पयामि ते ।।१००।।

चूर्णीकृतं द्रागिव पद्मजेन त्वदाननस्पर्धि सुधांशुबिम्बम् ।
समर्पयामि स्फुरमञ्जलिस्थं विकासिजातीकुसुमोत्तकं ते ।।१०१।।

अगरुबहलधूपाजस्रसौरभ्यरम्यां
मरकतमणिराजीराजिहारिस्रगाभाम् ।
दिशि विदिशि विसर्पद्गन्धलुब्धालिमालां
वकुलकुसुममालां कण्ठपीठेऽर्पयामि ।।१०२।।

ईकारोर्ध्वगबिन्दुराननमधो बिन्दुद्वयञ्च स्तनौ
त्रैलोक्ये गुरुगम्यमेतदखिलं हार्दञ्च रेखात्मकम् ।
इत्थं कामकलात्मिकां भगवतीमन्तस्समाराधय-
न्नानन्दाम्बुधिमज्जने प्रलभतामानन्दथुं सज्जनः ।।१०३।।

धूपं तेऽगरुसम्भवं भगवति! प्रोल्लासिगन्धोद्धुरं
दीपं चैव निवेदयामि महसा हार्दान्धकारच्छिदम् ।
रत्नस्वर्णविनिर्मितेषु परितः पात्रेषु संस्थापितं
नैवेद्यं विनिवेदयामि परमानन्दात्मिके सुन्दरि ।।१०४।।

जातीकोरकतुल्यमोदनमिदं सौवर्णपात्रे स्थितं
शुद्धान्नं शुचि मुद्गमाषचणकोद्भूतास्तथा सूपकाः ।
प्राज्यं माहिषमाज्यमुत्तममिदं हैयङ्गवीनं पृथक-
पात्रेषु प्रतिपादितं परशिवे तत्सर्वमङ्गीकुरु ।।१०५।।

शिम्बीसूरणशाकबिम्बबृहतीकूष्माण्डकोशातकी-
वृन्ताकानि पटोलकानि मृदुना संसाधितान्यग्निना ।
सम्पन्नानि च वेसवारविसरैर्दिव्यानि भक्त्या कृता-
न्यग्रे ते विनिवेदयामि गिरिजे सौवर्णपात्रव्रजे ।।१०६।।

निम्बूकार्द्रकचूतकन्दकदली कौशातकीकर्कटी-
धात्रीबिल्वकरीरकैर्विरचितान्यानन्दचिद्विग्रहे ।
राजीभिः कटुतैलसैन्धवहरिद्राभिः स्थितान्पातये
सन्धानानि निवेदयामि गिरिजे भूरिप्रकाराणि ते ।।१०७।।

सितयाञ्चितलड्डुकव्रजान्मृदुपूपान्मृदुलाश्च पूरिकाः ।
परमान्नमिदं च पार्वति! प्रणयेन प्रतिपादयामि ते ।।१०८।।

दुग्धमेतदनले सुसाधितं चन्द्रमण्डलनिभं तथा दधि ।
फाणितं शिखरिणीं सितासितां सर्वमम्ब विनिवेदयामि ते ।।१०९।।

अग्रे ते विनिवेद्य सर्वममितं नैवेद्यमङ्गीकृतं-
ज्ञात्वा तत्त्वचतुष्टयं प्रथमतो मन्ये सुतृप्तां ततः ।
देवीं त्वां परिशिष्टमम्ब कनकामत्रेषु संस्थापितं
शक्तिभ्यः समुपाहरामि सकलं देवेशि शम्भुप्रिये ।।११०।।

वामेन स्वर्णपात्रीमनुपमपरमान्नेन पूर्णां दधाना-
मन्येन स्वर्णदर्वीं निजजनहृदयाभीष्टदां धारयन्तीम् ।
सिन्दूरारक्तवस्त्रां विविधमणिलसद्भूषणां मेचकाङ्गीं
तिष्ठन्तीमग्रतस्ते मधुमदमुदितामन्नपूर्णां नमामि ।।१११।।

पङ्क्त्यपोविष्टान्परितस्तु चक्रे शक्त्या स्वया लिङ्गितवामभागान् ।
सर्वोपचारैः परिपूज्य भक्त्या तवाम्बिके पारिषदान्नमामि ।।११२।।

परमामृतमत्तसुन्दरीगणमध्यस्थितमर्कभासुरम् ।
परमामृतघूर्णितेक्षणं किमपि ज्योतिरुपास्महे परम् ।।११३।।

दृश्यते तव मुखाम्बुजं शिवे श्रूयते स्फुटमनाहतध्वनिः ।
अर्चने तव गिरामगोचरे न प्रयाति विषयान्तरं मनः ।।११४।।

त्वन्मुखाम्बुजविलोकनोल्लसत्प्रेमनिश्चलविलोचनद्वयीम्।
उन्मनीमुपगतां सभामिमां भावयामि परमेशि तावकीम्।।११५।।

चक्षुः पश्यतु नेह किञ्चन परं घ्राणं न वा जिघ्रतु
श्रोत्रं हन्त शृणोतु न त्वगपि न स्पर्शं समालम्बताम् ।
जिह्वा वेत्तु न वा रसं मम परं युष्मत्स्वरूपामृते
नित्यानन्दविघूर्णमाननयने नित्यं मनो मज्जतु ।।११६।।

यस्त्वां पश्यति पार्वति प्रतिदिनं ध्यानेन तेजोमयीं
मन्ये सुन्दरि तत्त्वमेतदखिलं वेदेषु निष्ठां गतम् ।
यस्तस्मिन्समये तवार्चनविधावानन्दसान्द्राशयो
यातोऽहं तदभिन्नतां परशिवे सोऽयं प्रसादस्तव ।।११७।।

गणाधिनाथं बटुकञ्च योगिनीः क्षेत्राधिनाथञ्च विदिक्चतुष्टये ।
सर्वोपचारैः परिपूज्य भक्तितो निवेदयामो बलिमुक्तयुक्तिभिः ।।११८।।

वीणामुपान्ते खलु वादयन्त्यै निवेद्य शेषं खलु शेषिकायै ।
सौवर्णभृङ्गारविनिर्गतेन जलेन शुद्धाचमनं विधेहि ।।११९।।

ताम्बूलं विनिवेदयामि विलसत्कर्पूरकस्तूरिका-
जातीपूगलवङ्गचूर्णखदिरैर्भक्त्या समुल्लासितम् ।
स्फूर्जद्रत्नसमुद्गकप्रणिहितं सौवर्णपात्रे स्थितै-
र्दीपैरुज्ज्वलमन्नचूर्णरचिततैरारार्तिकं गृह्यताम् ।।१२०।।

काचिद्गायति किन्नरी कलपदं वाद्यं दधानोर्वशी
रम्भा नृत्यति केलिमञ्जुलपदं मातः पुरस्तात्तव ।
कृत्यं प्रोज्झ्य सुरस्त्रियो मधुमदव्याघूर्णमानेक्षणं
नित्यानन्दसुधाम्बुधिं तव मुखं पश्यन्ति हृष्यन्ति च ।।१२१।।

ताम्बूलोद्भासिवक्त्रैस्त्वदमलवदनालोकनोल्लासिनेत्रै-
श्चक्रस्थैः शक्तिसङ्घैः परिहृतविषयासङ्गमाकर्ण्यमानम् ।
गीतज्ञाभिः प्रकामं मधुरसमुधरं वादितं किन्नरीभि-
र्वीणाझङ्कारनादं कलय परशिवानन्दसन्धानहेतोः ॥१२२॥

अर्चाविधौ ज्ञानलवोऽपि दूरे दूरे तदापादकवस्तुजातम् ।
प्रदक्षिणीकृत्य ततोऽर्चनं ते पञ्चोपचारात्मकमर्पयामि ॥१२३॥

यथेप्सितमनोगतप्रकटितोपचारार्चितां
निजावरणदेवतागणवृतां सुरेशस्थिताम् ।
कृताञ्जलिपुटो मुहुः कलितभूमिरष्टाङ्गकै-
र्नमामि भगवत्यहं त्रिपुरसुन्दरि त्राहि माम् ॥१२४॥

विज्ञप्तीरवधेहि मे सुमहता यत्नेन ते सन्निधिं
प्राप्तं मामिह कान्दिशीकमधुना मातर्न दूरीकुरु ।
चित्तं त्वत्पदभावने व्यभिचरेद्दृग्वाक्च मे जातु
चेत्तत्सौम्ये स्वगुणैर्बधान न यथा भूयो विनिर्गच्छति ॥१२५॥

क्वाहं मन्दमतिः क्व चेदमखिलैरेकान्तभक्तैः स्तुतं
ध्यातं देवि तथापि ते स्वमनसा श्रीपादुकापूजनम् ।
कादाचित्कमदीयचिन्तनविधौ सन्तुष्टया शर्मदं
स्तोत्रं देवतया तया प्रकटितं मन्ये मदीयानने ॥१२६॥

नित्यार्चनमिदं चित्ते भाव्यमानं सदा मया ।
निबद्धं विविधैः पद्यैरनुगृह्णातु सुन्दरी॥१२७॥

॥ इति त्रिपुरसुन्दरीमानसपूजास्तोत्रं समाप्तम् ॥

## ३०. *त्रिपुरसुन्दरी-स्तोत्रम्*

[ प्रस्तुत अष्टश्लोकी स्तोत्र श्रीमदादिशङ्कराचार्य भगवत्पाद द्वारा विरचित है। इसमें भगवती के विभिन्न स्वरूपों का निदर्शन कराया गया है। इसके नित्यपाठ से साधक का कल्याण-पथ प्रशस्त होता है तथा निर्वाण के अनन्तर सायुज्य मुक्ति प्राप्त होती है। ]

कदम्बवनचारिणीं मनुकदम्ब-कादम्बिनीं नितम्बजितभूधरां सुरनितम्बिनीसेविताम् ।
नवाम्बुरुह-लोचनामभिनवाम्बुद-श्यामलां त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ।।१।।
कदम्बवनवासिनीं कनक-वल्लकी-धारिणीं महार्हमणिहारिणीं मुखसमुल्लसद्वारुणीम् ।
दयाविभवकारिणीं विशदलोचनीं चारिणीं त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ।।२।।
कदम्बवनशालया कुचभरोल्लसन्मालया कुचोपमितशैलया गुरुकृपालसद्वेलया ।
मदारुणकपोलया मधुरगीतवाचालया कयाऽपि घननीलया कवचिता वयं लीलया ।।३।।
कदम्बवनमध्यागं कनकमण्डलोपस्थितां षडम्बुरुहवासिनीं सततसिद्धसौदामिनीम् ।
विडम्बितजपारुचिं विकचचन्द्रचूडामणिं त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ।।४।।
कुचाञ्चितविपञ्चिकां कुटिलकुन्तलाऽलङ्कृतां कुशेशयनिवासिनीं कुटिलचित्तविद्वेषिणीम् ।
मदारुणविलोचनां मनसिजारिसम्मोहिनीं मतङ्गमुनिकन्यकां मधुरभाषिणीमाश्रये ।।५।।
स्मेरप्रथमपुष्पिणीं रुधिर-बिन्दु-नीलाम्बरां गृहीतमधुपात्रिकां मधुविघूर्णनेत्राञ्चलाम् ।
घनस्तन-भरोन्नतां गलितचूलिकां श्यामलां त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ।।६।।
सकुङ्कुम-विलेपनामलक-चुम्बिकस्तूरिकां समन्दहसितेक्षणां स-शरचाप-पाशाङ्कुशाम्।
अशेषजन-मोहिनीमरुणमाल्य-भूषाम्बरां जपाकुसुम-भासुरां जपविधौ स्मराम्यम्बिकाम् ।।७।।
पुरन्दर-पुरन्ध्रिका-चिकुरबन्ध-सैरन्ध्रिकां पितामहपतिव्रतां पटुपाटीर-चर्चारताम् ।
मुकुन्दरमणीं मणिलसदलङ्क्रियाकारिणीं भजामि भुवनाम्बिकां सुरवधूटिकाचेटिकाम् ।।८।।

।।इति श्रीमच्छङ्कराचार्यविरचितं त्रिपुरसुन्दरीस्तोत्रं सम्पूर्णम्।।

## ३१. देवीभुजङ्गस्तोत्रम्

[ श्रीमत्परमहंस परिव्राजकाचार्य भगवान् आदि शंकराचार्य कृत यह स्तोत्र 'भुजङ्ग' छन्द में निबद्ध होने के कारण 'देवीभुजङ्गम्' के नाम से प्रसिद्ध है। समस्त विकल्पों से परे जो श्रीचक्रनिवासिनी भगवती ललिता का ध्यान-पूजनादि कर इस स्तोत्र का पाठ करता है, वह आनन्द-सिन्धु में निमग्न होकर जन्म-मरण के चक्र से विमुक्त हो जाता है। ]

विरिञ्च्यादिभिः पञ्चभिर्लोकपालैः समूढे महानन्दपीठे निषण्णम् ।
धनुर्बाणपाशाङ्कुशप्रोतहस्तं महस्त्रैपुरं शंकराद्वैतमव्यात् ।।१।।
यदन्नादिभिः पञ्चभिः कोशजालैः शिरः पक्षपुच्छात्मकैरन्तरन्तः ।
निगूढे महायोगपीठे निषण्णं पुरारेरथान्तःपुरं नौमि नित्यम् ।।२।।

विरिञ्चादिरूपैः प्रपञ्चे विहृत्य स्वतन्त्रा यदा स्वात्मविश्रान्तिरेषा ।
तदा मानमातृप्रमेयातिरिक्तं परानन्दमीडे भवानि त्वदीयम् ॥३॥
विनोदाय चैतन्यमेकं विभज्य द्विधा देवि जीवः शिवश्चेति नाम्ना ।
शिवस्यापि जीवत्वमापादयन्ती पुनर्जीवमेनं शिवं वा करोषि ॥४॥
समाकुञ्च्य मूलं हृदि न्यस्य वायुं मनो भ्रूबिलं प्रापयित्वा निवृत्ताः ।
ततः सच्चिदानन्दरूपे पदे ते भवन्त्यम्ब जीवाः शिवत्वेन केचित् ॥५॥
शरीरेऽतिकष्टे रिपौ पुत्रवर्गे सदाभीतिमूले कलत्रे धने वा ।
न कश्चिद्विरज्यत्यहो देवि चित्रं कथं तत्वत्कटाक्षं विना तत्त्वबोधः ॥६॥
शरीरे धनेऽपत्यवर्गे कलत्रे विरक्तस्य सद्देशिकादिष्टबुद्धेः ।
यदाकस्मिकं ज्योतिरानन्दरूपं समाधौ भवेतत्तत्त्वमस्यम्ब सत्यम् ॥७॥
मृषान्यो मृषान्यः परो मिश्रमेनं परः प्राकृतं चापरो बुद्धिमात्रम् ।
प्रपञ्चं मिमीते मुनीनां गणोऽयं तदेतत्त्वमेवेति न त्वां जहीमः ॥८॥
निवृत्तिः प्रतिष्ठा च विद्या च शान्तिस्तथा शान्त्यतीतेति पञ्चीकृताभिः ।
कलाभिः परे पञ्चविंशात्मिकाभिस्त्वमेकैव सेव्या शिवाभिन्नरूपा ॥९॥
अगाधेऽत्र संसारपङ्के निमग्नं कलत्रादिभारेण खिन्नं नितान्तम् ।
महामोहपाशौघबद्धं चिरान्मां समुद्धर्तुमम्ब त्वमेकैव शक्ता ॥१०॥
समारभ्य मूलं गततो ब्रह्मचक्रं भवद्दिव्यचक्रेश्वरीधामभाजः ।
महासिद्धिसंघातकल्पद्रुमाभा नवाप्याम्ब नादानुपास्ते च योगी ॥११॥
गणेशैर्ग्रहैरम्ब नक्षत्रपङ्क्त्या तथा योगिनीराशिपीठैरभिन्नम् ।
महाकालमात्मानमामृश्य लोकं विधत्से कृतिं वा स्थितिं वा महेशि ॥१२॥
लसत्तारहारामतिस्वच्छचेलां वहन्तीं करे पुस्तकं चाक्षमालाम् ।
शरच्चन्द्रकोटिप्रभाभासुरां त्वां सकृद्भावयन्भारतीवल्लभः स्यात् ॥१३॥
समुद्यत्सहस्रार्कबिम्बाभवक्त्रां स्वभासैव सिन्दूरिताजाण्डकोटिम् ।
धनुर्बाणपाशाङ्कुशान्धारयन्तीं स्मरन्तः स्मरं वापि संमोहयेयुः ॥१४॥
मणिस्यूतताटङ्कशोणास्यबिम्बां हरित्पट्टवस्त्रां त्वगुल्लासिभूषाम् ।
हृदा भावयंस्तप्तहेमप्रभां त्वां श्रियो नाशयत्यम्ब चाञ्चल्यभावम् ॥१५॥

महामन्त्रराजान्तबीजं पराख्यं स्वतो न्यस्तबिन्दु स्वयं न्यस्तहार्दम् ।
भवद्वक्त्रवक्षोजगुह्याभिधानं स्वरूपं सकृद्भावयेत्स त्वमेव ॥१६॥
तथान्ये विकल्पेषु निर्विण्णचित्तास्तदेकं समादाय बिन्दुत्रयं ते ।
परानन्दसंधानसिन्धौ निमग्नाः पुनर्गर्भरन्ध्रं न पश्यन्ति धीराः ॥१७॥
त्वदुन्मेषलीलानुबन्धाधिकारान्विरिञ्च्यादिकांस्त्वद्गुणाम्भोधिबिन्दून् ।
भजन्तस्तितीर्षन्ति संसारसिन्धुं शिवे तावकीना सुसंभावनेयम् ॥१८॥
कदा वा भवत्पादपोतेन तूर्णं भवाम्भोधिमुत्तीर्य पूर्णान्तरङ्गः ।
निमज्जन्तमेनं दुराशाविषाब्धौ समालोक्य लोकं कथं पर्युदास्से ॥१९॥
कदा वा हृषीकाणि साम्यं भजेयुः कदा वा न शत्रुर्न मित्रं भवानि ।
कदा वा दुराशाविषूचीविलोपः कदा वा मनो मे समूलं विनश्येत् ॥२०॥
नमोवाकमाशास्महे देवि युष्मत्पदाम्भोजयुग्माय तिग्माय गौरि ।
विरिञ्च्यादिभास्वत्किरीटप्रतोलीप्रदीपायमानप्रभाभास्वराय ॥२१॥
कचे चन्द्ररेखं कुचे तारहारं करे स्वादुचापं शरे षट्पदौघम् ।
स्मरामि स्मरारेरभिप्रायमेकं मदाघूर्णनेत्रं मदीयं निधानम् ॥२२॥
शरेष्वेव नासा धनुष्वेव जिह्वा जपापाटले लोचने ते स्वरूपे ।
त्वगेषा भवच्चन्द्रखण्डे श्रवो मे गुणे ते मनोवृत्तिरम्ब त्वयि स्यात् ॥२३॥
जगत्कर्मधीरान्वचोधूतकीरान् कुचन्यस्तहारान्कृपासिन्धुपूरान् ।
भवाम्भोधिपारान्महापापदूरान् भजे वेदसाराञ्शिवप्रेमदारान् ॥२४॥
सुधासिन्धुसारे चिदानन्दनीरे समुत्फुल्लनीपे सुरत्नान्तरीपे ।
मणिव्यूहसाले स्थिते हैमशाले मनोजारिवामे निषण्णं मनो मे ॥२५॥
दृगन्ते विलोला सुगन्धीषु माला प्रपञ्चेन्द्रजाला विपत्सिन्धुकूला ।
मुनिस्वान्तशाला नमल्लोकपाला हृदि प्रेमलोलामृतस्वादुलीला ॥२६॥
जगज्जालमेतत्त्वयैवाम्ब सृष्टं त्वमेवाद्य यासीन्द्रियैरर्थजालम् ।
त्वमेकैव कर्त्री त्वमेकैव भोक्त्री न मे पुण्यपापे न मे बन्धमोक्षौ ॥२७॥
इति प्रेमभारेण किञ्चिन्मयोक्तं न बुध्वैव तत्त्वं मदीयं त्वदीयम् ।
विनोदाय बालस्य मौर्ख्यं हि मातस्तदेतत्प्रलापस्तुतिं मे गृहाण ॥२८॥

॥इति देवीभुजङ्गस्तोत्रं सम्पूर्णम्॥

## ३२. भवानी-भुजङ्गम्

[ भुजङ्ग छन्द में निबद्ध यह स्तोत्र 'भवानीभुजङ्गम्' के नाम से प्रसिद्ध है। भुजङ्गम् का एक अर्थ सौन्दर्यप्रेमी भी होता है, इस अर्थ में देवी के सौन्दर्य-मुग्ध के द्वारा रचित स्तोत्र कहा जा सकता है। इस स्तोत्र का जो भक्तिपूर्वक पाठ करते हैं, उन्हें भगवती प्रसन्न होकर श्री एवं अष्टसिद्धियों सहित अपना शाश्वत और वेदसारभूत पद प्रदान करती हैं।]

**षडाधारपङ्केरुहान्तर्विराजत्सुषुम्नान्तरालेऽतितेजोल्लसन्तीम् ।**
**सुधामण्डलं द्रावयन्तीं पिबन्तीं सुधामूर्तिमीडे चिदानन्दरूपाम् ॥१॥**
**ज्वलत्कोटिबालार्कभासारुणाङ्गीं सुलावण्यशृङ्गारशोभाभिरामाम् ।**
**महापद्मकिञ्जल्कमध्ये विराजत्त्रिकोणे निषण्णां भजे श्रीभवानीम् ॥२॥**
**क्वणत्किङ्किणीनूपुरोद्भासिरत्नप्रभालीढलाक्षार्द्रपादाब्जयुग्मम् ।**
**अजेशाच्युताद्यैः सुरैः सेव्यमानं महादेवि मन्मूर्ध्नि ते भावयामि ॥३॥**
**सुशोणाम्बराबद्धनीवीविराजन्महारत्नकाञ्चीकलापं नितम्बम् ।**
**स्फुरद्दक्षिणावर्तनाभिं च तिस्रो वलीरम्ब ते रोमराजिं भजेऽहम् ॥४॥**
**लसद्वृत्तमुत्तुङ्गमाणिक्यकुम्भोपमश्रि स्तनद्वन्द्वमम्बाम्बुजाक्षि ।**
**भजे दुग्धपूर्णाभिरामं तदेवं महाहारदीप्तं सदा प्रस्नुतास्यम् ॥५॥**
**शिरीषप्रसूनोल्लसद्बाहुदण्डैर्ज्वलद्बाणकोदण्डपाशाङ्कुशैश्च ।**
**चलत्कङ्कणोदारकेयूरभूषोज्ज्वलद्भिर्लसन्तीं भजे श्रीभवानीम् ॥६॥**
**शरत्पूर्णचन्द्रप्रभापूर्णबिम्बाधरस्मेरवक्त्रारविन्दां सुशान्ताम् ।**
**सुरत्नावलीहारताटङ्कशोभां महासुप्रसन्नां भजे श्रीभवानीम् ॥७॥**
**सुनासापुटं सुन्दरभ्रूललाटं तवौष्ठश्रियं दानदक्षं कटाक्षम् ।**
**ललाटे लसद्गन्धकस्तूरिभूषं स्फुरच्छ्रीमुखाम्भोजमीडेऽहमम्ब ॥८॥**
**चलत्कुन्तलान्तर्भ्रमद्भृङ्गवृन्दं घनस्निग्धधम्मिल्लभूषोज्ज्वलं ते ।**
**स्फुरन्मौलिमाणिक्यबद्धेन्दुरेखाविलासोल्लसद्दिव्यमूर्धानमीडे ॥९॥**
**इति श्रीभवानि स्वरूपं तवेदं प्रपञ्चात्परं चातिसूक्ष्मं प्रसन्नम् ।**
**स्फुरत्वम्ब डिम्भस्य मे हृत्सरोजे सदा वाङ्मयं सर्वतेजोमयं च ॥१०॥**
**गणेशाभिमुख्याखिलैः शक्तिवृन्दैर्वृतां वै स्फुरच्चक्रराजोल्लसन्तीम् ।**
**परां राजराजेश्वरि त्रैपुरि त्वां शिवाङ्कोपरिस्थां शिवां भावयामि ॥११॥**

त्वमर्कस्त्वमिन्दुस्त्वमग्निस्त्वमापस्त्वमाकाशभूवायवस्त्वं महत्त्वम् ।
त्वदन्यो न कश्चित्प्रपञ्चोऽस्ति सर्वं त्वमानन्दसंवित्स्वरूपां भजेऽहम् ।।१२।।
श्रुतीनामगम्ये सुवेदागमज्ञा महिम्नो न जानन्ति पारं तवाम्ब ।
स्तुतिं कर्तुमिच्छामि ते त्वं भवानि क्षमस्वेदमत्र प्रमुग्धः किलाहम् ।।१३।।
गुरुस्त्वं शिवस्त्वं च शक्तिस्त्वमेव त्वमेवासि माता पिता च त्वमेव ।
त्वमेवासि विद्या त्वमेवासि बन्धुर्गतिर्मे मतिर्देवि सर्वं त्वमेव ।।१४।।
शरण्ये वरेण्ये सुकारुण्यमूर्ते हिरण्योदराद्यैरगण्ये सुपुण्ये ।
भवारण्यभीतेश्च मां पाहि भद्रे नमस्ते नमस्ते नमस्ते भवानि ।।१५।।
इतीमां महच्छ्रीभवानीभुजङ्गं स्तुतिं यः पठेद्भक्तियुक्तश्च तस्मै ।
स्वकीयं पदं शाश्वतं वेदसारं श्रियं चाष्टसिद्धिं भवानी ददाति ।।१६।।
भवानी भवानी भवानी त्रिवारमुदारं मुदा सर्वदा ये जपन्ति ।
न शोकं न मोहं न पापं न भीतिः कदाचित्कथञ्चित्कुतश्चिज्जनानाम्।।१७।।

।।इति भवानीभुजङ्गं सम्पूर्णम्।।

## ३३. *ललितालल्लाटाक्षस्तोत्रम्*

[ मत्तमयूर छन्द में निबद्ध यह स्तोत्र भगवती के तीसरे का वर्णन करता है। इसका नित्यपाठ करने वाले की सद्यः इष्टापूर्ति होती है तथा वह सदैव भगवती की आँखों के समक्ष रहता है और भगवती की आँखों के सामने रहने वाले पर कोई आपत्ति आ सकती है क्या? ]

अम्बुजनिलयावल्लभपङ्कजजाततनू विघ्ननिवारकवह्निसमुद्भवमुखसेव्यौ ।
अगणितकोटिब्रह्माण्डव्रजसूतातौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।१।।
आशातिक्रान्तेप्सितवस्तुव्रजदानस्वीयव्रतजितनिर्जरवृक्षौ नतविततेः ।
निर्व्याजामितकरुणासागरहृत्कमलौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।२।।
इष्टापूर्त्तव्रतचर्यामुखकृतिपूगैर्भक्तिब्रह्मज्ञानप्रमुखैरपि जुष्टौ ।
श्राणितकाङ्क्षितगजमुखसम्पन्मोक्षादौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।३।।
ईशौ साङ्गाखिलविद्यानामिन्दुधरौ नतजनमोदाम्भोनिधिराकाचन्द्रमसौ ।
ईहाशून्यस्वान्तजनाप्यस्वीयपदौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।४।।

उडुकुलवल्लभडिम्भविभूषितकोटीरभ्राजच्छीर्षव्यक्तश्रितजनवात्सल्यौ ।
उरगाधिपमुखसेवितचरणाम्बुजयुगलौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ।।५।।
ऊर्जितशासनपौलोमीधवमुखदिविजव्रातकिरीटोज्ज्वलमणिनीराजितपादौ ।
ऊरीकृतनतकाङ्क्षापूर्त्तिव्रतदीक्षौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।६।।
ऋषभारूढौ ऋतसत्यप्रिय-ऋजुचेष्टौ लक्षितजनतातूर्णानुग्रहकृतिशीले ।
ऋद्धिव्रातश्राणनसक्तौ द्राङ्नमतां वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।७।।
ॠस्वसंज्ञारूपध्येयावुत्तसङ्गस्थितगणनाथक्रौञ्चक्ष्माधृच्छिद्रकरौ ।
प्रेम्णा सत्त्वरमानतकाङ्क्षितवैभवदौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।८।।
ऌमुखाशेषाक्षररूपौ मितिरहितकृपाजन्मक्षोणीनिजहृदयामृतसञ्जातौ ।
कमलनिजासनकमलेट्प्रमुखार्चितपादौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।९।।
ॡनिजरूपौ लावण्याब्धी नतजनताकारुण्यामृतपारावारस्वस्वान्तौ ।
लाकिन्यर्च्यौ शफरीनेत्रविरूपाक्षौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।१०।।
एणाङ्कार्भकचूडौ शोणाम्बुजपादौ शोणस्वाधरबिम्बरुचानिर्जितबिम्बौ ।
काणादाक्षस्वपदप्रमुखाखिलनयदौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।११।।
ऐडविडेयप्रालेयांशुप्रभृतिनुतस्वपदाम्भोजौ चन्द्रार्भाञ्चितिनिजमौली ।
ऐहिकपारत्रिकसुखदायकपदपूजौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।१२।।
ॐ कारामृतसम्भववरदानिजचेतःसञ्जन्पूगज्ञानश्राणनरतचित्तौ ।
ॐ बीजाक्षरगूढार्थाख्येयस्वाकारौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।१३।।
औपासनमुखकर्मकलापाराध्याङ्घ्रीभक्तिज्ञानप्रमुखोपायचयावाप्यौ ।
औदासीन्योज्ज्वलमतियतिहृदयाब्जरवौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ।।१४।।
अङ्घ्रिसरोरुहभक्तमृकण्डुप्रभवतनोरन्तकपाशच्छेदकरनिजानुगृहीतौ ।
अङ्गविराजत्कान्तिपराजितकनकविधू वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ।।१५।।
अश्शोभौ च ध्यातृस्वान्ते यन्नामान्तर्गतपर्णाश्रुततिवाक्ततिभिः कीर्त्यन्ते ।
पादाम्भोजप्रणताखिलशुभदातारौ वन्दे श्रीमल्ललितादेवीनिटिलाक्षौ ।।१६।।

।।इति ललितालालाटाक्षस्तोत्रम्।।

## ३४. भवान्यष्टकम्

[ श्रीमदादिशंकर भगवत्पाद विरिचित भवान्यष्टक अत्यन्त प्रसिद्ध है। जिसमें वे कहते हैं—"न तो मुझमें विद्या है, न ज्ञान। कोई भी सांसारिक सम्बन्ध भी मेरे अपने नहीं हैं, मैं अगतिक हूँ। माँ, केवल आप ही मेरी गति हैं, कृपया मेरी रक्षा करें।" यही इस स्तोत्र का मूलभाव है। इसके नित्यपाठक का योगक्षेम पराम्बा ललिता महाभट्टारिका करती हैं। ]

**न तातो न माता न बन्धुर्न दाता न पुत्रो न पुत्री न भृत्यो न भर्ता ।**
**न जाया न विद्या न वृत्तिर्ममैव गतिस्त्वं गतिस्त्वं त्वमेका भवानि ।।१।।**
**भवाब्धावपारे महादुःखभीरुः पपात प्रकामी प्रलोभी प्रमत्तः ।**
**कुसंसार-पाश-प्रबद्धः सदाऽहं गतिस्त्वं गतिस्त्वं त्वमेका भवानि ।।२।।**
**न जानामि दानं न च ध्यान-योगं न जानामि तन्त्रं न च स्तोत्र-मन्त्रम् ।**
**न जानामि पूजां न च न्यासयोगं गतिस्त्वं गतिस्त्वं त्वमेका भवानि ।।३।।**
**न जानामि पुण्यं न जानामि तीर्थं न जानामि मुक्तिं लयं वा कदाचित् ।**
**न जानामि भक्तिं व्रतं वाऽपि मातर्गतिस्त्वं गतिस्त्वं त्वमेका भवानि ।।४।।**
**कुकर्मी कुसङ्गी कुबुद्धिः कुदासः कुलाचारहीनः कदाचारलीनः ।**
**कुदृष्टिः कुवाक्यप्रबन्धः सदाऽहं गतिस्त्वं गतिस्त्वं त्वमेका भवानि ।।५।।**
**प्रजेशं रमेशं महेशं सुरेशं दिनेशं निशीथेश्वरं वा कदाचित् ।**
**न जानामि चाऽन्यत् सदाऽहं शरण्ये गतिस्त्वं गतिस्त्वं त्वमेका भवानि ।।६।।**
**विवादे विषादे प्रमादे प्रवासे जले चाऽनले पर्वते शत्रुमध्ये ।**
**अरण्ये शरण्ये सदा मां प्रपाहि गतिस्त्वं गतिस्त्वं त्वमेका भवानि ।।७।।**
**अनाथो दरिद्रो जरा-रोगयुक्तो महाक्षीणदीनः सदा जाड्यवक्त्रः ।**
**विपत्तौ प्रविष्टः प्रणष्टः सदाऽहं गतिस्त्वं गतिस्त्वं त्वमेका भवानि ।।८।।**

।।इति भवान्यष्टकं सम्पूर्णम्।।

## ३५. त्रिपुरामेधासूक्तम्

[ जीवन में मेधा अर्थात् बुद्धि की अत्यन्त आवश्यकता होती है। भगवती ललिता महात्रिपुरसुन्दरी बुद्धि की देवी हैं। यह मेधासूक्त वैदिक है। इसके नित्यपाठ से मेधा का विकास होता है।]

मेधा देवी जुषमाणा न आगाद्विश्वाची भद्रा सुमनस्य माना। त्वया जुष्टा नुदमाना दुरुक्तान् बृहद्वदेम विदथे सुधीराः।

त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मागतश्रीरुतत्वया । त्वया जुष्टश्चित्रं विन्दते वसुसानो जुषस्व द्रविणो न मेधे।

मेधां म इन्द्रो दधातु मेधां देवी सरस्वती मेधां मे अश्विनावुभावाधत्तां पुष्करस्त्रजा। अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः। दैवीं मेधा सरस्वती सा मां मेधा सुरभिर्जुषता गुं स्वाहा।

आमां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या। ऊर्जस्वती पयसा पिन्वमाना सामां मेधा सुप्रतीका जुषन्ताम्।

मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ।

।। इति त्रिपुरामेधासूक्तम् ।।

## ३६. *संक्षिप्त-श्रीचक्रनित्यार्चनविधिः*

[ यहाँ पर वर्तमान युग में भक्तों की समय-सीमा को देखते हुए संक्षिप्ततर रूप में भगवती की पूजा-विधि दी जा रही है। इसमें भगवती की षोडशोपचार पूजा दी गई है। इसके अतिरिक्त यथालब्ध पूजोपचारों को मूलमन्त्र से भी भगवती को समर्पित किया जा सकता है।]

ध्यानम्—

सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुरत्
तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम्।
पाणिभ्यामलि पूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत् परामम्बिकाम्।।

आवाहनम्—

कनकमयवितर्दिशोभमानं दिशि दिशि पूर्णसुवर्णकुम्भयुक्तम्।
मणिमयमण्डपमध्यमेहि मातर्मयि कृपया हि समर्चनं गृहीतुम्।।

आसनम्—

कनकमयवितर्दिस्थापिते तूलिकाढ्ये विविधकुसुमकीर्णे कोटिबालार्कवर्णे।
भगवति रमणीये रत्नसिंहासनेऽस्मिन्नुपविश पदयुग्मं हेमपीठे निधेहि।।

पाद्यम्—

**दूर्वया सरसिजान्वितं विष्णुक्रान्तया च सहितं कुसुमाढ्याम् ।।**

**पद्मयुग्मसदृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः ।।**

आचमनम्—

**जलजद्युतिना करेण जातीफलकंकोललवंगगन्धयुक्तैः।**

**अमृतैरमृतैरिवाहृतैर्भगवत्याचमनं विधीयताम्।।**

मधुपर्कः—

**निहितः कनकस्य संपुटे पिहितो रत्नपिधानकेन सह।**

**तदयं भवती करेऽर्पितो मधुपर्को भवति प्रगृह्यताम् ।।**

स्नानम्—

**दधिदुग्धघृतैः समाक्षिकैः सितया शर्करया समन्वितैः।**

**स्नपयामि तवाहमादृतो जननि ! त्वां पुनरुष्णवारिभिः।।**

वस्त्राणि—

**बालार्कद्युतिदाडिमीयकुसुमप्रस्पर्धिसर्वोत्तमं मातस्त्वं**

**परिधेहि दिव्यवसनं भक्त्या मया कल्पितम्।**

**मुक्ताभिर्ग्रथितं सकञ्चुकमिदं स्वीकृत्य**

**पीतप्रभं तप्तस्वर्णसमानवर्णबहुलं प्रावर्णमंगीकुरु।।**

आभरणानि—

**मंजीरे पदयोर्निधाय रुचिरे विन्यस्य काञ्चीं**

**कटौ मुक्ताहारमुरोजयोरनुपमां नक्षत्रमालां गले ।**

**केयूराणि भुजेषु रत्नवलयश्रेणीः करेषु क्रमात्**

**ताटङ्के तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम्।।**

गन्धम्—

**मातर्भालतले तवातिविमले काश्मीरकस्तूरिका**

**कर्पूरागरुभिः करोमि तिलकं देहेऽङ्गरागं ततः।**

**वक्षोजादिषु यक्षकर्दमरसैः सिक्ताञ्च पुष्पद्रवैः**

**पादौ कुंकुमलेपनादिभिरहं सम्पूजयामि क्रमात् ।।**

पुष्पाणि—

मन्दारकुन्दकरवीरलवङ्गपुष्पैस्त्वां देवि संततमहं परिपूजयामि ।
जातीजपाबकुलचम्पककेतकादि नानाविधानि कुसुमानि च तेऽर्पयामि।।

धूपम्—

लाक्षासम्मिलितैः शिलारसयुतैः श्रीवाससम्मिश्रितैः
कर्पूराकलितैः सितामधुयुतैर्गोसर्पिषा लोडितैः।
श्रीखण्डागुरुगुग्गुलुप्रभृतिभिर्नानाविधैर्वस्तुभिः
धूपं ते परिकल्पयामि जननि स्नेहात्त्वमंगीकुरु।।

दीपम्—

रत्नालंकृतहेमपात्रनिहितैर्गोसर्पिषोद्दीपितै
र्दीपैर्दीर्घतरान्धकारभिदुरैर्बालार्ककोटिप्रभैः ।
आताम्रज्ज्वलदुज्ज्वलज्ज्वलनवद्रत्नप्रदीपैः सदा
मातस्त्वामहमादरादनुदिनं नीराजयाम्युच्चकैः।।

नैवेद्यम्—

सापूपसूप-दधि-दुग्ध-सिताघृतानि सुस्वादु-भक्ष्य-परमान्न-पुरः सराणि।
शाकोल्लसन्मरिच-जीरक-बाह्लिकानि भक्ष्याणि भुङ्क्ष्व जगदम्ब मयार्पितानि।।

नीराजनम्—

सविनयमथ दत्त्वा जानुयुग्मं धरायां सपदि शिरसि धृत्वा पात्रमारार्तिकस्य ।
मुखकमलसमीपे तेऽम्ब सार्धत्रिवारं भ्रमयति मयि भूयात्ते कृपार्द्रः कटाक्षः ।।

पुष्पाञ्जलिः—

चरणनलिनयुग्मं पङ्कजैः पूजयित्वा कनककमलमालां कण्ठदेशेऽर्पयित्वा ।
शिरसि विनिहितोऽयं रत्नपुष्पांजलिस्ते हृदयकमलमध्ये देवि हर्षन्तनोतु ।।

वन्दनम्—

रक्तोत्पलारक्ततलप्रभाभ्यां ध्वजोर्ध्वरेखाकुलिशांकिताभ्याम् ।
अशेषवृन्दारकवन्दिताभ्यां नमो भवानीपदपंकजाभ्याम् ।।

## क्षमा-प्रार्थना

**एषा भक्त्या तव विरचितया मया देवि पूजा स्वीकृत्यैनां सपदि सकलान्मेऽपराधान् क्षमस्व।**
**न्यूनं यत्तत्तव करुणया पूर्णतामेतु सद्यः सानन्दम्मे हृदयकमले तेऽस्तु नित्यं निवासः।।**

[ एतदनन्तरं यथाशक्ति जप करके समर्पण करे ]

## ३. श्रीषोडशीखण्डः

### *श्रीमहाषोडशी महिमा*

**कैलासशिखरासीनं भगवन्तं उमापतिम् । चन्द्रार्धमकुटं देवं सोमसूर्याग्निलोचनम् ।।१।।**
**गजचर्मपरीधानं विरूपाक्षं सुराधिपम् । गणगन्धर्वयक्षेन्द्रदेवासुरनमस्कृतम् ।।२।।**
**नागाभरणभूषाढ्यं ब्रह्माच्युतनमस्कृतम् । विहसन्तं जपन्तं च पठन्तं च मुहुः मुहुः ।।३।।**
**उत्थाय प्रणता भूत्वा पर्यपृच्छत पार्वती ।**

देवी उवाच

**भगवन् त्वं परो देवः सुरासुरनमस्कृतः ।।४।।**
**गुणी वेदान्ततन्त्रज्ञः गुणातीतः चिदीश्वरः ।**
**सततं किं जपासक्तः तत्वं सर्वोत्तमं प्रभो ।।५।।**
**अद्यापि अविदितं यन्मे तत् प्रेम्णा वक्तुमर्हसि ।**

ईश्वर उवाच।

**या देवी निष्कला श्यामा निराभासा निरञ्जना ।।६।।**
**महाश्रीषोडशीविद्या श्रीराज्ञीति निगद्यते ।**
**सकला राज्यदा लोके विद्याराज्ञी महेश्वरी ।।७।।**
**देवी पञ्चदशी सैव परब्रह्मकुटुम्बिनी ।**
**रोगदारिद्र्यनाशाय प्रादुर्भूता महीतले ।।८।।**
**यस्याः पञ्चदशीविद्या गुह्या अविदिता पुरा ।**
**जपामि षोडशीविद्यां सर्वसांराज्यदायिनीम् ।।**

इति देवीरहस्ये।

## श्रीषोडशी कवचम्

देव्युवाच—

भगवन् देवदेवेश लोकानुग्रहकारक । त्वत्प्रसादान् महादेव श्रुता मंत्रास्त्वनेकधा ।।१।।
साधनं विविधं देव कीलकोद्धरणं तथा । शापादिदूषणोद्धारः श्रुतस्त्वत्तो मया प्रभो ।।२।।
राजराजेश्वरीदेव्याः कवचं सञ्चितं मया । श्रोतुमिच्छामि त्वत्तस्तत्कथयस्व दयानिधे ।।३।।

ईश्वर उवाच—

लक्षवारसहस्राणि वारितासि पुनः पुनः । स्त्रीस्वभावात् पुनर्देवि पृच्छसि त्वं मम प्रिये ।।४।।
अत्यन्तगुह्यं कवचं सर्वकामफलप्रदम् । प्रीतये तव देवेशि कथयामि शृणुष्व तत् ।।५।।

अस्य षोडशीकवचस्य महादेव ऋषिः प्रस्तारपंक्तिश्छन्दो राजराजेश्वरी महात्रिपुरसुन्दरी देवता धर्मार्थकाममोक्षसाधने पाठे विनियोगः।

पूर्वे मां भैरवी पातु बाला मां पातु दक्षिणे ।
मालिनी पश्चिमे पातु त्रासिनी तूत्तरेऽवतु ।।६।।
ऊर्ध्वं पातु महादेवी महात्रिपुरसुन्दरी ।
अधस्तात् पातु देवेशी पातालातलवासिनी ।।७।।
आधारे वाग्भवः पातु कामराजस्तथा हृदि ।
डामरः पातु मां नित्यं मस्तके सर्वकामदः ।।८।।
ब्रह्मरन्ध्रे सर्वगात्रे छिद्रस्थाने च सर्वदा ।
महाविद्या भगवती पातु मां परमेश्वरी ।।९।।
ऐं ह्रीं ललाटे मां पातु क्लीं क्लुं सश्च नेत्रयोः ।
नासायं मे कर्णयोश्च ह्रीं ह्रैं ह्रां ह्रीं चिबुके तथा ।।१०।।
सौः पातु गले हृदये सहह्रीं नाभिदेशके ।
कलह्रीं क्लीं स्त्रीं गुह्यदेशे सह्रीं पादयोस्तथा ।।११।।
सह्रीं मां सर्वतः पातु सकली पातु सन्धिषु ।
जले स्थले तथाकाशे दिक्षु राजगृहे तथा ।।१२।।
हूँ क्षेमा त्वरिता पातु सह्रीं सक्लीं मनोभवा ।
हंसः पायान्महादेवि परं निष्कलदेवता ।।१३।।

विजया मङ्गला दूती कल्याणी भगमालिनी ।
ज्वाला च मालिनी नित्या सर्वदा पातु मां शिवा ।।१४।।
इत्येवं कवचं देवि देवानामपि दुर्लभम् ।
तव प्रीत्या मयाख्यातं गोपनीयं प्रयत्नतः ।।१५।।
इदं रहस्यं परमं गुह्याद् गुह्यतरं प्रिये ।
धन्यं यशस्यमायुष्यं भोगमोक्षप्रदं शिवे ।।१६।।
दुःस्वप्ननाशनं पुण्यं नरनारीवशङ्करम् ।
आकर्षणकरं देवि स्तम्भोच्चाटकं शिवे ।।१७।।
इदं कवचमज्ञात्वा राजराश्वरीं पराम् ।
योऽर्चयेद्योगिनीवृन्दैः स भक्ष्यो नात्र संशयः ।।१८।।
न तस्य मंत्रसिद्धिः स्यात्कदाचिदपि शाङ्करि ।
इह लोके च दारिद्र्यं रोगदुःखाशुभानि च ।।१९।।
परत्र नरकं गत्वा पशुयोनिमवाप्नुयात् ।
तस्मादेतत्सदाभ्यासादधिकारी भवेत्किल ।।२०।।

मद्वक्त्रनिर्गतमिदं कवचं सुपुण्यं, पूजाविधेश्च पुरतो विधिना पठेद्यः।
सौभाग्यभागललितानि शुभानि भुक्त्वा, देव्याः पदं भजति तत्पुनरन्तकाले ।।

इति कुलानन्दसंहितायां षोडशीकवचं समाप्तम्।

## श्रीविद्याकवचम्

देव्युवाच—

देवदेव महादेव भक्तानां प्रीतिवर्द्धनम् । सूचितं यन्महादेव्याः कवचं कथस्व मे ।।१।।

महादेव उवाच—

शृणु देवि प्रवक्ष्यामि कवचं देवदुर्लभम् । न प्रकाश्यं परं गुह्यं साधकाभीष्टसिद्धिदम् ।।२।।
कवचस्य ऋषिर्देवि दक्षिणामूर्तिरव्ययः । छन्दः पंक्तिः समुद्दिष्टं देवी त्रिपुरसुन्दरी ।।३।।
धर्मार्थकाममोक्षणां विनियोगं तु साधने । वाग्भवः कामराजश्च शक्तिर्बीजं सुरेश्वरि ।।४।।
वाग्भवः पातु शीर्षे मां कामराजस्तथा हृदि । शक्तिबीजं सदा पातु नाभौ गुह्ये च पादयोः ।।५।।

ऐं क्लीं सौः वदने पातुबाला मां सर्वसिद्धये । हसौः सकलह्रीं पातु भैरवीकण्ठदेशतः ।।६।।
सुंदरी नाभिदेशे च शीर्षे कामकला सदा । भ्रूनासयोरन्तराले महात्रिपुरसुन्दरी ।।७।।
ललाटे सुभगा पातु भगा मां कण्ठदेशतः । भगोदया च हृदये उदरे भगसर्पिणी ।।८।।
भगमाला नाभिदेशे लिङ्गे पातु मनोभवा । गुह्ये पातु महादेवी राजराजेश्वरी शिवा ।।९।।
चैतन्यरूपिणी पातु पादयोर्जगदम्बिका । नारायणी सर्वगात्रे सर्वकार्ये शुभङ्करी ।।१०।।
ब्रह्माणी पातु मां पूर्वे दक्षिणे वैष्णवी तथा । पश्चिमे पातु वाराही उत्तरे तु महेश्वरी ।।११।।
आग्नेय्यां पातु कौमारी महालक्ष्मीस्तु नैर्ऋते । वायव्यां पातु चामुण्डा इन्द्राणी पातु ईशके।।१२।।
जले पातु महामाया पृथिव्यां सर्वमङ्गला । आकाशे पातु वरदा सर्वत्र भुवनेश्वरी।।१३।।
इदं तु कवचं देव्या देवानामपि दुर्लभम् । पठेत्प्रातः समुत्थाय शुचिर्प्रयतमानसः ।।१४।।
नाधयो व्याधयस्तस्य न भयं च कश्चिद् भवेत्। न च मारीभयं तस्य पातकानां भयं तथा।।१५।।
न दारिद्र्यवशं गच्छेत्तिष्ठेन्मृत्युवशे न च । गच्छेच्छिवपुरं देवि सत्यं सत्यं वदाम्यहम् ।।१६।।
इदं कवचमज्ञात्वा श्रीविद्यां यो जपेत्सदा । स नाप्नोतिफलं तस्य प्राप्नुयाच्छस्त्रघातनम्।।१७।।

इति सिद्धयामले श्रीविद्याकवचं समाप्तम्।

## *षोडशी हृदयम्*

कैलासे करुणाक्रान्ता परोपकृतिमानसा ।। पप्रच्छ करुणासिन्धुं सुप्रसन्नम्महेश्वरम्।।१।।

श्री पार्व्वत्युवाच—

आगामिनि कलौ ब्रह्मन् धर्म्मकर्म्मविवर्ज्जिताः।। भविष्यन्ति जनास्तेषाङ्कथं श्रेयो भविष्यति।।२।।

श्रीशिव उवाच—

शृणु देवि प्रवक्ष्यामि तव स्नेहान्महेश्वरि ।। दुर्लभन्त्रिषु लोकेषु सुन्दरीहृदयस्तवम् ।।३।।
ये नरा दुःखसन्तप्ता दारिद्र्यहतमानसाः ।। अस्यैव पाठमात्रेण तेषां श्रेयो भविष्यति।।४।।

ओमस्य श्रीमहाषोडशीहृदयस्तोत्रमन्त्रस्य आनन्दभैरवऋषिर्दैवीगायत्रीछन्दः श्रीमहात्रिसुन्दरीदेवताऐंबीजं सौः शक्तिः क्लीं कीलकं धर्म्मार्थकाममोक्षार्थे विनियोगः।

आनन्दभैरवऋषये नमश्शिरसि ।। देवी-गायत्रीछन्दसे नमः मुखे ।।
श्रीमहात्रिपुरसुन्दरीदेवतायै नमः हृदये ।। ऐं बीजाय नमः नाभौ ।।
सौः शक्तये नमः स्वाधिष्ठाने ।
क्लीं कीलकाय नमः मूलाधारे । धर्म्मार्थकाममोक्षार्थे विनियोगः पादयोः ।।

अथ कराङ्गन्यासौ ।।

**ऐं ह्रीं क्लीं अङ्गुष्ठाभ्यान्नमः ।। क्लीं श्रीं सौः ऐं तर्ज्जनीभ्यां स्वाहा ।।**

**सौः ॐ ह्रीं श्रीं मध्यमाभ्याँव्वषट् ।। ऐं क ए ई ल ह्रीं ह स ह ल ह्रीं अनामिकाभ्यां हूम्।।**

**क्लीं सकल कनिष्ठाभ्याँव्वौषट् ।।सौः सौः ऐं क्लीं ह्रीं श्रीं करतलकरपृष्ठाभ्याभ्यांफट् ।।**

एवमङ्गन्यासः।।ध्यानम्।।

**वालव्यक्तविभाकरामितनिभाम्भव्यप्रदाम्भारती-**
**भीषत्फुल्लमुखाम्बुजस्मितकरैराशाभवान्धापहाम् ।।४।।**
**पाशं साभयमङ्कुशञ्च वरदं सम्बिभ्रतीम्भूतिदां**
**भ्राजन्तीञ्चतुरम्बुजाकृतिकरैर्भक्त्या भजे षोडशीम् ।।५।।**
**सुन्दरी सकलकल्मषापहा कोटिकञ्जप्रियकाम्यकान्तिका ।।**
**कोटिकल्पकृतपुण्यकर्म्मणा पूजनीयपदपुण्यपुष्करा ।।६।।**
**शर्व्वरीशसमसुन्दरानना श्रीशशक्तिसुकृताश्रयश्रिता ।।**
**सज्जनानुशरणीयसत्पदा सङ्कटे सुरगणैः सूवन्दिता ।।७।।**
**या सुरासुररणे जवान्विता आजघान जगदम्बिकाऽजिता ।।**
**ताम्भजामि जगताञ्जनिञ्जयाँ य्युद्धयुक्तदितिजान्सुदुर्ज्जयान् ।।८।।**
**योगिनां हृदयसङ्गतां शिवाँ योगयुक्तमनसाँ य्यतात्मनाम् ।।**
**जाग्रतीञ्जगति यत्नतो द्विजा याञ्जपन्ति हृदि ताम्भजाम्यहम् ।।९।।**
**कल्पकास्तु कलयन्ति कलिकाँ य्यत्कला कलिजनोपकारिका ।।**
**कौलिकालिकलिताङ्घ्रिकञ्जकान्ताम्भजामि कलिकल्मषापहाम् ।।१०।।**
**बालार्क्कानन्तशोर्चिर्न्निजतनुकिरणैर्द्दीपयन्ती दिगन्तान्**
**दीप्तैर्देदीप्यमानान्दनुजलदलवनानल्पदावानलाभाम् ।।**
**दान्तोदन्तोग्रचित्तान्दलितदिति सुतान्दर्श्शनीयान्दुरन्ता-**
**न्देवीन्दीनार्द्दचित्तां हृदि मुदितमनाः षोडशीं संस्मरामि ।।११।।**
**धीरान्धन्यान्धरित्रीं धवविधृतशिरोधूतधूल्यब्जपादा**
**न्धृष्टान्धाराधराधोविनिधृतचपलाचारुचन्दत्रभाभाम् ।।**
**धर्म्मान्धूतोपहारान्धरणिसुरधवोद्धारिणीध्येयरूपा**
**न्धीमद्धन्यातिधन्यान्धनदधनवृतांसुन्दरीञ्चिन्तयामि ।।१२।।**

जयतु-जयतु जल्पा योगिनी योगयुक्ता जयतु-जयतु सौम्या सुन्दरी सुन्दरास्या।।
जयतु जयतु पद्मा पद्मिनी केशवस्य जयतु जयतु काली कालिनी कालकान्ता ।।१३।।
जयतु जयतु खर्व्वा षोडशी वेदहस्ता जयतु जयतु धात्री धर्म्मिणी धातृशांतिः ।
जयतु जयतु वाणी ब्राह्मणां ब्रह्मवन्द्या जयतु जयतु दुर्ग्गा दारिणी देवशत्रोः ।।१४।।
देवि त्वं सृष्टिकाले कमलभवभृता राजसी रक्तरूपा,
रक्षाकाले त्वमम्ब हरिहृदयधृता सात्त्विकी श्वेतरूपा।।
भूरिक्रोधा भवान्ते भवभवनगता तामसी कृष्णरूपा,
एताश्चान्यास्त्वमेव क्षितिमनुजमता सुन्दरी केवलाद्या।।१५।।
सुमलसुमनमेतद्देवि गोप्यङ्गणज्ञे ग्रहणमननयोग्यं षोडशीयङ्कुलघ्नम् ।।
सुरतरुसमशीलं सम्प्रदम्पाठकानाम्प्रभवति हृदयाख्यं स्तोत्रमत्यन्तमान्यम् ।।१६।।
इदं त्रिपुरसुन्दर्य्याः षोडश्या परमाद्भुतम् ।।
यः श्रृणोति नरः स्तोत्रं स सदा सुखमश्नुते ।।१७।।
न शूद्राय प्रदातव्यं शठाय समलात्मने ।।
देयन्दान्ताय भक्ताय ब्राह्मणाय विशेषतः ।।१८।।

।। इति श्रीत्रिपुरसुन्दरीतन्त्रे षोडशीहृदयस्तोत्रं समाप्तम् ।।

## श्रीराजराजेश्वरीतर्पणास्तोत्रम्

छन्दःपादयुगां निरुक्तिसुमुखां शिक्षां च जंघायुगाम् ।
ऋग्वेदोरुयुगां यजुस्तु जघनां या सामवेदोदराम् ।।
तर्कन्यायकुचां श्रुतिस्मृतिकरां काव्यादिवेदाननाम् ।
वेदान्तामृतलोचनां भगवती श्रीराजराजेश्वरीम् ।।१।।
कल्याणायुतपूर्णबिम्बवदनां पूर्णेश्वरानन्दिनीम् ।
पूर्णां पूर्णपरां परेशमहिषीं पूर्णामृतास्वादिनीम् ।।
सम्पूर्णां परमोत्तमामृतकलां विद्यावतीं भारतीं ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।२।।
एकानेकमनेककार्यविविधां कार्यैकश्चिद्रूपिणीम् ।
चैतन्यात्मकएकचक्ररचितां चक्राङ्कएकाकिनीम् ।।

भावाभावविवर्द्धिनीं भयहरां सद्भक्तिचिन्तामणिम् ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।३।।

ईशाधीश्वरयोगिवृन्दविदितां सानन्दभूतां पराम् ।
पश्यन्तीं तनुमध्यमां विलसतीं श्रीभैरवीरूपिणीम् ।।
आत्मानात्मविचारिणीं विवरगां विद्यात्रिबीजत्रयीम्
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।४।।

लक्ष्यालक्ष्यनिरीक्षणां निरुपमां रुद्राक्षमालाधराम् ।
साक्षात्कारणदक्षवंशकलितां दीर्घाक्षिदीर्घेश्वरीम् ।।
भद्रां भद्रवरप्रदां भगवतीं भद्रेश्वरीं भद्रिणीम् ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।५।।

ह्रींबीजान्वितनादबिन्दुभरितां ॐकारनादात्मिकाम् ।
ब्रह्मानन्दघनोदरी गुणवतीं ज्ञानेश्वरीं ज्ञानदाम् ।।
इच्छाज्ञानक्रियावतीं जितवतीं गंधर्वसंसेविताम् ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।६।।

हर्षोन्मत्तसुवर्णपात्रभरितां पानोन्नताघूर्णिताम् ।
हुङ्कारप्रियशब्दब्रह्मनिरतां सारस्वतोल्लासिनीम् ।।
साराणारविचारचारुचतुरां वर्णाश्रमाकारिणीम् ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।७।।

सर्वज्ञानकलावतीं सकरुणां सन्नादिनीं नन्दिनीम् ।
सर्वान्तिर्गतशालिनीं शिवतनुं सन्दीपिनीं दीपिनीम् ।।
संयोगप्रियरूपिणीं प्रियवतीं प्रीतिप्रतापोन्नताम् ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।८।।

कर्माकर्मविवर्जितां कुलवतीं कर्मप्रदां कौलिनीम् ।
कारुण्यां तनुबुद्धिकर्मनिरतां सिन्धुप्रियां शालिनीम् ।।
पञ्चब्रह्मसनातनां शवहृदां ज्ञेयाङ्गयोगान्विताम् ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।९।।

हस्ते कुम्भनिभां पयोधरधरां पीनोन्नतां नौमि ताम् ।
हाराद्याभरणां सुरेन्द्रविनुतां शृङ्गारपीठालयाम् ।।

योन्याकारिणियोनिमुद्रितकरां नित्यां च वर्णात्मिकां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।१०।।

लक्ष्मीलक्षणपूर्णभक्तिवरदां लीलाविनोदस्थिताम् ।
लाक्षारञ्जितपादपद्मयुगलां ब्रह्माण्डसंसेविताम् ।।
लोकालोकितलोककामजननीं लोकश्रियाङ्कस्थिताम् ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।११।।

ह्रींकारायुतशङ्करप्रियतनं श्रीयोगपीठेश्वरीम् ।
माङ्गल्यायुतपङ्कजाभनयनां माङ्गल्यसिद्धिप्रदाम् ।।
तारुण्यां तपसाचितां तरुणिकां तत्रोद्भवां तत्त्विनीम् ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।१२।।

सर्वेशाङ्गविहारिणीं सकरुणां सर्वेश्वरीं सर्वगाम् ।
सत्यां सर्वमयीं सहस्रदलजां सप्तार्णवोपस्थिताम् ।।
संगासंगविवर्जितां शुभकरीं बालार्ककोटिप्रभाम् ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।१३।।

कादिक्षान्तसुवर्णबिन्दुसुतनुं स्वर्णादिसिंहासिनीम् ।
नानावर्णविचित्रचित्रचरितां चातुर्यचिन्तामणिम् ।।
चित्तानन्दविधायिनीं सुविपुलां रूढत्रयां शेषिकां ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।१४।।

लक्ष्मीशादिविधीन्द्रचंद्रमुकुटामष्टाङ्गपीठाचिताम् ।
सूर्येन्द्राग्निमयैकपीठनिलयां त्रिस्थां त्रिकोणेश्वरीम् ।।
गोप्त्रीं गुर्विणिगर्वितां गगनगां गङ्गागणेशप्रियाम् ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।१५।।

ह्रींकूटत्रयरूपिणीं समयनीं संसारिणीं हंसिनीम् ।
वामाचारपरायणां सुकुलजां बीजावतीं मुद्रिणीम् ।।
कामाक्षीं करुणार्द्रचित्तचरितां श्रीमन्त्रमूर्त्यात्मिका ।
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।१६।।

इति श्रीशङ्कराचार्यविरचितं श्रीराजराजेश्वरीस्तोत्रम्।

# षोडशी अष्टोत्तरशतनाम स्तोत्रम्

भृगुरुवाच—

**चतुर्वक्त्र जगन्नाथ स्तोत्रं वद मम प्रभो । यस्यानुष्ठानमात्रेण नरो भक्तिमवाप्नुयात् ।।१।।**

ब्रह्मोवाच—

**सहस्रनाम्नामाकृष्य नाम्नामष्टोत्तरं शतम् । गुह्याद्गुह्यतरं गुह्यं सुन्दर्याः परिकीर्तितम् ।।२।।**

ॐ अस्य श्रीषोडश्यष्टोत्तरशतनामस्तोत्रस्य शम्भुर्ऋषिरनुष्टुप्छन्दः श्रीषोडशी देवता धर्मार्थकाममोक्षसिद्धये पाठे विनियोगः।

**ॐ त्रिपुरा षोडशी माता त्र्यक्षरा त्रितया त्रयी ।सुन्दरी सुमुखी सेव्या सामवेदपरायणा ।।३।।**
**शारदा शब्दनिलया सागरा सरिदम्बरा । शुद्धा शुद्धतनः साध्वी शिवध्यानपरायणा ।।४।।**
**स्वामिनी शम्भुवनिता शाम्भवी च सरस्वती। समुद्रमथिनी शीघ्रगामिनी शीघ्रसिद्धिदा ।।५।।**
**साधुसेव्या साधुगम्या साधुसन्तुष्टमानसा । खट्वाङ्गधारिणी खर्वा खड्गखर्परधारिणी ।।६।।**
**षड्वर्गभावरहिता षड्वर्गपरिचारिका । षड्वर्गा च षडङ्गा च षोढा षोडशवार्षिकी ।।७।।**
**क्रतुरूपा क्रतुमती ऋभुक्षक्रतुमण्डिता । कवर्गादिपवर्गान्ता अन्तस्था अन्तरूपिणी ।।८।।**
**अकाराकाररहिता कालमृत्युजरापहा । तन्वी तत्त्वेश्वरी तारा त्रिवर्षा ज्ञानरूपिणी ।।९।।**
**काली कराली कामेशी च छायासंज्ञाप्यरुन्धती । निर्विकल्पा महावेगा महोत्साहा महोदरी ।।१०।।**
**मेघा बलाका विमला विमलज्ञानदायिनी । गौरी वसुन्धरा गोप्त्री गवांपतिनिषेविता ।।११।।**
**भगाङ्गा भगरूपा च भक्तिभावपरायणा । छिन्नमस्ता महाधूमा तथा धूम्रविभूषणा ।।१२।।**
**धर्मकर्मादिरहिता धर्मकर्मपरायणा । सीता मातंगिनी मेघा मधुदैत्यविनाशिनी ।।१३।।**
**भैरवी भुवना माताऽभयदा भवसुन्दरी । भावुका बगला कृत्या बाला त्रिपुरसुन्दरी ।।१४।।**
**रोहिणी रेवती रम्या रम्भा रावणवन्दिता । शतयज्ञमयी सत्वा शतक्रतुवरप्रदा ।।१५।।**
**शतचन्द्रानना देवी सहस्रादित्यसन्निभा । सोमसूर्याग्निनयना व्याघ्रचर्माम्बरावृता ।।१६।।**
**अर्द्धेन्दुधारिणी मत्ता मदिरा मदिरेक्षणा । इति ते कथितं गोप्यं नाम्नामष्टोत्तरं शतम् ।।१७।।**
**सुन्दर्याः सर्वदा सेव्यं महापातकनाशनम् । गोपनीयं गोपनीयं गोपनीयं कलौ युगे ।।१८।।**
**सहस्रनामपाठस्य फलं यद्वै प्रकीर्तितम् । तस्मात्कोटिगुणं पुण्यं स्तवस्यास्य प्रकीर्तनात् ।।१९।।**
**पठेत्सदा भक्तियुतो नरो यो निशीथकालेऽप्यरुणोदये वा ।**
**प्रदोषकाले नवमीदिनेऽथवा लभेत् भोगान् परमाद्भुतान् प्रियान् ।।२०।।**

।।इति ब्रह्मयामले षोडश्यष्टोत्तरशतनामस्तोत्रम्।।

## षोडशी सहस्रनामस्तोत्रम्

कैलासशिखरे रम्ये नानारत्नोपशोभिते । कल्पपादपमध्यस्थे नानापुष्पोपशोभिते ।।१।।
मणिमण्डपमध्यस्थे मुनिगन्धर्वसेविते । कदाचित्सुखमासीनं भगवन्तं जगद्गुरुम् ।।२।।
कपालखट्वाङ्गधरं चन्द्रार्धकृतशेखरम् । हस्तत्रिशूलडमरुं महावृषभवाहनम् ।।३।।
जटाजूटधरं देवं कण्ठभूषणवासकिम् । विभूतिं भूषणं देवं नीलकण्ठं त्रिलोचनम् ।।४।।
द्वीपिचर्मपरीधानं शुद्धस्फटिकसन्निभम् । सहस्रादित्यसङ्काशं गिरिजार्द्धाङ्गभूषणम् ।।५।।
प्रणम्य शिरसा नाथं कारणं विश्वरूपिणम् । कृताञ्जलिपुटो भूत्वा प्राहैनं शिखिवाहनः ।।६।।

कार्तिकेय उवाच—

देवदेव जगन्नाथ सृष्टिस्थितिलयात्मक । त्वमेव परमात्मा च त्वं गतिः सर्वदेहिनाम् ।।७।।
त्वं गतिः सर्वलोकानां दीनानां च त्वमेव हि । त्वमेव जगदाधारस्त्वमेव विश्वकारणम् ।।८।।
त्वमेव पूज्यः सर्वेषां त्वदन्यो नास्ति मे गतिः । किं गुह्यं परमं लोके किमेकं सर्वसिद्धिदम् ।।९।।
किमेकं परमं श्रेष्ठं को योगः स्वर्गमोक्षदः । विना तीर्थेन तपसा विना दानैर्विना मखैः ।।१०।।
विना लयेन ध्यानेन नरः सिद्धिमवाप्नुयात् । कस्मादुत्पद्यते सृष्टिः कस्मिंश्च प्रलयो भवेत् ।।११।।
कस्मादुत्तीर्यते देव संसारार्णवसङ्कटात् । तदहं श्रोतुमिच्छामि कथयस्व महेश्वर ।।१२।।

ईश्वर उवाच—

साधु साधु त्वया पृष्टं पार्वतीप्रियनन्दन । अस्ति गुह्यतमं पुत्र कथयिष्याम्यसंशयम् ।।१३।।
सत्वं रजस्तमश्चैव ये चान्ये महदादयः । ये चान्ये बहवो भूताः सर्वे प्रकृतिसम्भवाः ।।१४।।
सैव देवी परा शक्तिर्महात्रिपुरसुन्दरी । सैव प्रसूयते विश्वं विश्वं सैव प्रपास्यति ।।१५।।
सैव संहरते विश्वं जगदेतच्चराचरम् । आधारः सर्वभूतानां सैव रोगार्तिहारिणी ।।१६।।
इच्छाज्ञानक्रियाशक्तिर्ब्रह्माविष्णुशिवात्मिका । त्रिधा शक्तिस्वरूपेण सृष्टिस्थितिविनाशिनी ।।१७।।
सृज्यते ब्रह्मरूपेण विष्णुरूपेण पाल्यते । ह्रियते रुद्ररूपेण जगदेतच्चराचरम् ।।१८।।
यस्या योनौ जगत्सर्वमद्यापि परिवर्तते । यस्या प्रलीयते चान्ते यस्यां च जायते पुनः ।।१९।।
यां समाराध्य त्रैलोक्ये सम्प्राप्यं पदमुत्तमम् । तस्या नामसहस्रं तु कथयामि श्रृणुष्व तत् ।।२०।।

ॐ अस्य श्रीमहात्रिपुरसुन्दरीसहस्रनामस्तोत्रमन्त्रस्य श्रीभगवान् दक्षिणामूर्तिर्ऋषिः। जगतीच्छदः। समस्तप्रकटगुप्तसम्प्रदायकुलकौलोत्तीर्णनिर्गर्भरहस्याचिन्त्यप्रभावती देवता। ॐ बीजं। माया शक्तिः। कामराजेति कीलकं। धर्मार्थकाममोक्षार्थे जपे विनियोगः।

ॐ आधारे तरुणार्कबिम्बरुचिरं हेमप्रभं वाग्भवं ।
बीजं मन्मथमिन्द्रगोपसदृशं हृत्पङ्कजे संस्थितम् ।।
विष्णुब्रह्मपदस्थ शक्तिकलितं सोमप्रभाभासुरं ।
ये ध्यायंति पदत्रयं तव शिवे ते यांति सौख्यं पदम् ।।२१।।

कल्याणी कमला काली कराली कामरूपिणी ।
कामाख्या कामदा काम्या कामना कामचारिणी ।।२२।।
कालरात्रिर्महारात्रिः कपाली कलरूपिणी ।
कौमारी करुणा मुक्तिः कलिकल्मषनाशिनी ।।२३।।

कात्यायनी कराधारा कौमुदी कमलप्रिया ।
कीर्तिदा बुद्धिदा मेधा नीतिज्ञा नीतिवत्सला ।।२४।।
माहेश्वरी महामाया महातेजा महेश्वरी ।
महाजिह्वा महाघोरा महादंष्ट्रा महाभुजा ।।२५।।

महामोहान्धकारघ्नी महामोक्षप्रदायिनी ।
महादारिद्र्यनाशा च महाशत्रुविमर्दिनी ।।२६।।
महामाया महावीर्या महापातकनाशिनी ।
महामखा मन्त्रमयी मणिकरकवासिनी ।।२७।।

मानसी मानदा मान्या मनश्चक्षू रणेचरा ।
गणमाता च गायत्री गणगन्धर्वसेविता ।।२८।।
गिरिजा गिरिशा साध्वी गिरिस्था गिरिवल्लभा ।
चण्डेश्वरी चण्डरूपा प्रचण्डा चण्डमालिनी ।।२९।।

चर्विका चर्चिकाकारा चण्डिका चारुरूपिणी ।
यज्ञेश्वरी यज्ञरूपा जपयज्ञपरायणा ।।३०।।
यज्ञमाता यज्ञभोक्त्री यज्ञेशी यज्ञसम्भवा ।
सिद्धयज्ञक्रियासिद्धिर्यज्ञाङ्गी यक्षरक्षिका ।।३१।।

यज्ञक्रिया यज्ञरूपा यज्ञाङ्गी यज्ञरक्षिका ।
यज्ञक्रिया च यज्ञा च यज्ञा यज्ञक्रियालया ।।३२।।
जालन्धरी जगन्माता जातवेदा जगत्प्रिया ।
जितेन्द्रिया जितक्रोधा जननी जन्मदायिनी ।।३३।।

गङ्गा गोदावरी चैव गोमती च शतद्रुका ।
घर्घरा वेदगर्भा च रेचिका समवासिनी ।।३४।।
सिन्धुर्मन्दाकिनी क्षिप्रा यमुना च सरस्वती ।
भद्रारागविपाशा च गण्डकी विंध्यवासिनी ।।३५।।
नर्मदा सिन्धुकावेरी वेत्रवत्या सुकौशिकी ।
महेन्द्रतनया चैव अहल्या चर्मकावती ।।३६।।
अयोध्या मथुरा मायाकाशी काञ्ची अवन्तिका ।
पुरी द्वारावती तीर्था महाकिल्विषनाशिनी ।।३७।।
पद्मिनी पद्ममध्यस्था पद्मकिञ्जल्कवासिनी ।
पद्मवक्त्रा चकोराक्षी पद्मस्था पद्मसम्भवा ।।३८।।
ह्रींकारा कुण्डलाधारा हृत्पद्मस्था सुलोचना ।
श्रींकारी भूषणा लक्ष्मीः क्लींकारी क्लेशनाशिनी ।।३९।।
हरिवक्त्रोद्भवा शान्ता हरिवक्त्रकृतालया ।
हरिवक्त्रोद्भवा शान्ता हरिवक्षःस्थलस्थिता ।।४०।।
वैष्णवी विष्णुरूपा च विष्णुमातृस्वरूपिणी ।
विष्णुमाया विशालाक्षी विशालनयनोज्वला ।।४१।।
विश्वेश्वरी च विश्वात्मा विश्वेशी विश्वरूपिणी ।
विश्वेश्वरी शिवाराध्या शिवनाथ शिवप्रिया ।।४२।।
शिवमाता शिवाख्या च शिवदा शिवरूपिणी ।
भवेश्वरी भवाराध्या भवेशी भवनायिका ।।४३।।
भवमाता भवागम्या भवकण्टकनाशिनी ।
भवप्रिया भवनन्दा भवानी भवमोहिनी ।।४४।।
गायत्री चैव सावित्री ब्रह्माणी ब्रह्मरूपिणी ।
ब्रह्मेशी ब्रह्मदा ब्रह्मा ब्रह्माणी ब्रह्मवादिनी ।।४५।।
दुर्गस्था दुर्गरूपा च दुर्गा दुर्गार्तिनाशिनी ।
सुगमा दुर्गमा दान्ता दयादोग्ध्री दुरापहा ।।४६।।
दुरितघ्नी दुराध्यक्षा दुरा दुष्कृतनाशिनी ।
पञ्चास्या पञ्चमी पूर्णा पूर्णपीठनिवासिनी ।।४७।।

सत्वस्था सत्वरूपा च सत्वस्था सत्वसम्भवा ।
रजस्था च रजोरूपा रजोगुणसमुद्भवा ।।४८।।
तमस्था च तमोरूपा तामसी तामसप्रिया ।
तमोगुणसमुद्भूता सात्विकी राजसी कला ।।४९।।
काष्ठा मुहूर्ता निमिषा अनिमेषा ततः परम् ।
अर्द्धमासा च मासा च संवत्सरस्वरूपिणी ।।५०।।
योगस्था योगरूपा च कल्पस्था कल्परूपिणी ।
नानारत्नविचित्राङ्गी नानाभरणमण्डिता ।।५१।।
विश्वात्मिका विश्वमाता विश्वपाशविनाशिनी ।
विश्वासकारिणी विश्वा विश्वशक्तिर्विचक्षणा ।।५२।।
जपाकुसुमसङ्काशा दाडिमीकुसुमोपमा ।
चतुरङ्गी चतुर्बाहुश्चतुराचारवासिनी ।।५३।।
सर्वेशी सर्वदा सर्वा सर्वदा सर्वदायिनी ।
माहेश्वरी च सर्वाद्या शर्वाणी सर्वमङ्गला ।।५४।।
नलिनी नन्दिनी नन्दा आनन्दानन्दवर्द्धिनी ।
व्यापिनी सर्वभूतेषु भवभारविनाशिनी ।।५५।।
सर्वशृङ्गारवेषाढ्या पाशांकुशकरोद्यता।
सूर्यकोटिसहस्राभा चन्द्रकोटिनिभानना ।।५६।।
गणेशकोटिलावण्या विष्णुकोट्यरिमर्दिनी ।
दावाग्निकोटिदलिनी रुद्रकोट्युग्ररूपिणी ।।५७।।
समुद्रकोटिगम्भीरा वायुकोटिमहाबला ।
आकाशकोटिविस्तारा यमकोटिभयङ्करी ।।५८।।
मेरुकोटिसमुच्छ्राया गणकोटिसमृद्धिदा ।
निष्कस्तोका निराधारा निर्गुणा गुणवर्जिता ।।५९।।
अशोका शोकरहिता तापत्रयविवर्जिता ।
वसिष्ठा विश्वजननी विश्वाख्या विश्ववर्द्धिनी ।।६०।।
चित्रा विचित्रचित्राङ्गी हेतुगर्भा कुलेश्वरी ।
इच्छाशक्तिज्ञानशक्तिः क्रियाशक्तिः शुचिस्मिता ।।६१।।

शुचिः स्मृतिमयी सत्या श्रुतिरूपा श्रुतिप्रिया ।
महासत्वमयी सत्वा पञ्चतत्त्वोपरिस्थिता ।।६२।।
पार्वती हिमवत्पुत्री पारस्था पाररूपिणी ।
जयन्ती भद्रकाली च अहल्या कुलनायिका ।।६३।।
भूतधात्री च भूतेशी भूतस्थ भूतभाविनी ।
महाकुंडलिनी शक्तिर्महाविभववर्द्धिनी ।।६४।।
हंसाक्षी हंसरूपा च हंसस्था हंसरूपिणी ।
सोमसूर्याग्निमध्यस्था मणिमण्डलवासिनी ।।६५।।
द्वादशारसरोजस्था सूर्यमण्डलवासिनी ।
अकलङ्का शशाङ्काभा षोडशारनिवासिनी ।।६६।।
डाकिनी राकिनी चैव लाकिनी काकिनी तथा ।
शाकिनी हाकिनी चैव षट्चक्रेषु निवासिनी ।।६७।।
सृष्टिस्थितिविनाशाय सृष्टिस्थित्यन्तकारिणी ।
श्रीकंठप्रियहृतकंठा नन्दाख्या विंदुमालिनी ।।६८।।
चतुष्षष्टिकलाधारा देहदण्डसमाश्रिता ।
माया कली धृतिर्मेधा क्षुधा तुष्टिर्महाद्युतिः ।।६९।।
हिंगुला मङ्गला सीता सुषुम्ना मध्यगामिनी ।
परघोरा करालाक्षी विजया जयदायिनी ।।७०।।
हृत्पद्मनिलया भीमा महाभैरवनादिनी ।
आकाशलिङ्गसम्भूता भुवनोद्यानवासिनी ।।७१।।
महत्सूक्ष्मा च कङ्काली भीमरूपा महाबला ।
मेनकागर्भसम्भूता तप्तकाञ्चनसन्निभा ।।७२।।
अन्तरस्था कूटबीजा त्रिकटाचलवासिनी ।
वर्णाख्या वर्णरहिता पञ्चांशद्वर्णभेदिनी ।।७३।।
विद्याधरीलोकधात्री अप्सरा अप्सरः प्रिया ।
दीक्षा दाक्षायणी दक्षा दक्षयज्ञविनाशिनी ।।७४।।
यशःपूर्णा यशोदा च यशोदागर्भसम्भवा ।
देवकी देवमाता च राधिका कृष्णवल्लभा ।।७५।।

अरुन्धती शचीन्द्राणी गान्धारी गन्धमालिनी ।
ध्यानातीता ध्यानगम्या ध्यानज्ञा ध्यानधारिणी ।।७६।।
लम्बोदरी च लम्बोष्ठी जाम्बवन्ती जलोदरी ।
महोदरी मुक्तकेशी मुक्तकामार्थसिद्धिदा ।।७७।।
तपस्विनी तपोनिष्ठा सुपर्णा धर्मवासिनी ।
वाणचापधरा धीरा पाञ्चाली पञ्चमप्रिया ।।७८।।
गुह्याङ्गी च सुभीमा च गुह्यतत्त्वा निरञ्जना ।
अशरीरा शरीरस्था संसारार्णवतारिणी ।।७९।।
अमृता निष्कला भद्रा सकला कृष्णपिङ्गला ।
चक्रप्रिया च चक्राह्वा पञ्चचक्रादिदारिणी ।।८०।।
पद्मरागप्रतीकाशा निर्मलाकाशसन्निभा ।
अधःस्था ऊर्ध्वरूपा च ऊर्ध्वपद्मनिवासिनी ।।८१।।
कार्यकारणकर्तृत्वे शश्वद्रूपेषु संस्थिता ।
रसज्ञा रसमध्यस्था गन्धस्था गन्धरूपिणी ।।८२।।
परब्रह्मस्वरूपा च परब्रह्मनिवासिनी ।
शब्दब्रह्मस्वरूपा च शब्दस्था शब्दवर्जिता ।।८३।।
सिद्धिबुद्धिः परा बुद्धिः सन्दीप्तिर्मध्यसंस्थिता ।
स्वगुह्या शाम्भवी शक्तिस्तत्त्वस्था तत्त्वरूपिणी ।।८४।।
शाश्वती भूतमाता च महाभूताभूताधिपप्रिया ।
शुचिप्रेता धर्मसिद्धिर्धर्मवृद्धिः पराजिता ।।८५।।
कामसन्दीपिनी कामा सदा कौतूहलप्रिया ।
जटाजूटधरा मुक्ता सूक्ष्मा शक्तिविभूषणा ।।८६।।
द्वीपिचर्मपरीधाना चीरवल्कलधारिणी ।
त्रिशूलडमरुधरा नरमालाविभूषणा ।।८७।।
अत्युग्ररूपिणी चोग्रा कल्पान्तदहनोपमा ।
त्रैलोक्यसाधिनी साध्या सिद्धिसाधकवत्सला ।।८८।।
सर्वविद्यामयी सारा चासुराणां विनाशिनी ।
दमनी दामनी दान्ता दयादोग्ध्री दुरापहा ।।८९।।

अग्निजिह्वोपमा घोरा घोरघोरतरानना ।
नारायणी नारसिंही नृसिंहहृदये स्थिता ।।९०।।
योगेश्वरी योगरूपा योगमाता च योगिनी ।
खेचरी खचरी खेला निर्वाणपदसंश्रया ।।९१।।
नागिनी नागकन्या च सुवेशा नागनायिका ।
विषज्वालावती दीप्ता कलाशतविभूषणा ।।९२।।
तीव्रवक्त्रा महावक्त्रा नागकोटित्वधारिणी ।
महासत्वा च धर्मज्ञा धर्मातिसुखदायिनी ।।९३।।
कृष्णमूर्द्धा महामूर्द्धा घोरमूर्द्धा वरानना ।
सर्वेन्द्रियमनोन्मत्ता सर्वेन्द्रियमनोमयी ।।९४।।
सर्वसंग्रामजयदा सर्वप्रहरणोद्यता ।
सर्वपीडोपशमनी सर्वारिष्टनिवारिणी ।।९५।।
सर्वैश्वर्यसमुत्पन्ना सर्वग्रहविनाशिनी ।
मातङ्गी मत्तमातङ्गी मातङ्गीप्रियमण्डला ।।९६।।
अमृतोदधिमध्यस्था कटिसूत्रैरलंकृता ।
अमृतोदधिमध्यस्था प्रवालवसनाम्बुजा ।।९७।।
मणिमण्डलमध्यस्था ईषत्प्रहसितानना ।
कुमुदा ललिता लोला लाक्षालोहितलोचना ।।९८।।
दिग्वासा देवदूती च देवदेवाधिदेवता ।
सिंहोपरि समारूढा हिमाचलनिवासिनी ।।९९।।
अट्टाट्टहासिनी घोरा घोरदैत्यविनाशिनी ।
अत्युग्ररक्तवस्त्राभा नागकेयूरमण्डिता ।।१००।।
मुक्ताहारलतोपेता तुङ्गपीनपयोधरा ।
रक्तोत्पलदलाकारा मदाघूर्णितलोचना ।।१०१।।
समस्तदेवतामूर्तिः सुरारिक्षयकारिणी ।
सङ्गिनी शूलहस्ता च चक्रिणी चक्रमालिनी ।।१०२।।
शंखिनी चापिनी बाणा वज्रिणी वज्रदण्डिनी ।
आनन्ददधिमध्यस्था कटिसूत्रैरलंकृता ।।१०३।।

नानाभरणदीप्ताङ्गी नानामणिविभूषिता ।
जगदानन्दसम्भूता चिन्तामणिगुणान्विता ।।१०४।।
त्रैलोक्यनमिता तुर्या चिन्मयानन्दरूपिणी ।
त्रैलोक्यनन्दिनी देवी दुःखदुस्स्वप्ननाशिनी ।।१०५।।
घोराग्निदाहशमनी राज्यदेवार्थसाधिनी ।
महापराधराशिघ्नी महाचौरभयापहा ।।१०६।।
रागादिदोषरहिता जरामरणवर्जिता ।
चन्द्रमण्डलमध्यस्था पीयूषार्णवसम्भवा ।।१०७।।
सर्वदेवैः स्तुता देवी सर्वसिद्धैर्नमस्कृता ।
अचिन्त्यशक्तिरूपा च मणिमन्त्रमहौषधी ।।१०८।।
अस्तिस्वस्तिमयी बाला मलयाचलवासिनी ।
धात्री विधात्री संहारी रतिज्ञा रतिदायिनी ।।१०९।।
रुद्राणी रुद्ररूपा च रुद्ररौद्रार्त्तिनाशिनी ।
सर्वज्ञा चैव धर्मज्ञा रसज्ञा दीनवत्सला ।।११०।।
अनाहता त्रिनयना निर्भारा निर्वृतिः परा ।
पराघोरा करालाक्षी सुमतीश्रेष्ठदायिनी ।।१११।।
मन्त्रालिका मंत्रगम्या मन्त्रमाला सुमंत्रिणी ।
श्रद्धानन्दा महाभद्रानिर्द्वन्द्वा निर्गुणात्मिका ।।११२।।
धरिणी धारिणी पृथ्वी धरा धात्री वसुन्धरा ।
मेरुमन्दरमध्यस्था स्थितिः शङ्करवल्लभा ।।११३।।
श्रीमती श्रीमयी श्रेष्ठा श्रीकरी भावभाविनी ।
श्रीदा श्रीमा श्रीनिवासा श्रीमती श्रीमताङ्गतिः ।।११४।।
उमा सारङ्गिणी कृष्णा कुटिला कुटिलालका ।
त्रिलोचना त्रिलोकात्मा पुण्यपुण्या प्रकीर्तिता ।।११५।।
अमृता सत्यसङ्कल्पा सा सत्या ग्रंथिभेदिनी ।
परेशी परमा साध्या पराविद्या परात्परा ।।११६।।
सुन्दराङ्गी सुवर्णाभा सुरासुरनमस्कृता ।
प्रजा प्रजावती धन्या धनधान्यसमृद्धिदा ।।११७।।

ईशानी भुवनेशानी भवानी भुवनेश्वरी ।
अनन्तानन्तमहिता जगत्सारा जगद्भवा ।।११८।।
अचिन्त्यात्मा चिंत्यशक्तिश्चिन्त्याचिन्त्यस्वरूपिणी ।
ज्ञानगम्या ज्ञानमूर्तिर्ज्ञानिनी ज्ञानशालिनी ।।११९।।
असिता घोररूपा च सुधाधारा सुधावहा ।
भास्करी भास्वती भीतिर्भास्वदक्षानुशायिनी ।।१२०।।
अनसूया क्षमा लज्जा दुर्लभा भरणात्मिका ।
विश्वघ्नी विश्ववीरा च विश्वघ्नी विश्वसंस्थिता ।।१२१।।
शीलस्था शीलरूपा च शीला शीलप्रदायिनी ।
बोधनी बोधकुशला रोधनी बोधनी तथा ।।१२२।।
विद्योतिनी विचित्रात्मा विद्युत्पटलसन्निभा ।
विश्वयोनिर्महायोनिः कर्मयोनिः प्रियात्मिका ।।१२३।।
रोहिणी रोगशमनी महारोगज्वरापहा ।
रसदा पुष्टिदा पुष्टिर्मानदा मानवप्रिया ।।१२४।।
कृष्णाङ्गवाहिनी कृष्णाकृष्णा कृष्णसहोदरी ।
शाम्भवी शम्भुरूपा च शंभुस्था शंभुसंभवा ।।१२५।।
विश्वोदरी योगमाता योगमुद्राघ्नयोगिनी ।
वागीश्वरी योगनिद्रा योगिनी कोटिसेविता ।।१२६।।
कौलिका मन्दकन्या च शृङ्गारपीठवासिनी ।
क्षेमङ्करी सर्वरूपा दिव्यरूपा दिगम्बरी ।।१२७।।
धूम्रवक्त्रा धूम्रनेत्रा धूम्रकेशी च धूसरा ।
पिनाकी रुद्रवेताली महावेतालरूपिणी ।।१२८।।
तपिनी तापिनी दीक्षा विष्णुविद्यात्मनाश्रिता ।
मन्थरा जठरा तीव्रा अग्निजिह्वाभयापहा ।।१२९।।
पशुघ्नी पशुरूपा च पशुहा पशुवाहिनी ।
पिता माता च धीरा च पशुपाशविनाशिनी ।।१३०।।
चन्द्रप्रभा चन्द्ररेखा चन्द्रकान्तिविभूषिणी ।
कुङ्कुमाङ्कितसर्वाङ्गी सुधासद्गुरुलोचना ।।१३१।।

शुक्लाम्बरधरा देवी वीणापुस्तकधारिणी ।
ऐरावतपद्मधारा श्वेतपद्मासनस्थिता ।।१३२।।
रक्ताम्बरधरा देवी रक्तपद्मविलोचना ।
दुस्तरा तारिणी तारा तरुणी तारारूपिणी ।।१३३।।
सुधाधारा च धर्मज्ञा धर्मसङ्गोपदेशिनी ।
भगेश्वरी भगाराध्या भगिनी भगनायिका ।।१३४।।
भगबिम्बा भगक्लिन्ना भगयोनिर्भगप्रदा ।
भगेश्वरी भगाराध्या भगिनी भगनायका ।।१३५।।
भगेशी भगरूपा च भगगुह्या भगावहा ।
भगोदरी भगानन्दा भगस्था भगशालिनी ।।१३६।।
सर्वसंक्षोभिणी शक्तिस्सर्वविद्राविणी तथा ।
मालिनी माधवी माध्वी मधुरूपा महोत्कटा ।।१३७।।
भेरुण्डचंद्रिका ज्योत्स्ना विश्वचक्षुस्तमोपहा ।
सुप्रसन्ना महादूती यमदूती भयङ्करी ।।१३८।।
उन्मादिनी महारूपा दिव्यरूपा सुरार्चिता ।
चैतन्यरूपिणी नित्या क्लिन्ना काममदोद्धता ।।१३९।।
मदिरानन्दकैवल्या मदिराक्षी मदालसा ।
सिद्धेश्वरी सिद्धविद्या सिद्धाद्या सिद्धसंभवा ।।१४०।।
सिद्धर्द्धिः सिद्धमाता च सिद्धिः सर्वार्थसिद्धिदा ।
मनोमयी गुणातीता परंज्योतिः स्वरूपिणी ।।१४१।।
परेशी परगा पारापरा सिद्धिः परागतिः ।
विमला मोहिनी आद्या मधुपानपरायणा ।।१४२।।
वेदवेदाङ्गजननी सर्वशास्त्रविशारदा ।
सर्वदेवमयी विद्या सर्वशास्त्रमयी तथा ।।१४३।।
सर्वज्ञानमयी देवी सर्वधर्ममयीश्वरी ।
सर्वयज्ञमयी यज्ञा सर्वमन्त्राधिकारिणी ।।१४४।।
सर्वसम्पत्प्रतिष्ठात्री सर्वविद्राविणी परा ।
सर्वसंक्षोभिणी देवी सर्वमङ्गलकारिणी ।।१४५।।

त्रैलोक्याकर्षिणी देवी सर्वाह्लादनकारिणी ।
सर्वसंमोहिनी देवी सर्वस्तम्भनकारिणी ।।१४६।।
त्रैलोक्यजृम्भिणी देवीतथा सर्ववशङ्करी ।
त्रैलोक्यरञ्जिनी देवी सर्वसम्पत्तिदायिनी ।।१४७।।
सर्वमन्त्रमयी देवी सर्वद्वन्द्वक्षयङ्करी ।
सर्वसिद्धिप्रदा देवी सर्वसम्पत्प्रदायिनी ।।१४८।।
सर्वप्रियकरी देवी सर्वमङ्गलकारिणी ।
सर्वकामप्रदा देवी सर्वदुःखविमोचिनी ।।१४९।।
सर्वमृत्युप्रशमनी सर्वविघ्नविनाशिनी ।
सर्वाङ्गसुन्दरी माता सर्वसौभाग्यदायिनी ।।१५०।।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यफलप्रदा ।
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ।।१५१।।
सर्वाधारस्वरूपा च सर्वपापहरा तथा ।
सर्वानन्दमयी देवी सर्वेक्षायाः स्वरूपिणी ।।१५२।।
सर्वलक्ष्मीमयी विद्या सर्वेप्सितफलप्रदा ।
सर्वारिष्टप्रशमनी परमानन्ददायिनी ।।१५३।।
त्रिकोणनिलया त्रिस्था त्रिमात्रा त्रितनुस्थिता ।
त्रिवेणी त्रिपथा त्रिस्था त्रिमूर्तिस्त्रिपुरेश्वरी ।।१५४।।
त्रिधाम्नी त्रिदशाध्यक्षा त्रिवित्त्रिपुरवासिनी ।
त्रयी विद्या त्रिशिरा त्रैलोक्या च त्रिपुष्करा ।।१५५।।
त्रिकोटरस्था त्रिविधा त्रिपुरा त्रिपुरात्मिका ।
त्रिपुरा श्री त्रिजननी त्रिपुरा त्रिपुरसुन्दरी ।।१५६।।
इदं त्रिपुरसुन्दर्यास्स्तोत्रं नामसहस्रकम् ।
गुह्याद्गुह्यतरं पुत्र तव प्रीत्यै प्रकीर्त्तितम् ।।१५७।।
गोपनीयं प्रयत्नेन पठनीयं प्रयत्नतः ।
नातः परतरं पुण्यं नातः परतरं तपः ।।१५८।।
नातः परतरं स्तोत्रं नातः परतरा गतिः ।
स्तोत्रं सहस्रनामाख्यं मम वक्त्राद्विनिर्गतम् ।।१५९।।

यः पठेत्प्रयतो भक्त्या शृणुयाद्वा समाहितः ।
मोक्षार्थी लभते मोक्षं स्वर्गार्थी स्वर्गमाप्नुयात् ।।१६०।।
कामांश्च प्राप्नुयात्कामी धनार्थी च लभेद्धनम् ।
विद्यार्थी लभते विद्या यशोर्थी लभते यशः ।।१६१।।

कन्यार्थी लभते कन्यां सुतार्थी लभते सुतम् ।
गुर्विणी जनयेत्पुत्रं कन्या विन्दति सत्पतिम् ।।१६२।।
मूर्खोपि लभते शास्त्रं हीनोऽपि लभते गतिम् ।
संक्रांत्या वार्कामावस्यामष्टम्यांञ्च विशेषतः ।।१६३।।

पौर्णमास्याञ्चतुर्दश्यां नवम्यां भौमवासरे ।
पठेद्वा पाठयेद्वापि शृणुयाद्वा समाहितः ।।१६४।।
स मुक्तस्सर्वपापेभ्यः कामेश्वरसमो भवेत् ।
लक्ष्मीवान्धर्मवांश्चैव वल्लभस्सर्वयोषिताम् ।।१६५।।

तस्य वश्यं भवेदाशु त्रैलोक्यं सचराचरम् ।
रुद्रं दृष्ट्वा यथा देवा विष्णुं दृष्ट्वा च दानवाः ।।१६६।।
यथाहिर्गरुडं दृष्ट्वा सिंहं दृष्ट्वा यथा गजाः ।
कीटवत्प्रपलायन्ते तस्य वक्त्रावलोकनात् ।।१६७।।

अग्निचौरभयं तस्य कदाचिन्नैव सम्भवेत् ।
पातका विविधाः शान्तिर्मेरुपर्वतसन्निभाः ।।१६८।।
यस्मात्तच्छृणुयाद्विघ्नांस्तृणं वह्निहुतं यथा ।
एकदा पठनादेव सर्वपापक्षयो भवेत् ।।१६९।।

दशधा पठनादेव वाचासिद्धिः प्रजायते ।
शतधा पठनाद्वापि खेचरो जायते नरः ।
सहस्रदशसंख्यातं यः पठेद्भक्तिमानसः ।।१७०।।

मातास्य जगतां धात्री प्रत्यक्षा भवति ध्रुवम् ।
लक्षपूर्णे यथा पुत्र स्तोत्रराजं पठेत्सुधीः ।।१७१।।
भवपाशविनिर्मुक्तो मम तुल्यो न संशयः ।
सर्वतीर्थेषु यत्पुण्यं सकृज्जप्त्वा लभेन्नरः ।।१७२।।

सर्ववेदेषु यत्प्रोक्तं तत्फलं परिकीर्त्तितम् ।
भूत्वा च बलवान्पुत्रधनावान्सर्वसम्पदः ।।१७३।।
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ।
स यास्यति न संदेहः स्तवराजस्य कीर्त्तनात् ।।१७४।।

श्रीवामकेश्वरतंत्रे षोडश्याः सहस्रनामस्तोत्रं समाप्तम्।

## *श्रीउपस्थानसहस्राक्षरी*

ऐं नमो भगवति त्रिपुरसुन्दरि दुर्गतितारिणि क्षमरीं प्रीं कर कर विसर विसर नृत्य नृत्य वद वद वाग्वादिनि स्वाहा ह्रीं नमः क्लीं नमः श्रींप्लींक्लीं नमः सुरासुरवन्दिते सकलजनक्षोभिणी श्रींश्रींश्रीं कारिणि द्रांद्रां द्राविणि मोंमों मोहिनि स्तंस्तं स्तम्भिनि आंआं आकर्षिणी परमसुभगे नमः कमलवासिनि रस रस वरवर्तिनि ह्रां ह्रां ह्रां करि ह्रीं ह्रीं ह्रीं कारि ह्रां ह्रां ह्रां कारिके कांकां काकिनि रांरां राकिणि डांडां डाकिनि हांहां हाकिनि ऐं शाङ्करि गनगन किशकिश भ्रमभ्रम वदवद सत्यसत्य उत उत मालिनि महामाये तत्त्वविग्रहे अरूपे अमले विमलेऽजिते अपराजिते मर्द मर्द हर हर संहर संहर ॐह्रींऐं कुरु कुरु लेप लेप किटि ॐजूंसः सौःक्लीं ऐंश्रीं नद नद नादबीजे त्रांत्रींत्रूंत्रैंत्रौंत्रः प्रांप्रींप्रूंप्रैंप्रौंप्रः ग्रांग्रींग्रूंग्रैंग्रौंग्रः रांरींरूंरैंरौंरः ल्रांल्रींल्रूंल्रैंल्रौंल्रः ब्रांब्रींब्रूंब्रैंब्रौंब्रः श्रांश्रींश्रूंश्रैंश्रौंश्रः प्रांप्रींप्रूंप्रौंप्रः स्रांस्रींस्रूंस्रैंस्रौंस्रः ह्रांह्रींह्रूंह्रैंह्रौंह्रः क्ष्रांक्ष्रींक्ष्रूंक्ष्रैंक्ष्रौंक्ष्रः गौरि रुद्रदयिते वज्रिणि वज्रनायिके कपालमालाधरे प्रेतासननिवासिनि सर्वतत्त्वावतारे अवतर अवतर गर्जगर्ज शोषय शोषय सर्वमन्त्रान् ग्रसग्रस सर्वदुष्टान् मर्द मर्द सर्वयन्त्रान् भञ्ज भञ्ज सर्वदुःखं तपतप तापय तापय तारे तारिणि परविद्यां छिन्धि छिन्धि परकायं प्रविश प्रविश वज्रिणि गोंगों गोचरि खेंखें खेचरि भूंभूं भूचरि हंसवाहे हस हस तिष्ठ तिष्ठ बन्धय बन्धय धारय धारय ऊर्णामिणि मोचय मोचय विमोचय विमोचय विमोचनि पश्य पश्य हुंरावे मेरुमन्दरसंकाशे महाविद्येश्वरि वाचं निर्यच्छ आच्छादिनि सरस्वति महाश्वेते किणिविद्ये अर्ककोटिसहस्रमालिनि पुर पुर द्रुम द्रुम अनन्तक्षोभकारिणी रणे वज्रादिकर्तरि विद्याविनोदिनि त्वर त्वर त्वरिते वह वह क्रन्दय क्रन्दय संक्रामय संक्रामय मदिरानन्द घूर्णिते कामेश्वरि गांगींगूंगैंगौंगः कन्दर्पमदविह्वले स्फुरद्योनिचक्रे भगवति भगमालिनी ईश्वरचक्रकपालडमरुकधारिणि महाभैरवि वसुधारे वसुमति धरिणिधरे वशय वशय कर्मधारिणी कामेशि जिह्वया वदवद मनसा रम रम क्रन्द वस वस बिन्दुप्रिये ह्रं ह्रं ह्रं ह्रं ह्रं रद शारदशशांकनिकाशे शारदे विद्यादानविशारदे क्लां गणनायिके आनन्दमयविग्रहे गृहीतपूर्णकपाले ज्वलज्जिह्वे ह्रादिनि नित्यक्लिन्ने मदद्रवे स्वाहा सौंसौंक्ष्मूं सरस्वत्यै नमः मदिरे मधुमति मदाभोगसुभगे भगमाले मुरु मुरु

चुरु चुरु धुन धुन स्फुर स्फुर स्फोटय स्फोटय घण्टारवेण निरन्तरपरबलभेदिनि फ्रें कुब्जिकायै ह्रांह्रीं नञणङ्मे अघोरमुखि किणि किणि विच्चे ऐंह्रांश्रीफ्रेंह्रींहुंफट् सर्वज्ञे जम्भ जम्भ जन्मजरामरणदारिद्र्यघातिनि सर्वसिद्धिनिधाने महाभयधारिणि ॐहंसः हुंफट् विद्येश्वरि ग्रांग्रींग्रूंग्रैंग्रौंग्रः लींप्रींसौः स्त्रौंक्ष्रौं क्षुद्रविद्राविणि विद्रुतविद्रुमप्रभे क्षप्रीं हौः चण्डि चण्डेश्वरि ब्रह्माण्डमालाधारिणि बन्धूकशोणाधरे त्रैलोक्यसत्ये नमः प्रसीद प्रसीद ऐंश्रीफ्रेंसौः ऐंह्रीं श्रीं श्रीमहात्रिपुरसुन्दरि स्वाहा।

इति श्रीत्रिपुरसुन्दर्युपस्थानसहस्राक्षरी।

## श्रीआवरणसहस्राक्षरी

ॐ ऐं ह्रीं श्रीं हंसः ॐ नमो भगवती अक्षोभ्ये रूक्षकर्णे राक्षसिपक्षत्रणे क्षपे पिङ्गलाक्षि अरुणे क्षये लीले लोले ललिते लूते लुलिते लम्बिके लंकेश्वरि लासे विमले हताशनि विशालाक्षि हूंकारे वडवामुखि महारवे महाक्रोडक्रोधिनि खरास्ये सर्वज्ञे तरले तारे दृष्टिहृष्टे खगकन्धरे सारसि रससंग्रहिणि तालजङ्घे करङ्किणि मेघनादे प्रचण्डोग्रे कालकर्णि चेलप्रदे चम्पे चम्पावति प्रचम्पे प्रलयान्तकि पितृवक्त्रे पिशाचाक्षि पिशुनि लोलुपे वानति वानरि वामविकृतास्ये वायुवेगे बृहत्कुक्षिविकृते विश्वरूपिणि यमजिह्वे जये दुर्जये पुमन्तकि बिडालरेवति पूतने विजये अनन्ते क्रन्दिनि चण्डि रेकर्णि (सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्ववशंकरि) सर्वोन्मादिनि सर्वमहांकुशे खेचरि (खचक्रधारिणी) सर्वबीजरूपे महायोनिरूपे त्रिखण्डे, अनङ्गब्राह्मि अनङ्गमाहेश्वरी अनङ्गकौमारि अनङ्गवैष्णवी अनङ्गवाराहि अनङ्गइन्द्राणि अनङ्गचामुण्डे अनङ्गमहालक्ष्मि प्रकटयोगिनीशि चार्वाकदर्शनाङ्गि त्रैलोक्यमोहनचक्रस्वामिनी, कामाकर्षिणि (बुध्याकर्षिणि अहङ्काराकर्षिणी शब्दाकर्षिणि स्पर्शाकर्षिणि रूपाकर्षिणि रसाकर्षिणि गन्धाकर्षिणि चित्ताकर्षिणि धैर्याकर्षिणि स्मृत्याकर्षिणि नामाकर्षिणि बीजाकर्षिणि आत्माकर्षिणि) अमृताकर्षिणि शरीराकर्षिणि गुप्तयोगिनीशि बौद्धदर्शनाङ्गि सर्वाशापूरकचक्रस्वामिनि अनङ्गकुसुमे अनङ्गमेखले अनङ्गमदने अनङ्गमदनातुरे अनंगरेखे अनंगवेगिनि अंगाँकुशे अनंगमालिनि अतिगुप्तयोगिनीशि रौद्रदर्शनांगि सर्वसंक्षोभिणचक्रस्वामिनि पूर्वाम्नायेशि सृष्टिप्रदे, सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्वाह्लादिनि सर्वसंमोहिनि सर्वस्तंभिनि सर्वजृम्भिनि सर्ववशंकरि सर्वरञ्जनि सर्वोन्मादिनि सर्वार्थसाधनि सर्वसम्पत्प्रपूरणि सर्वमन्त्रमयि सर्वद्वन्द्वक्षयङ्करि संप्रदाययोगिनीशि सर्वदर्शनांगि सर्वसौभाग्यदायकचक्रस्वामिनी, सर्वसिद्धिप्रदे सर्वसम्पत्प्रदे सर्वप्रियंकरि सर्वमङ्गलकारिणि सर्वकामप्रदे सर्वदुःखविमोचनि सर्वमृत्युप्रशमनि सर्वविघ्ननिवारणि सर्वांगसुन्दरि सर्वसौभाग्यदायिनि कुलकौलयोगिनीशि सर्वार्थसाधकचक्रस्वामिनि, सर्वज्ञे सर्वशक्ते सर्वैश्वर्यप्रदायिनि सर्वज्ञानमयि सर्वव्याधिविनाशिनि सर्वाधारस्वरूपे सर्वपापहरे सर्वानन्दमयि सर्वरक्षास्वरूपे सर्वेप्सितफलप्रदे निगर्भयोगिनीशि सर्वरक्षाकरचक्रस्वामिनि दक्षिणाम्नायेशि

स्थितिप्रदे, ब्लूँ वशिनि कलह्रीं कामेशि न्व्लूं मोदिनि य्लूं विमले ज्म्रीं अरुणे हसलवयूं जयिनि झमरयूं सर्वेश्वरि क्ष्म्रीं कौलिनि रहस्योगिनीशि शाक्तदर्शनाङ्गि सर्वरोगहरचक्रस्वामिनि, द्रां क्लिन्ने मोहनकामबाण द्रीं शोषणकामबाण क्लीं नित्यसंदीपनकामबाण ब्लूं मंद-संतापनकामबाण सः द्रवे उन्मादनकामबाण द्रांद्रींक्लींब्लूंसः जम्भिनी जम्भय जम्भय मोहिनि मोहय मोहय आं आकर्षिणि आकर्षय आकर्षय स्तंभिनि स्तंभय स्तंभय ऐं कामेशि क्लीं वज्रेशि सौः भगमाले अतिरहस्ययोगिनीशि सर्वसिद्धिमयचक्रस्वामिनी कामराजविद्यामहात्रिपुरसुन्दरीमातः परापररहस्ययोगिनीशि सौगतदर्शनाङ्गी सर्वानन्दमयचक्र- स्वामिनि पश्चिमाम्नायेशि अंआंसौः त्रिपुरे ऐं क्लीं सौः त्रिपुरेश्वरि ह्रींक्लींसौः त्रिपुरसुन्दरि हैं ह्क्लींहसौः त्रिपुरवासिनि हसैंहसक्लींहसौः त्रिपुराश्रि ह्रींक्लींब्लें त्रिपुरमालिनि ह्रींश्रींसौः त्रिपुरासिद्धे हस्त्रैं हसकलरीं हस्त्रौः त्रिपुराम्बे हसकलरडैं हसकलरडीं हसकलरडौः महात्रिपुरभैरवि अं कामेशि आं भगमाले इं नित्यक्लिन्ने ईं भीरुण्डे उं वह्निवासिनि ऊं महावज्रेश्वरि ऋं शिवदूति ॠं त्वरिते लृं कुलसुन्दरि ॡ नित्ये एं नीलपताके ऐं विजये ओं सर्वमङ्गले औं ज्वालामालिनि अं विचित्रे अः कामेश्वरि विद्यामालिनि अकुले कुलाकुलमहाकुले सर्वोत्तरपञ्चार्थज्ञानप्रदे सर्वदर्शनाङ्गमयि सर्वदर्शनोत्तीर्णस्वरूपिणि सर्वाध्वशोधनि कालकालेशवर्णे नवाक्षरि बालविद्या षोडशाधिका च नवकूटद्वयं सहखफ्रें आनन्देश्वरि घोरकालिनि अम्बाश्रीपादुकां पूजयामि हंसः श्रींह्रींऐं।

इत्यावृत्तिसहस्रार्णाविद्या त्रैलोक्यपूजिता।

## पुष्पाञ्जलिस्तोत्रम्

किं किं द्वन्द्वं दनुजदलिनि क्षीयते न श्रुतायां । का का सिद्धिः कुलकमलिनि प्राप्यते नार्चितायाम्।।
का का कीर्तिः सुरवरनुते व्याप्यते न स्तुतायां । कं कं भोगं त्वयि न चिनुते चित्तमालम्बितायाम्।।
सकुसं सकुसं रम्भ स्वारिता मोक्षविभ्रमे । चिच्चन्द्रमण्डलान्तःस्थे नमस्ते हरवल्लभे ।।
जगदुद्धारणोद्योग योगभोगवियोगिनि । स्थितिभावस्थिते देवि नमः स्थाणुप्रियेऽम्बिके ।।
भावाभावपृथग्भावानुभावे वेदकर्मणि । चैतन्यपञ्चके देवि नमस्तुभ्यं हराङ्गने ।।
सृष्टिस्थित्युपसंहारप्रत्युर्जितपदद्वये । चिद्विश्रन्तिमहासत्तामात्रे मातर्नमोऽस्तु ते ।।
वह्न्यर्कशीतकिरण ब्रह्म चक्रान्तरोदिते । चतुष्पीठेश्वरि शिवे नमस्ते त्रिपुरेश्वरि ।।
चराचरमिदं विश्वं प्रकाशयसि तेजसा । मातृकारूपमास्थाय तस्यै मातर्नमोऽस्तु ते ।।
स्मृता भवभयं हंसि पूजिताऽसि शुभङ्करि । स्तुता त्वं वाञ्छितं वस्तु ददासि करुणावरे ।।
भक्तस्य नित्यपूजायां रतस्य मम साम्प्रतम् । वाग्भवादिमहासिद्धिं देहि त्रिपुरसुन्दरि ।।
परमानन्दसन्दोहप्रमोदभरनिर्भरे । दुःखत्रयपरिम्लानवदनं पाहि मां शिवे ।।

शब्दब्रह्ममयि यच्च देवि त्रिपुरसुन्दरि । यथाशक्ति जपं पूजां गृहाण मदनुग्रहात् ।।
अज्ञानादल्पबुद्धित्वादालस्याद् दुष्टभावतः । ममापराधं कार्पण्यं क्षमस्व परदेवते ।।
अज्ञानामसमर्थानामस्वस्थानिवासिनाम् । अशुद्धं बलमस्माकं शिशूनां हरवल्लभे ।।
कृपामयि कृपां भद्रे सकृन्मयि निवेशय । तावदहं कृतार्थोऽस्मि न ते किञ्चन हीयते ।।
यन्मया क्रियते कर्म जाग्रत्स्वप्नसुषुप्तिषु । तत्सर्वं तावकी पूजा भूयाद् भूत्यै रमे शिवे ।।
द्रव्यहीनं क्रियाहीनं विधिहीनञ्च यद् भवेत् । तत्सर्वं कृपया देवि क्षमस्व परदेवते ।।
यन्मयोक्तं महाज्ञानं तन्महत् स्वल्पमेव वा । तावत् सर्वं जगद्धात्रि क्षन्तव्यमयमंजलिः ।।

इति श्रीत्रिपुरार्णवे पुष्पाञ्जलिस्तोत्रम्।

## सौन्दर्यलहरी

(प्रयोग चक्रादिविषयानुक्रमणिकसहित)

### न्यासः

अस्य श्री सौन्दर्यलहरी स्तोत्रस्य गोविन्द ऋषिः। अनुष्टुप् छन्दः। श्रीमहात्रिपुरसुन्दरी देवता। शिव शक्त्या युक्त इति बीजं। सुधासिन्धोर्मध्य इति शक्तिः। जपो जल्पमिति कीलकम्। ह्रां ह्रीं हूँ ह्रैं ह्रौं ह्रः इत्यादि षडङ्गन्यासः।

### ध्यानम्

लौहित्यनिर्जित जपाकुसुमानुरागां पाशाङ्कुशे धनुरिषुनपि धारयन्तीम्।
ताम्रायतामरूणमाल्य विशेषशोभां ताम्बूल्पूरितिमुखीं त्रिपुरां नमामि।।
लमित्यदि पंच्चोपचाराः।

### ( *पूर्वार्द्ध* )

शिवः शक्त्या युक्तो यदिभवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।
अतस्त्वाराध्यां हरिहरविरञ्चादिभिरपि प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ।।१।।
तनीयांसं पांसुं तव चरणपंकेरुहभवं विरिञ्चिः संचिन्वन्विरचयति लोकानविकलम् ।
वहत्येनं शौरिः कथमपि सहस्त्रेण शिरसां हरः संक्षुद्यैनं भजति भसितोद्धूलनविधिम् ।।२।।
अविद्यानामन्तस्तिमिरमिहिरोद्दीपनकरी जडानां चैतन्यस्तबकमकरन्दस्तुतिझरी ।
दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवती ।।३।।
त्वदन्यः पाणिभ्यामभयवरदो दैवतगणस्त्वमेका नैवासि प्रकटितवराभीत्यभिनया ।
भयात्रातुं दातुं फलमपि च वाञ्छासमधिकं शरण्ये लोकानां तव हि चरणावेव निपुणौ ।।४।।

हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीं पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत् ।
स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा मुनीनामप्यन्तः प्रभवति हि मोहाय महताम् ।।५।।
धनुः पौष्पं मौर्वी मधुकरमयी पञ्चविशिखाः वसन्तः सामन्तो मलयमरुदायोधनरथः।
तथाऽप्येकः सर्वं हिमगिरिसुते! कामपि कृपामपाङ्गात्ते लब्ध्वा जगदिद (न) मनङ्गो विजयते ।।६।।
क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ।।७।।
सुधासिन्धोऽर्मध्ये सुरविटपिवाटीपरिवृते मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।
शिवाऽऽकारे मञ्चे परमशिवपर्यङ्कनिलयां भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम् ।।८।।
महीं मूलाधारे कमपि मणिपूरे हुतवहं स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।
मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं सहस्रारे पद्मे सह रहसि पत्त्या विहरसे ।।९।।
सुधाधाराऽऽसारैश्चरणयुगलान्तर्विगलितैः प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः ।
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं स्वमात्मानं कृत्त्वा स्वपिषि कुलकुण्डे कुहरिणी ।।१०।।
चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि प्रभिन्नाभिः शम्भोर्नवभिरपि मूलप्रकृतिभिः।
चतुश्चत्वारिंशद्वसुदलकलाश्र(श्च)त्रिवलयत्रिरेखाभिः सार्धं तव शरण(भवन)कोणाः परिणताः।।११।।
त्वदीयं सौन्दर्यं तुहिनगिरकन्ये तुलयितुं कवीन्द्राः कल्पन्ते कथमपि विरिञ्चिप्रभृतयः ।
यदालोकौत्सुक्यादमरललना यान्ति मनसा तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम् ।।१२।।
नरं वर्षीयांसं नयनविरसं नर्मसु जडं तवापाङ्गालोके पतितमनुधावन्ति शतशः ।
गलद्वेणीबिन्धाः कुचकलशविस्रस्तसिचया हठात्त्रुट्यत्काञ्च्यो विगलितदुकूला युवतयः ।।१३।।
क्षितौ षट्पञ्चाशद्द्विसमधिकपञ्चाशदुदके हुताशे द्वाषष्टिश्चतुरधिकपंचाशदनिले ।
दिवि द्विषट्त्रिंशन्मनसि च चतुःषष्टिरिति ये मयूखास्तेषामप्युपरि तव पदाम्बुजयुगम् ।।१४।।
शरज्ज्योत्स्नाशुभ्रां शशियुतजटाजूटमुकुटां वरत्रासत्राणस्फटिकघुटि(णि)कापुस्तककराम् ।
सकृन्न त्वां नत्वा कथमिव सतां सन्निदधते मधुक्षीरद्राक्षामधुरिमधुरीणाःफणितयः ।।१५।।
कवीन्द्राणां चेतः कमलवनबालातपरुचिं भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम् ।
विरिञ्चिप्रेयस्यास्तरुणतरशृङ्गारलहरीगभीरावाभिर्वाग्भिर्विदधति सतां(भां) रंजनमयी ।।१६।।
सावित्रिभिर्वाचां शशिमणिशिलाभङ्गरुचिभिर्वशिन्याद्याभिस्त्वां सह जननि सञ्चिन्तयति यः ।
स कर्ता काव्यानां भवति महतां भङ्गिसुभगै(रुचिभि)र्वचोभिर्वाग्देवीवदनकमलामोदमधुरैः ।।१७।।
तनूच्छायाभिस्ते तरुणतरणिश्रीध(स)रणिभिदिवं सर्वामुर्वीमरुणिमनिमग्नां स्मरति यः ।
भवन्त्यस्य त्रस्यद्वनहरिणशालीननयनाः सहोर्वश्या वश्याः कति कति न गीर्वाणगणिकाः ।।१८।।

मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो ह(का)रार्धं ध्यायेद्यो हरमहिषिते मन्मथकलाम् ।
स सद्यः संक्षोभं गयति वनिता इत्यतिलघु त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ।।१९।।
किरन्तीमङ्गेभ्यः किरणनिकुरम्बामृतरसं हृदि त्वामाधत्ते हिमकरशिलामूर्तिमिव यः ।
स सर्पाणां दर्पं शमयति शकुन्ताधिप इव ज्वरप्लुष्टान्दृष्ट्या सुखयति सुधाऽऽधा(सा)रसिरया ।।२०।।
तडिल्लेखातन्वीं तपनशशिवैश्वानरमयीम् निषण्णां षण्णामप्युपरि कमलानां तव कलाम् ।
महापद्माटव्यां मृदितकलमायेन मनसा महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ।।२१।।
भवानि त्वं दासे मयि वितर दृष्टिं सकरुणामिति स्तोतुं वाञ्छन् कथयति भवानि त्वमिति यः।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदाम् ।।२२।।
त्वया हृत्वा वामं वपुरपरितृप्तेन मनसा शरीरार्द्धं शम्भोरपरमपि शङ्के हृतमभूत् ।
यदेत (तथाहि) त्वद्रूपं सकलमरुणाभ त्रिनयनं कुचाभ्यामानम्र कुटिलशशिचूडालमुकुटम्।।२३।।
जगत्सूते धाता हरिरवति रुद्रः क्षपयते तिरस्कुर्वन्नेतत्स्वमपि वपुरीशः स्थगयति (स्थिरयति)।
सदा पूर्वः सर्वं तदिदमनुगृह्णाति च शिवस्तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ।।२४।।
त्रयाणां देवानां त्रिगुणजनितानां तव शिवे भवेत्पूजा पूजा तव चरणयोर्या विरचिता ।
तथा हि त्वत्पादोद्वहनमणिपीठस्य निकटे स्थिताह्येतेशश्वन्मुकुलितकरोत्तंसमुकुटाः ।।२५।।
विरञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं विनाशं कीनाशो भजति धनदो याति निधनम् ।
वितन्द्राः माहेन्द्री विततिरपि संमीलतिदृशा महासंहारेऽस्मिन्विहरति सति त्वत्पतिरसौ ।।२६।।
जपो जल्पः शिल्पं सकलमपि मुद्राविरचन गतिः प्रादक्षिण्यं क्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ।।२७।।
सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरणीं विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः ।
करालं यत्क्ष्वेलं (डं) कबलितवतः कालकलना न शम्भोस्तन्मूलं तव जननि ताटङ्कमहिमा ।।२८।।
किरीटं वैरिञ्च्यं परिहर पुरः कैटभभिदः कठोरे कोटीरे स्खलसि जहिजम्भारिमुकुटम् ।
प्रणम्रेष्वेतेषु प्रसभमुपयातस्य भवनं भवस्याभ्युत्थाने तव परिजनोक्तिर्विजयते ।।२९।।
स्वदेहोद्भूताभिर्घृणिभिरणिमाऽऽद्याभिरभितो निषेव्ये नित्ये त्वामहमिति सदा भावयति यः ।
किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतो महासंवर्ताग्निर्विरचयति नीराजनविधिम् ।।३०।।
चतुःषष्ट्या तन्त्रैः सकलमिति (भि)संधाय भुवनं स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः।
पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना-स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ।।३१।।
शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः स्मरो हंसः शक्रस्तदनु च परामारहरयः।
अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता भजन्ते वर्णास्ते तव जननि नामावयवताम् ।।३२।।

स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ तव मनोर्निधायैके नित्ये निरवधिमहाभोगरसिकाः ।
भजन्ति त्वां चिन्तामणिगुणनिबद्धाक्षव(र)लयाः शिवाऽग्नौ जुह्वन्तः सुरभिघृतधाराऽऽहुतिशतैः ।।३३।।
शरीरं त्वं शम्भोः शशिमिहिरवक्षोरुहयुगं तवात्मानं मन्ये भगवति नवा (भवा) त्मानमनघम् ।
अतः शेषः शेषीत्ययमुभयसाधारणतया स्थितः सम्बन्धो वां समरसपरमानन्दपरयोः ।।३४।।
मनस्त्वं व्योमस्त्वं मरुदसि मरुत्सारथिरसि त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम ।
त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा चिदानन्दाकारं शिवयुवति भावेन विभृषे ।।३५।।
तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं परं शम्भु वन्दे परिमिलितपार्श्वे परचिता ।
यमाराध्यन् भक्त्या रविशशिशुचीनामविषये निरालोकेऽलोके निवसति हि भालोकभ(भु)वने ।।३६।।
विशुद्धौ ते शुद्धस्फटिकविशदं व्योमजनकं शिवं सेवे देवीमपि शिवसमानव्यवसिताम् ।
ययोः कान्त्यायान्त्या शशिकिरणसारूप्यसरणे विधूतान्तर्ध्वान्ता विलसति चकोरीव जगती ।।३७।।
समुन्मीलत्संवित्कमलमकरन्दैकरसिकं भजे हंस द्वन्द्वं किमपि महतां मानसचरम् ।
यदालापादष्टादशगुणितविद्यापरिणतिर्यदादत्ते दोषागुणमखिलमद्भ्यः पय इव ।।३८।।
तव स्वाधिष्ठाने हुतवहमधिष्ठाय निरतं तमीडे संवर्तं जननि महतीं तां च समयाम् ।
यदालोके लोकान्दहति महति क्रोधकलिते दयार्द्रा(भिर्द्दग्भिः)या दृष्टिः शिशिरमुपचारंरचयति ।।३९।।
तडित्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम् ।
तव (तमः) श्याम मेघं कमपि मणिपूरैकशरणं निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम् ।।४०।।
तवाधारे मूले सह समयया लास्यपरया शिवा(नवा)त्मानं मन्ये नवरसमहाताण्डवनटम् ।
उभाभ्यामेताभ्यामुद(भ)यविधिमुद्दिश्य दयया सनाथाभ्यां यज्ञे जनकजननीमज्जनदिदम् ।।४१।।

( उत्तरार्द्ध )

गतैर्माणिक्यत्वं गगनमणिभिः सान्द्रघटितं किरीटं ते हैमं हिमगिरिसुते कीर्तयति यः ।
स नीडेयच्छायाच्छुरणशबलचन्द्रशकलं धनुः शौनासीरं किमिति न निबध्नाति धिषणाम् ।।४२।।
धनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनं धनस्निग्धं श्लक्ष्णं चिकुरनिकुरुम्ब तव शिवे ।
यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो वसन्त्यस्मिन्मन्ये बलमथनवाटीविटपिनाम् ।।४३।।
वहन्ती सिन्दूरं प्रबलकबरीभारतिमिरद्विषां वृन्दैर्वन्दीकृतमिव नवीनार्ककिरणम् ।
तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी परिवाहः स्त्रोतः सरणिरिव सीमान्तसरणिः ।।४४।।
अरालैः स्वाभाव्यादलिकलभसश्रीभिरलकैः परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् ।
दरस्मेरे यस्मिन्दशनरुचि किञ्जल्करुचिरे सुगन्धौ माद्यन्ति स्मरदहनचक्षुर्मधुलिहः ।।४५।।

ललाटं लावण्यद्युतिविमलमाभाति तव यत् द्वितीयं तन्मन्ये मुकुट घटितं चन्द्रशकलम् ।
विपर्यान्यासादुभयमपि सम्भूय च मिथः सुधालेपस्यूतिः परिणमति राकाहिमकरः ॥४६॥
भ्रुवौ भुग्ने किञ्चिद् भुवनभयभङ्गव्यसनिनि त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणम् ।
धनुर्मन्ये सव्येतरकरगृहीतं रतिपतेः प्रकोष्टे मुष्टौ च स्थगयति निगूढान्तरसुमे ॥४७॥
अहसूते सव्यं तव नत्र्यनमर्कात्मकतया त्रियामां वामं ते सृजति रजनीनायकतया ।
तृतीया ते दृष्टिर्दरदलितहेमाम्बुजरुचिः समाधत्ते सन्ध्यां दिवसनिशयोरन्तरचरीम् ॥४८॥
विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः कृपाधारा धारा किमपि मधुरा भोगवतिका ।
अवन्ती दृष्टिस्ते बहुनगर विस्तार विजया ध्रुवं तत्त्नामव्यवहरणयोग्या विजयते ॥४९॥
कवीनां सन्दर्भस्तवकमकरन्दैकरसिकं कटाक्षव्याक्षेपभ्रमर कलभौ कर्णयुगलम् ।
अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरला असूयासंसर्गादलिकनयनं किञ्चिदरुणम् ॥५०॥
शिवे शृङ्गारार्द्रा तदितरजने कुत्सनपरा सरोषा गङ्गायां गिरिश्चरिते विस्मयवती ।
हराहिभ्यो भीता सरसिरुह सौभाग्यजननी सखीषु स्मेरा ते मयि जननि दृष्टिस्सकरुणा ॥५१॥
गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती पुरां भेत्तश्चित्तप्रशमरसविद्रावणफले ।
इमे नेत्रे गोत्राधरपतिकुंलोत्तंसकलिके तवाकर्णाकृष्टस्मरशरविलासं कलयतः ॥५२॥
विभक्तत्रैवर्ण्यं व्यतिक्ररितलीलाञ्जनतया विभाति त्वन्नेत्रत्रितयमिदमीशानयिते ।
पुनः स्त्रष्टुं देवान्द्रुहिणहरिरुद्रानुपरतान् रजः सत्त्वं विभ्रत्तम इति गुणानां त्रयमिव ॥५३॥
पवित्री कर्तुं नः पशुपतिपराधीन हृदये दयामित्रैर्नेत्ररुणधवलश्यामरुचिभिः ।
नदः शोणो गङ्गा तपनतनयेति ध्रुवममु (मयं) त्रयाणां तीर्थानामुपनयसि सम्भेदमनघम् ॥५४॥
निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती तवेत्याहुः सन्तो धरणिधरराजन्यतनये ।
त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥५५॥
तवापर्णे कर्णे जपनयनपैशुन्यचकिता निलीयन्ते तोये नियतमनिमेषाश्शफरिकाः ।
इयं च श्रीर्बद्धच्छदपुटकवाटं कुवलयं जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥५६॥
दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च हानिरियता वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥५७॥
अरालं ते पाली युगलमगराजन्यतनये न कषामाधत्ते कुसुमशरकोदण्डकुतुकम् ।
तिरश्चीनो यत्र श्रवणपथमुल्लंध्य विलसन्नपाङ्गव्यासङ्गो दिशति शरसन्धानधिषणाम् ॥५८॥
स्फुरद्गण्डाभोग प्रतिफलितताटङ्कयुगलं चतुश्चक्रं मन्ये तव मुखमिदं मन्मथरथम् ।
यमारुह्य (यमाश्रित्य) द्रुह्यत्यवनिरथमर्केन्दुचरणं महावीरो मारः प्रमथपतये सज्जितवते ॥५९॥

सरस्वत्याः सूक्तिरमृतलहरीकौशलहरीः पिबन्त्याः शर्वाणि श्रवणचुलुकाभ्यामविरलम् ।
चमत्कारश्लाघाचलितशिरसः कुण्डलगणो झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ।।६०।।
असौ नासावंशस्तुहिनगिरिवंशध्वजपटि (पटे) त्वदीयो नेदीयः फलतु फलमस्माकमुचितम् ।
वहन्नन्तर्मुक्ताःशिशिरतरनिश्वासघटिताः(गलिताः)समृद्ध्या यत्तासां बहिरपि च मुक्तामणिधरः ।।६१।।
प्रकृत्याऽऽरक्तायास्तव सुदति दन्तच्छदरुचेः प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलता ।
न बिम्बं तद्बिम्बप्रतिफलनरागादरुणितं तुलामध्यारोढुं कथमिव न लज्जेत् कलया ।।६२।।
स्मित ज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां चकोराणामासीदतत्तिरसतया चञ्चजडिमा।
अतते शीतांशोरमृतलहरीमाम्लरुचयः पिबन्ति वछदं निशनिश भृशं काञ्जिकधिया ।।६३।।
अविश्रान्तं पत्युर्गुणगणकथाऽऽम्रेडनजपा जपापुष्पच्छाया तव जननि जिह्वा जयति सा।
यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी सरस्वत्या मूर्तिः परिणमति माणिक्यवपुषा।।६४।।
रणे जित्वा दैत्यनपहृतशिरस्त्रैः कवचिभिर्निवृत्तंश्चण्डांशत्रिपुरहरनिर्माल्यविमुखैः ।
विशाखेन्द्रोपेन्द्रैः शशिविशदकर्पूरशकला विलीयन्ते मातस्तव वदनताम्बूलकवलाः ।।६५।।
विपञ्चया गायन्ती विविधमपदानं पशुपतेस्त्वयाऽऽरब्धे वक्तुं चलितशिरसा साधुवचने।
तदीयर्माधुर्यरपलपिततन्त्रीकलरवां निजां वीणां वाणी निचुलयति चोलेन निभृतम् ।।६६।।
कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया गिरीशेनोदस्तं मुहुरधरपानाकुलतया ।
करग्राह्यं शम्भोर्मुखमुकुरवृन्त गिरिसुते कथंकारं ब्रूमस्त्रव चिबुकमोपम्यरहितम् ।।६७।।
भुजाश्लोषान्नित्यं पुरदमयितुः कण्टकवतीतव ग्रीवा धत्ते मुखकमलनालश्रियमियम् ।
स्वतः श्वेता कालागरुबहुलजम्बालमलिना मृणालीलालित्यं वहति यददो हारलतिका।।६८।।
गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे विवाहव्यानद्धप्रगुणगुणसंख्याप्रतिभुवः ।
विराजन्ते नानाविधमधुररागाकरभुवां त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते ।।६९।।
मृणाली मृद्वीनां तव भुजलतानाञ्चतसृणां चतुर्भिः सौन्दर्यसरसिजभवः स्तौति वदनैः ।
नखेभ्यः संत्रस्यन्प्रथममथनादन्धरिपोश्चतुर्णां शीर्षाणां सममभयहस्तार्पणधिया ।।७०।।
नखानामुद्योतैर्नवनलिनरागं विहसतां कराणां ते कान्ति कथय कथमयामः कथमुमे ।
कयाचिद्वा साम्यं भवतु कलया हन्त कमलं यदि क्रीडल्लक्ष्मीचरणतलक्षाऽरुणदलम् ।।७१।।
समं देवि स्कन्दद्विपवदनपीतं स्तनयुगं तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम् ।।
यदालोक्याशङ्काऽऽकुलितहृदयो हासजनकः स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति ।।७२।।
अमू ते वक्षोजावमृतरसमाणिक्यकुतुपौ (कलशौ) न सन्देहस्पन्दो नगपतिपताके मनसि नः ।
पिबन्तौ तौ यस्मादविदितवधूसङ्गरसिकौ कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ ।।७३।।

बहत्यम्ब स्तम्बेरमदनुजकुम्भप्रकृतिभिः समारब्धां मुक्तामणिभिरमलां हारलतिकाम् ।
कुचाभागो बिम्बाधररुचिभिरन्तः शबलितां प्रतापव्यामिश्रां पुरदमयितुः कीर्तिमिव ते ।।७४।।
तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः पयः पारावारः परिवहति सारस्वतमिव ।
दयावत्या दत्त द्रविडशिशुरस्वाद्य तव यत् कवीनां प्रौढानामजनिकमनीयः कवयिता ।।७५।।
हरक्रोधज्वालाऽवलिभिरवलीढेन वपुषा गभीरे ते नाभीसरसि कृतसङ्गो मनसिजः ।
समुत्तस्थो तस्मादचलतनये धूमलतिका जनस्तां जानीते तव जननि रोमावलिरिति ।।७६।।
यदेतत्कालिन्दीतनुतरतरङ्गाकृति शिवे कृशेमध्ये किञ्चिज्जननि तव तद्भाति सुधियाम् ।
विमर्ददन्योऽन्यं कुचकलशयोरन्तरगतं तनुभूतं व्योम प्रविशदिव नाभिं कुहरणीम् ।।७७।।
स्थिरो गङ्गाऽऽवर्तं स्तनमुकुलरोमावलिलता-निजाबालं कुण्डं कुसुमशरतेजोहुतभुजः ।
रतेर्लीलाऽगारं किमपि तव नाभिर्गिरिसुते बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते ।।७८।।
निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो नमन्मूर्तेर्नाभौ वलिषु च शनैस्त्रुट्यत इव ।
चिरं ते मध्यस्य त्रुटिततटिनीतीरतरुणा समावस्थास्थेम्नो भवतु कुशलं शैलतनये ।।७९।।
कुचौ सद्यः स्विद्यतटघटितकूर्पासभिदुरौ कषन्तौ दोर्मूले कनककलशाभौ कलयता ।
तव त्रातुं भङ्गादलमिति वलग्नं तनुभुवा त्रिधानद्धं देवि त्रिवलिलवलीवल्लिभिरिव ।।८०।।
गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजात् नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे ।
अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं नितम्बप्राग्भारः स्थगयति लघुत्वं नयति च ।।८१।।
करीन्द्राणांशुण्डान् कनककदलीकाण्डपटलीमुभाभ्यामुरुभ्यामुभयमपिनिर्जित्य भवती ।
सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते विधिज्ञे जानुभ्यां विबुधकरिकुम्भद्वयमपि ।।८२।।
पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते निषङ्गौ जङ्घे ते विषमविशिखो वाढमकृत ।
यदग्रे दृश्यन्ते दशशरफलाः पादयुगली-नखाग्रच्छद्मानः सुरमुकुटशाणैकनिशिताः ।।८३।।
श्रुतीनां मूर्धानो दधति तव यौ शेखरतया ममाप्येतौ मातः शिरसि दयया धेहि चरणौ ।
ययौः पाद्यं पाथः पशुपतिजटाजूटतटिनी ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ।।८४।।
नमोवाकं ब्रूमो नयनरमणीयाय पदयोस्तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते ।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते पशूनामीशानः प्रमदवनकङ्केलितरवे ।।८५।।
मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं ललाटे भर्तारं चरणकमले ताडयति ते ।
चिरादन्तः शल्यं दहनकृतमुन्मूलितवता तुलाकोटिक्वाणैः किलिकिलितमीशानरिपुणा ।।८६।।
हिमानीहन्तव्यं हिमगिरिनिवसैक चतुरौ निशायां निद्राणं निशि च रमभागे च विशदौ ।
वरं लक्ष्मी पात्रं श्रियमतिसृजन्तौ समयिनां सरोजं त्वत्पादौ जननि जयतिश्चित्रमिह किम् ।।८७।।

पदं ते कीर्त्तीनां प्रपदमपदं देवि विषदां कथं नीतं सद्भिः कठिनकमठीखर्परतुलाम् ।
कथं वा बाहुभ्यामुपयमनकाले पुरभिदा यदादाय न्यस्तं दृषदि दयमानेन मनसा ।।८८।।
नखैनकिस्त्रीणां करकमलसङ्कोचशशिभिस्तरूणां दिव्यानां हसत इव ते चण्डि चरणौ ।
फलानि स्वः स्थेभ्यः किसलयकराग्रेण ददतां दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ।।८९।।
ददाने दीनेभ्यः श्रियमनिशमाशाऽनुसदृशीं-अमन्दं सौन्दर्यप्रकरमकरन्दं विकिरति ।
तवास्मिन्मन्दारस्तवकसुभगे यातु चरणे निमज्जन्मज्जीवः करणचरणः षट्चरणताम् ।।९०।।
पदन्यासक्रीडापरिचयमिवाब्धुमनसश्चरन्तस्ते खेलं भवनकलहंसा न जहति ।
अतस्तेषां शिक्षां सुभगमणिमञ्जीररणितच्छालादाचक्षाणं चरणकमलं चारुचरिते ।।९१।।
गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः ।
त्वदीयानां भासां प्रतिफलनरागारुणतया शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ।।९२।।
अराला केशेषु प्रकृतिसरला मन्दहसिते शिरीषाभा गात्रे दृषदिव कठोरा कुचतटे ।
भृशंतन्वी मध्ये पृथुरपि वरारोहविषये जगत् त्रातुं शम्भोर्जयति करुणा काचिदरुणा ।।९३।।
कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं कलाभिः कपूरैर्मरकतकरण्डं निविडतम् ।
अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहर विधिर्भूयो भूयो निविडयति नूनं तव कृते ।।९४।।
पुरारातेरन्तःपुरमसि तत्सत्वच्चरणयोः सपर्यामर्यादा तरलकरणानामसुलभा ।
तथाह्येते नीताः शतमखमुखाः सिद्धिमतुलां तव द्वारोपाञ्जस्थितिभिरणिमाऽऽद्याभिरमराः ।।९५।।
कलत्रं वैधात्रं कति कति भजन्ते न कवयः श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः ।
महादेवं हित्त्वा तदें सति सतीनामचरमे कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः ।।९६।।
गिरामाहुर्देवी द्रुहिणगृहिणीमागमविदो हरेः पत्नि पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया काऽपि त्वं दुरधिगम निःसीममहिमा महामाया विश्वं भ्रमयसि परब्रह्ममहिषि।।९७।।
कदा काले मातः कथय कलितालक्तकरसं पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम् ।
प्रकृत्या मूकानामपि च कविताकारणतया कदाधत्ते वाणी मुखकमलताम्बूलरसताम् ।।९८।।
सरस्वत्या लक्ष्म्या विधि हरि सपत्नो विहरते रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।
चिरञ्जीवन्नेव क्षपितपशुपाशव्यतिकरः परानन्दाभिख्यं रसयति रसं त्वद्भजनवान् ।।९९।।
प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः सुधासुतेश्चन्द्रोपलजललवैरर्घ्यरचना ।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम्।।१००।।

### श्लोक १




(i) यन्त्रमिदं तण्डुलपिष्टेन स्थण्डिले विलिख्यघृतदीपसंस्थापनपूर्वकं द्वादशदिनानि सम्पूज्य प्रत्यहं श्लोकमिमं सहस्रमावर्तयेत्। अनेन सकलकार्यजय:।

(ii) इदमेव यन्त्रं हेमपट्टतले विलिख्य पूर्वाभिमुखो द्वादश दिनानि सम्पूज्य श्लोकमिमं प्रतिदिनं सहस्रमावर्त्य कण्ठे धारयेत्। अनेन सकलाभिवृद्धिः उभयत्र नैवेद्यं त्रिमधुरम्। त्रिमधुरं नाम गुडनारिकेल-कदलीफलानां मिश्रणेन सम्पादितं द्रव्यम्।

### श्लोक २




यन्त्रमिदं स्वर्णपट्टे विलिख्य, उत्तराभिमुख: पञ्चपञ्चाशद्दिनानि सम्पूज्य श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य धारयेत्। अनेन सर्वलोकवश्यता प्रकृतिजयश्च। नैवेद्यं क्षीरपायसम्।

### श्लोक ३




(i) इदं यन्त्रं कनकपट्टतले विलिख्य ईशानाभिमुख: पञ्चदशदिनानि सम्पूज्य श्लोकमिमं प्रत्यहं सहस्रमावर्त्य धारयेत्। अनेन सर्वैश्वर्यसर्वविद्ये भवत:।

(ii) इदमेव यन्त्रं चतु:पञ्चाशद्दिनानि पूर्ववदभ्यर्च्य प्रतिवासरं श्लोकमिमं द्विसहस्रमावर्त्य साधयेत्। साधको वेदविद्भवेत्। ऊभयत्र नैवेद्यं— माषापूप:।



### श्लोक ४

(i) यन्त्रमिदं रजतपट्टे विलिख्य पूर्वाभिमुखः षोडशदिनान्यभ्यर्च्य श्लोकमिमं प्रतिदिनं सहस्रमावर्त्य धारयेत्। फलं—साम्राज्यसिद्धिः।

(ii) इदमेव यन्त्रं षट्त्रिंशद्दिनानि पूर्ववदभ्यर्च्य श्लोकमिमं प्रत्यहं सहस्रमावर्तयेत्। अनेन साधकं दारिद्र्यरोगादयो न बाधन्ते। उभयत्र नैवेद्यं— हरिद्रान्नम्। अत्र केरळभाषापुस्तके श्रीमिति बीजाक्षरो दृश्यते।



### श्लोक ५

इदं यन्त्रं ताम्रपट्टे विलिख्य वायव्याभिमुखोऽष्टौ दिनानि सम्पूज्य प्रत्यहं श्लोकमिमं द्विसहस्रमावर्त्य शिरसि धारयेत्। फलं सकलजनसम्मोहनं स्त्रीणां पुरुषवश्यता च। नैवेद्यं— गुडपायसम्।




### श्लोक ६

यन्त्रमिदं कनकपट्टतले विलिख्य पूर्वाभिमुखः एकविंशतिदिनानि समाराध्य पद्यमिदं प्रतिदिनं पञ्चशतमावर्त्य धारयेत्। फलं— साधकस्य षण्डत्वनिवृत्या पुत्रावाप्तिः। नैवेद्यं— इक्षुखण्डः।

### श्लोक ७




यन्त्रमिदं हाटकपट्टे विलिख्य पूर्वाभिमुखः पञ्चचत्वारिंशद्दिनानि समभ्यर्च्य श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य शिरसि धारयेत्। भस्म वाऽभिमन्त्र्य धारयेत्। अनेन शत्रुजयः। नैवेद्यं क्षीरपायसम्।

### श्लोक ८




यन्त्रमिदं रक्तचन्दनखण्डे निर्माये द्वादशं दिनानि रक्तपुष्पैरभ्यर्च्य पद्यमिदं प्रत्यहं द्विशतोत्तरसहस्रमावर्त्य धारयेत्। फलं— कारागृहनिवृत्तिः सकलकार्यजयश्च। नैवेद्यं कृष्णमरिचः।

### श्लोक ९




(i) यन्त्रमिदं कनकपट्टे विलिख्य दश दिनान्यभ्यर्च्य प्रत्यहं श्लोकमिमं सहस्रमावर्तयेत्। फलं— देशान्तरगतस्य क्षिप्रागमनम्।

(ii) इदमेव यन्त्रं गन्धचेलिकयालिप्य पञ्चत्वारिंशद्दिनानि समाराध्य पद्यमिदं प्रतिवासरं सहस्रमावर्तयेत्। अनेन साधकः पञ्चभूतानि जयिष्यति। उभयत्र नैवेद्यं-क्षीरपायसम्।




### श्लोक १०

इदं यन्त्रं हाटकपट्टतले विलिख्य षड्दिनान्यभ्यर्च्य प्रतिदिनं श्लोकमिमं सहस्रमावर्त्य रक्तक्षौमतन्तौ निवध्य धारयेत्। फलं— वृष्यं स्त्रीणां रजोदर्शनं च। नैवेद्यं— कदलीफलम्।




### श्लोक ११

इदं यन्त्रं कनकपट्टले विलिख्य एकाशीतिदिनानि सम्पूज्य श्लोकमिममनुदिनं सहस्रमावर्त्य धारयेत्। नवनीतं वाऽभिमन्त्र्य सेवयेत्। अनेन वन्ध्यादोषो निवर्तते। नैवेद्यं— गुडपायसम्।




### श्लोक १२

यन्त्रमिदं जले विलिख्य पञ्चचत्वारिंशद्दिनान्यभ्यर्च्य जलं स्पृष्ट्वा श्लोकमिमं प्रत्यहं सहस्रमावर्त्य पिबेत्। अनेन मूकोऽपि कविर्भवेत्, वशित्वं सिध्येत्। नैवेद्यं— मधु।

### श्लोक १३

इदं यन्त्रं हेमपट्टे विलिख्य षड्दिनानि समाराध्य श्लोकमिममनुदिनं सहस्रमावर्त्य धारयेत्। फलं— स्त्रीवश्यता। नैवेद्यं— त्रिमधुरम्।




### श्लोक १४

यन्त्रमिदं हाटकपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनान्यभ्यर्च्य श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य धारयेत्। अनेन वसन्तादिरोगा: दुर्भिक्षं च न बाधेत। नैवेद्यं— क्षीरपायसम्।




### श्लोक १५

(i) यन्त्रमिदं सुवर्णपट्टे विलिख्य एकचत्वारिंशद्दिनानि सम्पूज्य श्लोकमिमं प्रत्यहं सहस्रमावर्त्य धारयेत्। अनेन साधक: कविर्विज्ञानी च भवेत्।

(ii) इदमेव यन्त्रं जले विलिख्य पूर्ववत्सम्पूज्य जप्त्वा पिबेत्। फलं— पूर्ववत्। उभयत्र नैवेद्यं— मधु कदलीफलं शर्करा च।






### श्लोक १६

यन्त्रमिदं हेमपट्टतले विलिख्य एकचत्वारिंशदहानि समाराध्य श्लोकमिममनुदिनं सहस्रमावर्त्य धारयेत्। फलं— वेदशास्त्रादिज्ञानम्। नैवेद्यं— मधु।




### श्लोक १७

इदं यन्त्रं हाटकपट्टे विलिख्य एकनवतिदिनान्यभ्यर्च्य श्लोकमिममनुदिनं सहस्रमावर्त्य धारयेत्। अनेन साधकः सकलकलाकोविदो भवेत्। नैवेद्य-मधु कदलीफलं क्षीरं शर्करा खण्डशर्करा च।




### श्लोक १८

यन्त्रमिदं सुवर्णपट्टतले विलिख्य पञ्चत्वारिंशद्दिनान्यर्चयित्वा प्रत्यहं श्लोकमिमं सहस्रमावर्त्य धारयेत्। चन्दनं कुङ्कुमं पुष्प वाऽभिमन्त्र्य दद्यात्। फलं— सकलप्राणिवश्यता। नैवेद्यं— क्षीरपायसं ताम्बूलं च।

### श्लोक १९




इदं यन्त्रं हेमपट्टतले विलिख्य पञ्चविंशतिदिनान्याराध्य श्लोकमिमं प्रतिवासरं द्विशताधिकसहस्रमावर्त्य धारयेत्। चन्दनं पुष्पं भस्म कुङ्कुमं वाऽभिमन्त्र्य धारयेत्। अनेन सकलराजराक्षसमृगस्त्रीवश्यता भवति। नैवेद्यं— क्षीरं मधु कदलीफलं च।

### श्लोक २०




(i) यन्त्रमिदं भस्मनि विलिख्य श्लोकमिमं सहस्रमावर्त्य तद्भस्म दद्यात्। अनेन विषनिवृत्तिर्भवति। इदं भस्म सर्पे लग्नं चेत् मुह्यात्। ज्वरश्च निवर्तेत्।

(ii) इममेव श्लोकं पञ्चचत्वारिंशद्दिनानि प्रत्यहं द्विसहस्रमावर्त्य साधयेत्। अनेन साधकस्य कदापि विषभीतिर्न जायते।

(iii) इदमेव यन्त्रं मयूरताम्रेण पुन्नागताम्रेण वा मिश्रितसुवर्णपट्टतले विलिख्य श्लोकमिमं पूर्वत्संसाध्य तद्यन्त्रमङ्गुलीयकं कृत्वा धारयेत्। तद्धस्तेन सर्पदष्टे जले प्रोक्षिते विषनिवृत्तिर्भवति।

### श्लोक २१




यन्त्रमिदं स्वर्णपट्टे रजतपट्टे ताम्रपट्टे वा विलिख्य पञ्चचत्वारिंशदहानि पूजयित्वा श्लोकमिममनुदिनं सहस्रमावर्त्य धारयेत्। अनेन सकलजनविरोधनाशः वश्यता च। नैवेद्यं— कदलीफलं मधु गुडं च।



### श्लोक २२

चक्रमिदं सुवर्णपट्टतले विलिख्य कस्मिंश्चित्पुण्यतीर्थे क्षेत्रे देवीसन्निधौ वा उपविश्य पञ्चचत्वारिंशदहानि सम्पूज्य श्लोकमिममहरहस्सहस्रमावर्त्य साधयेत्। अनेन ऐहिकसर्वाभीष्टसिद्धिः सकलैश्वर्यप्राप्तिः साम्राज्यावाप्तिश्च भवति। नैवेद्यं— मधु त्रिमधुरं दधि क्षीरं चित्रान्नं च।





### श्लोक २३

यन्त्रमिदं हेमपट्टे विलिख्य गृहे संस्थाप्य त्रिशद्दिनान्यभ्यर्च्य प्रत्यहं श्लोकमिमं त्रिसहस्रमावर्तयेत्। फलं— सर्वापन्निवृत्तिः ऋणमोचनं भूतप्रेतशमनं च भवति। नैवेद्यं— क्षीरपायसम्।

| | | | | |
|---|---|---|---|---|
| न | शिं | य | मः | वा |
| य | मः | वा | न | शि |
| वा | न | शि | य | मः |
| शि | य | मः | वा | न |
| मः | वा | न | शि | य |

### श्लोक २४

शिवयन्त्रमिदं हाटकपट्टतले विलिख्य त्रिंशद्दिनानि सम्पूज्य श्लोकमिममहरहस्सहस्रमावर्त्य धारयेत्। फलं- भूतप्रेतपिशाचापस्मामारादि-निवारणम्। नैवेद्यं— मधु माषापूपः तिलपष्टं च।

### श्लोक २५




इदं यन्त्रं हमेपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनान्यभ्यर्च्य श्लोकमिमं सहस्रमावर्त्य धारयेत्। फलं— राजकीयाधिकार: उत्कृष्टपदवी लाभश्च। नैवेद्यं— मधु।

### श्लोक २६




(i) यन्त्रमिदं सुवर्णपट्टतले विलिख्यार्चयित्वामावास्यायां श्लोकमिमं सहस्रमावर्त्य धारयेत्। फलं— सर्वसिद्धिः।

(ii) इदमेव यन्त्रं षड्दिनानि पूजयित्वाऽनुदिनं श्लोकमिमं सहस्रमावर्तयेत्। अनेन शत्रुजयो भवति। उभयत्र नैवेद्यं—गुडपायसम्।

### श्लोक २७




इदं यन्त्रं हेमपट्टे लिखित्वा पञ्चचत्वारिंशदहानि पूजयित्वा श्लोकमिममहरहस्सहस्रमावर्त्य धारयेत्। फलम्— मन्त्रसिद्धिः देवीदर्शनं आत्मज्ञानं च। नैवेद्यं— गुडपायसम्।




### श्लोक २८

यन्त्रमिदं हाटकपट्टे विलिख्य पञ्चचत्वारिंशद्दिनानि समाराध्य प्रत्यहं श्लोकमिमं सहस्त्रभावर्त्य धारयेत्। फलं-स्त्रीणां सकलकार्यसिद्धिः पुरुषाणामपमृत्युनिवारणं च। नैवेद्यं— क्षीरपायसं त्रिमधुरं ताम्बूलं च।




### श्लोक २९

इदं यन्त्रं हेमपट्टे विलिख्य पञ्चचत्वारिंशद्दिनान्यर्चयित्वा श्लोकमिमं प्रतिवासरं सहस्त्रमावर्त्य धारयेत्। फलं— दुष्टान् मूर्खोंश्च सतः कृत्वा स्ववशीकरणम्। नैवेद्यं— मधु माषापूपश्च।




### श्लोक ३०

यन्त्रमिदं कनकपट्टतले विलिख्य षण्णवतिदिनानि समाराध्य श्लोकमिममहरहस्सहस्त्रमावर्त्य धारयेत्। फलं— अणिमाद्यष्टसिद्धिः परकायप्रवेशः अग्निस्तम्भनं च। नैवेद्यं— मधु त्रिमधुरं ताम्बूलं च।

### श्लोक ३१

चक्रमिदं हाटकपट्टे विलिख्य पञ्चचत्वारिंशदहान्यर्चयित्वा हस्ते निधाय श्लोकमिममनुदिनं सहस्रमावर्तयेत्। अनेन सकलजनवश्यं राजवश्यं च भवेत् । नैवेद्यं— मधु क्षीरं च।



### श्लोक ३२

इदं यन्त्रं स्वर्णपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनानि संपूज्य प्रत्यहं श्लोकमिमं सहस्रमावर्त्य धारयेत्। फलं— सकलविद्यासिद्धिः बीजाक्षरं न दृश्यते।




### श्लोक ३३

यन्त्रमिदं कनकपट्टतले विलिख्य तत्र रौप्यकं निधाय पञ्चचत्वारिंशद्दिनानि सम्पूज्य श्लोकमिममनुदिनं सहस्रमावर्तयेत्। फलं—भूरिधनावाप्तिः नैवेद्यं मुद्गान्नं मधु।






*श्लो. ३४.*

यन्त्रमिदं हेमपट्टे विलिख्य पञ्चचत्वारिंशदहान्यभ्यर्च्य पद्यमिदं प्रत्यहं सहस्रवारं जपत्वा धारयेत्। अनेन साधकः महाबुद्धिमान् भवेत्। नैवेद्यं—मधु।




*श्लोक ३५*

इदं यन्त्रं स्वर्णपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनान्यभ्यर्च्य श्लोकमिमं प्रतिवारं सहस्रमावर्त्य धारयित्वा हरीतकीमभिमन्त्र्य सेवयेत्। अनेन क्षयरोगो निवर्तते। नैवेद्यं— मधु क्षीरपायसं च।




*श्लोक ३६*

यन्त्रमिदं कनकपट्टे विलिख्य पञ्चचत्वारिंशदहान्यर्चयित्वा पद्यमिदमहरहस्सहस्रवारं जप्त्वा धारयेत्। रोगशान्तये जलं वाऽभिमन्त्र्य पाययेत्। फलं नानाविधकठिनरोगनिवृत्तिः। नैवेद्यं— मधु माषापूपश्च।

### श्लोक ३७




इदं यन्त्रं जातरूपपट्टे विलिख्यार्चयित्वा पद्यमिदं पञ्चसहस्रमावर्त्य धारयेत्। जलं वाभिमन्त्र्य पिबेत्। फलं-ब्रह्मरक्षोबाधानिवृत्तिः। नैवेद्यं-गुडपायसं नारिकेलफलं कदलीफलं च।

### श्लोक ३८




यन्त्रमिदं हेमपट्टे विलिख्य पञ्चचत्वारिंशद्दिनानि पूजयित्वाऽनुदिनं श्लोकमिमं सहस्रवारं जप्त्वा धारयेत्। जलं वाऽभिमन्त्र्य प्रोक्षयेत्। फलं—बालारिष्टनिवृत्तिः। नैवेद्यं—११ माषापूपाः ताम्बूलं नारिकेलफलं कदलीफलं च।

### श्लोक ३९




यन्त्रमिदं कनकपट्टतले विलिख्य द्वादशदिनान्यभ्यर्च्य प्रत्यहं श्लोकमिममष्टोत्तरशतमावर्त्य धारयेत्। अनेन दुस्स्वप्नं शाम्यति। नैवेद्यं— क्षीरं क्षीरपायसं मधु च।




### श्लोक ४०

इदं यन्त्रं हेमपट्टे विलिख्य पञ्चचत्वा-रिंशदहान्यर्चयित्वा पद्यमिदमनुदिनं सहस्रमावर्त्योपधाने निक्षिप्य शयीत। फलं— इष्टार्थस्य स्वप्ने दर्शनम्। नैवेद्यं— मधु क्षीरपायसं ताम्बूलं च।




### श्लोक ४१

यन्त्रमिदं हेमपट्टतले विलिख्य त्रिंशदहानि पूजयित्वा पद्यमिदमहरहश्चतुसहस्रमावर्त्य धारयेत्। फलं-सकलोदररोगनिवृत्तिः। नैवेद्यं—मधु।




### श्लोक ४२

इदं यन्त्रं स्वर्णपट्टे विलिख्य पञ्चत्वारिंशद्दिनानि समाराध्य श्लोकमिममनुदिनं सहस्रवारं जप्त्वा धारयेत्। अनेन महोदरव्याधिर्नश्यति। नैवेद्यं—शर्करा।

### श्लोक ४३




यन्त्रमिदं हाटकपट्टे विलिख्य चत्वारिंशदहान्यभ्यर्च्य पद्यमिदमनुदिनं त्रिसहस्रमावर्त्याङ्गुळीयकं कृत्वा धारयेत्। फलं— सकलजनवश्यता। नैवेद्यं— मधु।

### श्लोक ४४




यन्त्रमिदं कनकपट्टतले विलिख्य द्वादशाहान्यर्चयित्वा श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य धारयेत्। कुकुमं हरिद्राचूर्णं वाऽभिमन्त्र्य तिलकं धारयेत्। अनेन वश्यता बाधानिवृत्तिश्च भवेत्। नैवेद्यं— गुडपायसम्।

### श्लोक ४५




इदं यन्त्रं स्वर्णपट्टतले विलिख्य चत्वारिंशदहानि समाराध्य पद्यमिदमनुदिनं जप्त्वा धारयेत्। फलं— वाक्सिद्धिः। नैवेद्यं— त्रिमधुरं मधु च।




### श्लोक ४६

यन्त्रमिदं कनकपट्टे विलिख्य पञ्चचत्वारिंशद्दिनानि सम्पूज्य प्रत्यहं श्लोकमिमं सहस्रमावर्त्य धारयेत्। अनेन भर्तृसमागमो गर्भधारणं च भवति। नैवेद्यं— क्षीरपायसं मधु च।




### श्लोक ४७

(i) इदं सुवर्णपट्टे विलिख्य पञ्चविंशतिदिनानि सम्पूज्य पद्यमिदमनुदिनं सप्तसहस्रमावर्त्य धारयेत्। अनेन देवता वशमेष्यति।

(ii) भस्म वाऽमिमन्त्र्य धारयेत्। फलं— सकलवश्यता। उभयत्र नैवेद्यं— नारिकेलफलं कदलीफलं मधु च।

| | | |
|---|---|---|
| बु | शु | च |
| गु | र | कु |
| रा | श | के |

### श्लोक ४८

यन्त्रमिदं कनकपट्टतले विलिख्य एकोनविंशतिदिनानि समाराध्य श्कोकमिमं सहस्रवारं जप्त्वा धारयेत्। अनेन नवग्रहदोषशान्तिर्भवति। नैवेद्यं— चित्रान्नं कदलीफलं मधु च।

### श्लोक ४९




यन्त्रमिदं हरिद्राखण्डे लिखित्वा पञ्चविंशतिदिनान्यभ्यर्च्य श्लोकमिममहरहस्सहस्रमावर्त्य हरिद्राखण्डमग्नौ दग्ध्वा तत्तैलेन पिष्ट्वा पञ्चदशवर्षीयस्य मार्जालदृशो बालकस्य हस्तेन अक्ष्णोर्लेपयित्वा पश्यतो निधिदर्शनं भवति। नैवेद्यं— मुद्गान्नं मधु च।

### श्लोक ५०



इदं यन्त्रं कनकपट्टतले विलिख्य चत्वार्यहान्यर्चयित्वा पद्यमिदमनुदिनं सहस्रवारं जप्त्वा। जलं वाऽभिमन्त्र्य सेवेत। एवं कृते मसूरिका न समागमिष्यति। नैवेद्यं— शर्करा खण्डशर्करा गुडं कदलीफलं मधु नारिकेलं च।

### श्लोक ५१




यन्त्रमिदं सुवर्णपट्टे विलिख्य पञ्चत्वारिंशदहानि सम्पूज्य प्रत्यहं श्लोकमिमं सहस्रवारं जप्त्वा धारयेत्। चन्दने वा विलिख्य पूर्ववत्पूजादिकं कृत्वा तिलकं धारयेत्। फलं— सर्वजनवश्यता। नैवेद्यं— माषापूपः मधु च।




### श्लोक ५२

इदं यन्त्रं कनकपट्टतले विलिख्य पञ्चचत्वारिंशदहानि समाराध्य श्लोकमिममनुदिनं सहस्रमावर्त्य धारयेत्। फलं— कर्णरोगशमनं नेत्ररोगनिवृत्तिश्च। नैवेद्यं— तिलान्नं क्षीरपायसं च।




### श्लोक ५३

यन्त्रमिदं स्वर्णपट्टे विलिख्य भूमौ संस्थाप्य तत्र दीपं निधाय श्लोकमिमं त्रिसहस्रमावर्तयेत्। अनुकूलतायां दीपं उज्ज्वलेत् न चेत्प्रातिकूल्यम्। नैवेद्यं— गुडापूपः माषापूपः क्षीरपायसं च।




### श्लोक ५४

यन्त्रमिदं कनकपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनानि सम्पूज्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत्। अनेन योनिरोगो निवर्तते। नैवेद्यं— गुडपायसम्।

### श्लोक ५५




इदं यन्त्रं हाटकपट्टे विलिख्य पद्यमिदं सहस्रवारं जप्त्वा धारयेत्। कलिद्रुमफलं वाऽभिमन्त्र्य बध्नीयात्। अनेनाण्डव्याधिश्शाम्यति। नैवेद्यं—कदलीफलं क्षीरपायसं मधु ताम्बूलं च। अत्र केरळभाषापुस्तके ''बंला संला'' इति बीजाक्षरभेदो दृश्यते।

### श्लोक ५६




यन्त्रमिदं जातरूपपट्टतले मकरमत्स्यदन्ते वा लिखित्वा पञ्चचत्वारिंशदहान्यभ्यर्च्य श्लोकमिमं प्रत्यहं विंशतिसहस्रमावर्त्य स्वस्मिन्निवेशयेत्। अनेन द्वारपालको धावेत्। मुद्रितं कवाटं स्वयमुद्घाटयेत्। वृष्टिश्च भवेत्। नैवेद्यं— मधु।

### श्लोक ५७




इदं यन्त्रं हेमपट्टे विलिख्य षडहान्यभ्यर्च्य पद्यमिदमनुदिनं सहस्रमावर्त्य धारयेत्। साधको बहुभाग्यवान् भवेत्। नैवेद्यं— क्षीरपायसं मधु च।




### श्लोक ५८

यन्त्रमिदं कुङ्कुमचूर्णे लिखित्वा पञ्चचत्वारिंशद्दिनानि समाराध्य श्लोकमिममनुदिनं सहस्रवारं जप्त्वा धारयेत्। फलं— सकलराजवश्यता सर्वव्याधिहतिश्च। नैवेद्यं— मधु।




### श्लोक ५९

इदं यन्त्रं स्वर्णपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनानि सम्पूज्य पद्यमिदमनुदिनं सहस्रमावर्त्य धारयेत्। फलं— सकलजनवश्यता। नैवेद्यं— गुडोदनं मधु च।




### श्लोक ६०

यन्त्रमिदं हाटकपट्टे विलिख्य पञ्चचत्वारिंशदहान्यभ्यर्च्य श्लोकमिममहरहस्सहस्रमावर्त्य धारयेत्। अनेन साधकः सकलविद्यामाप्नुयात्। नैवेद्यं—मधु क्षीरपायसं च।

### श्लोक ६१




इदं यन्त्रं कनकेपट्टे विलिख्याष्टौ दिनानि समाराध्य पद्यमिदमनुदिनं द्वादशसहस्रमावर्त्य स्त्रीणामाभरणे निक्षिपेत्। अनेन सकलपुरुषवश्यता भवेत्। नैवेद्यं— नारिकेलफलं कदलीफलं मधु च।

### श्लोक ६२




यन्त्रमिदं हेमपट्टतले लिखित्वाष्टौ दिनानि सम्पूज्य श्लोकमिमं प्रत्यहमष्टसहस्रवारं जप्त्वा रात्रौ निद्राविहीनस्य समीपे स्थापितं चेत् स निद्रां लभते। नैवेद्यं— माषापूपः मधु च।

### श्लोक ६३




यन्त्रमिदं हाटकपट्टतले विलिख्य त्रिंशद्दिनान्याराध्य पद्यमिदमनुदिनं त्रिंशत्सहस्रवारं जप्त्वा धारयेत्। अनेन सर्वोऽपि यथोक्तमाचरेत्। नैवेद्यं— नारिकेलफलम्। केरलभाषापुस्तके यन्त्रमिदं न दृश्यते।




### श्लोक ६४

इदं यन्त्रं कुङ्कुमे विरच्याष्टावहानि पूजयित्वा प्रत्यहं श्लोकमिममयुतवारं जप्त्वा धारयेत्। फलं—सकलजनवश्यता। नैवेद्यं—गुडपायसं मधु च।




### श्लोक ६५

यन्त्रमिदं हेमपट्टतले विलिख्य गुग्गुलेन धूपयित्वा पञ्चचत्वारिंशद्दिनानि रक्तपुष्पैः श्रीचक्रवदभ्यर्च्य श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य धारयेत्। अनेन सर्वोऽपि स्ववशगो भवेत्। नैवेद्यं— मधु।




### श्लोक ६६

इदं यन्त्रं कनकपट्टे लिखित्वा पञ्चचत्वारिंशद्दिनानि समाराध्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत्। अनेन साधकः वीणादिसङ्गीतविद्याकुशलो भवेत्। नैवेद्यं—गुडपायसं मधु च।

### श्लोक ६७




यन्त्रमिदं स्वर्णपट्टतले विलिख्य पत्न्या साकं पञ्चचत्वारिंशदहानि समाराध्य पद्यमिदमनुदिनं सहस्रमावर्त्य धारयेत्। फलं— सकलस्त्रीवश्यता। नैवेद्यं— मधु क्षीरपायसं ताम्बूलं च।

### श्लोक ६८




इदं यन्त्रं कुङ्कुमे विलिख्य पञ्चचत्वारिंशद्दिनानि श्रीचक्रवदभ्यर्च्य प्रत्यहं श्लोकमिमं सहस्रवारं जप्त्वा धारयेत्। फलं—सकलराजवश्यता। नैवेद्यं— मधु ताम्बूलं च। केरळभाषापुस्तके यन्त्रमिदं नास्ति।

### श्लोक ६९




यन्त्रमिदं स्वर्णपट्टतले लिखित्वा पञ्चचत्वारिंशद्दिनानि समाराध्य प्रत्यहं श्लोकमिमं सहस्रमावर्त्य साधयेत्। चम्पकपुष्पम-भिमन्त्र्याभिलषितस्त्रियै दद्यात्। सा वशमेष्यति। नैवेद्यं— मधु। केरळभाषापुस्तके यन्त्रमिदं न दृश्यते।




### श्लोक ७०

इदं यन्त्रं कनकपट्टे विलिख्य पञ्चचत्वारिंशद्दिनानि समभ्यर्च्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत्। फलं— सकलपुरुषवश्यता। नैवेद्यं— नारिकेलफलं मधु च।




### श्लोक ७१

यन्त्रमिदं हाटकपट्टतले विलिख्य पञ्चचत्वारिंशद्दिनानि पूजयित्वा घटवृक्षे उपविश्यं पद्यमिदमनुदिनं द्वादशसहस्रमावर्त्य साधयेत्। अनेन यक्षिणी वशमेष्यति। नैवेद्यं—मधु।




### श्लोक ७२

इदं यन्त्रं कनकपट्टतले विलिख्य पञ्चचत्वा-रिंशदहान्यर्चयित्वा श्लोकमिमं प्रत्यहं सहस्रमावर्त्य धारयेत्। एवं कृते साधकः रात्रौ यत्र कुत्र वा गन्तुं शक्नुयात्। भयलेशोऽपि नास्ति। नैवेद्यं— मधु।

### श्लोक ७३




इदं यन्त्रं कनकपट्टे विलिख्य सप्तदिनान्यभ्यर्च्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत्। फलं— स्त्रीणां स्तन्याभावे स्तन्यप्राप्तिः धेनूनां स्थगितस्य पयसो बहिर्निस्सरणं च। नैवेद्यं— मधु क्षीरं च।

### श्लोक ७४




यन्त्रमिदं हेमपट्टतले विलिख्य देवीसन्निधौ पञ्चचत्वारिंशदहानि समाराध्य श्लोकमिमं प्रतिवासरमष्टोत्तरशतमावर्त्य धारयेत्। अनेन साधकः कीर्तिमाप्नुयात्। नैवेद्यं— क्षीरपायसं मधु च।

### श्लोक ७५




इदं यन्त्रं हाटकपट्टे विलिख्य त्रीणि दिनान्याराध्य श्लोकमिमं प्रत्यहं सहस्रवारं जप्त्वा धारयेत्। अनेन साधकः कविर्भवेत्। नैवेद्यं— कदलीफलं मधु च।




### श्लोक ७६

यन्त्रमिदं स्वर्णपट्टतले लिखित्वाऽष्टौ दिनान्यभ्यर्च्य पद्यमिदमनुदिनं द्वादशसहस्रमावर्त्य धारयेत्। फलं— सकलजनवश्यता। नैवेद्यं—नारिकेलफलं कदलीफलं दध्यन्नं मधु च।




### श्लोक ७७

कपिलागोघृतमर्दितरक्तोत्पलेङ्गाले यन्त्रमिदं श्लोकं च विलिख्य दश दिनानि सम्पूज्य श्लोकमिममनुदिनं द्विसहस्रमावर्त्य तिलकं धारयेत्। फलं— राजवश्यता। नैवेद्यं— कदलीफलं मधु च।




### श्लोक ७८

रक्तचन्दनं पन्नीराख्यपुष्पद्रवेण पिष्ट्वा गन्धचेळिकामिश्रिते तस्मिन् यन्त्रमिदं विरच्य चत्वारिंशद्दिनानि सम्पूज्य पद्यमिदमनुदिन-मष्टोत्तरशतमावर्त्य ललाटे धारयेत्, अनेन सकलराजवश्यता भवेत्। नैवेद्यं— मधु माषापूपश्च।

### श्लोक ७९

यन्त्रमिदं हेमपट्टे विलिख्य पञ्चचत्वाविंशद्दिनान्यभ्यर्च्य पद्यमिदं प्रत्यहं सहस्रवारं जप्त्वा धारयेत्। साधक इन्द्रजालविद्यानिपुणो भवेत्। नैवेद्यं— मधु क्षीरपायसं च।




### श्लोक ८०

इदं यन्त्रं कनकपट्टतले लिखित्वा प्रथमपुष्पिण्या योनौ संस्थाप्य पञ्चदिनान्यर्चयित्वा पद्यमिदमनुदिनं सहस्रमावर्त्य हस्ते निबध्य तिलकं धारयेत्। अनेन साधक इन्द्रजालं दर्शयितुं समर्थो भवेत्। नैवेद्यं— मधु।




### श्लोक ८१

यन्त्रमिदं हाटकपट्टतले लिखित्वाऽऽग्नेयाभिमुखः षोडश दिनानि समाराध्य प्रत्यहं श्लोकमिमं सहस्रमावर्त्य साधयेत्। अनेन अग्निस्तभ्मनं कर्तुं शक्यते। नैवेद्यं— गुडपायसं मधु माषापूपश्च।






### श्लोक ८२.

इदं यन्त्रं भूर्जपत्रे लिखित्वा पादुकायां निक्षिप्य चत्वारिंशदहानि सम्पूज्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा तत्पादुकां धारयेत्। अनेन साधको जले चरितुं समर्थो भवेत्। नैवेद्यं— नारिकेलफलं कदलीफलं मधु च।




### श्लोक ८३

यन्त्रमिदं कनकपट्टे विलिख्य द्वादशदिनानि जपाकुसुमैरभ्यर्च्य पद्यमिदमहरहस्सहस्रमावर्त्य धारयेत्। फलं— गजतुरगसैन्यस्तम्भनम्। नैवेद्यं— गुडपायसं मधु च।




### श्लोक ८४

इदं यन्त्रं हेमपट्टतले लिखित्वा संवत्सरमेकमभ्यर्च्य श्लोकमिमं प्रत्यहं सहस्रवारं जप्त्वा धारयेत्। एवं कृते साधक: परकायप्रवेशे शक्तो भवेत्। नैवेद्यं— क्षीरपायसं चित्रान्नं मधु च।

### श्लोक ८५




यन्त्रमिदं स्वर्णपट्टतले लिखित्वा द्वादशाहानि रक्तपुष्पैः सम्पूज्य पद्यमिदमनुदिनं सहस्रमावर्त्य धारयेत्। अनेन भूतबाधानिवृत्तिः। नैवेद्यं— क्षीरपायसं गुडोदकं कदलीफलं च।

### श्लोक ८६




इदं यन्त्रं हाटकपट्टे विलिख्य एकविंशतिदिनानि सम्पूज्य प्रत्यहं श्लोकमिमं सहस्रमावर्त्य धारयेत्। कलशोदकभिमन्त्र्याभिषिञ्चेत्। अनेन समस्तपिशाचबाधानिवृत्तिः। नैवेद्यं— क्षीरपायसं नारिकेलफलं कदलीफलं मधु च।

### श्लोक ८७




यन्त्रमिदं श्मशानभस्मनि विरच्य दशदिनान्याराध्य पद्यमिदहरहस्सहस्रमावर्त्य साधयेत्। साधकः सर्पानयने समर्थो भवेत्। नैवेद्यं— क्षीरपायसं मधु कदलीफलं नारिकेलफलं च।




### श्लोक ८८

इदं यन्त्रं स्वर्णपट्टे रजतपट्टे वा लिखित्वा पञ्चदशदिनानि समाराध्य श्लोकमिमं प्रत्यहं सहस्रवारं जप्त्वा धारयेत्। साधकः मृगानयने प्रभवति। नैवेद्यं— गुडपायसं नारिकेलफलं कदलीफलं च।




### श्लोक ८९

यन्त्रमिदं हाटकपट्टतले लिखित्वा त्रिंशदहान्यर्चयित्वा पद्यमिदमनुदिनं सहस्रमावर्त्य धारयेत्। फलं— सर्वरोगशमनम्। नैवेद्यं—गुडपायसं मधु च।




### श्लोक ९०

इदं यन्त्रं हाटकपट्टे लिखित्वा पञ्चदशाहान्यभ्यर्च्य श्लोकमिममहरहस्सहस्रमावर्त्य धारयेत्। फलं- क्षुद्रबाधानिवृत्तिः नैवेद्यं— क्षीरपायसं मधु च।

### श्लोक ९१

यन्त्रमिदं पद्यं च कनकपट्टतले लिखित्वा पञ्चविंशत्यहानि समाराध्य पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत्। साधकस्य भूलाभो धनलाभश्च भवति। नैवेद्यं— क्षीरपायसम्।




### श्लोक ९२

इदं यन्त्रं सुवर्णपट्टे विलिख्य पञ्चविंशतिदिनान्यभ्यर्च्य प्रत्यहं श्लोकमिमं सहस्रामावर्त्य धारयेत्। अनेन साधको राज्यं लभते। नैवेद्यं— चित्रान्नं क्षीरं क्षीरपायसं ताम्बूलं च।




### श्लोक ९३

यन्त्रमिदं हेमपट्टतले विलिख्य पञ्चविंशतिदिनानि पूजयित्वा पद्यमिदमनुदिनं सहस्रमावर्त्य धारयेत्। अनेन सकलाभीष्टसिद्धिर्भवति। नैवेद्यं— मधु।






### श्लोक ९४

इदं यन्त्रं हाटकपट्टे लिखित्वा पञ्चविंशत्यहान्यभ्यर्च्य श्लोकमिमं प्रतिवासरं सहस्रमावर्तयेत्। फलं— इष्टार्थसिद्धिः। नैवेद्यं— मुद्गान्नं नारिलकेलफलं कदलीफलं च।




### श्लोक ९५

यन्त्रमिदं कनकपट्टतले विलिख्य तिलतैले निक्षिप्य त्र्यहमाराध्य पद्यमिदमनुदिनमष्टोत्तरशतमावर्त्य तत्तैलं व्रणे विलिम्पेत्। फलं-सद्यो व्रणविरोपण्। नैवेद्यं— तिलान्नं गुडं च।




### श्लोक ९६

इदं यन्त्रं श्वेतार्कक्षीरेण धारणयोग्ये कस्मिंश्चिद्वस्तुनि लिखित्वाऽष्टौ दिनानि सम्पूज्य श्लोकमिमं प्रत्यहं सहस्रवारं जप्त्वा धारयेत्। साधको विद्यावान् भवेत्। नैवेद्यं— मधु क्षीरपायसं च।

### श्लोक १७




यन्त्रमिदं स्वर्णपट्टे ताम्रपट्टे वा लिखित्वाऽष्टौ दिनानि समाराध्य श्लोकमिममहरहस्सहस्रमावर्त्य धारयेत्। साधको दृढकायो भवेत्। नैवेद्यं— शाल्यन्नं मधु च।

### श्लोक १८




इदं यन्त्रं कनकपट्टतले विलिख्य षोडशदिनान्यर्चयित्वा पद्यमिदमनुदिनं सहस्रवारं जप्त्वा धारयेत्। अनेन स्त्रीणां गर्भधारणं पुरुषाणां बहुवृष्यता च भवेत्। नैवेद्यं— मधु।

### श्लोक १९




यन्त्रमिदं हिमपट्टे लिखित्वा षोडशदिनान्यभ्यर्च्य प्रत्यहं श्लोकमिमं सहस्रमावर्त्य धारयेत्। अनेन साधकः शूरो भवेत्। नैवेद्यं— त्रिमधुरं माषापूपः मधु च।




श्लोक १००

इदं यन्त्रं स्वर्णपट्टतले विलिख्य षोडशदिनान्याराध्य श्लोकमिमं प्रतिवासरं सहस्रमावर्त्य धारयेत्। अनेन सकलकार्यसिद्धिर्भवेत्। नैवेद्यं— नारिकेलफलं कदलीफलं च।

## आनन्दलहरी

भवानि स्तोतुं त्वां प्रभवति चतुर्भिर्न वदनैः प्रजानामीशानस्त्रिपुरमथनः पञ्चभिरपि ।
न षड्भिः सेनानीर्दशशतमुखैरप्यहिपतिस्तदाऽन्येषां केषां कथय कथमस्मिन्नवसरः ॥१॥
घृतक्षीरद्राक्षामधुमधुरिमा कैरपि पदैर्विशिष्यानाख्येयो भवति रसनामात्रविषयः ।
तथा ते सौन्दर्यं परमशिवदृङ्मात्रविषयः कथङ्कारं ब्रूमः सकलनिगमागोचरगुणे ॥२॥
मुखे ते ताम्बूलं नयनयुगले कज्जलकला ललाटे काश्मीरं विलसति गले मौक्तिकलता ।
स्फुरत्काञ्ची शाटी पृथुकटितटे हाटकमयी भजामि त्वां गौरीं नगपतिकिशोरीमविरतम् ॥३॥
विराजन्मन्दार-द्रुमकुसुमहार-स्तनतटी नदद्वीणानाद-श्रवणविलसत्कुण्डलगुणा ।
नताङ्गी मातङ्गी-रुचिरगतिभङ्गी भगवती सती शम्भोरम्भोरुहचटुलचक्षुर्विजयते ॥४॥
नवीनार्कभ्राजन्मणिकनकभूषापरिकरैर्वृताङ्गी सारङ्गीरुचिरनयनाङ्गीकृतशिवा ।
तडित्पीता पीताम्बरललितमञ्जीरसुभगा ममापर्णा पूर्णा निरवधिसुखैरस्तु सुमुखी ॥५॥
हिमाद्रेः सम्भूता सुललितकरैः पल्लवयुता सुपुष्पा मुक्ताभिर्भ्रमरकलिता चालकभरैः ।
कृतस्थाणुस्थाना कुचफलनता सूक्तिसरसा रुजां हन्त्री गन्त्री विलसति चिदानन्दलतिका ॥६॥
सपर्णामाकीर्णां कतिपयगुणैः सादरमिह श्रयन्त्यन्ये वल्लीं मम तु मतिरेवं विलसति ।
अपर्णैका सेव्या जगति सकलैर्यत्परिवृतः पुराणोऽपि स्थाणुः फलति किल कैवल्यपदवीम् ॥७॥
विधात्री धर्माणां त्वमसि सकलाम्नायजननी त्वमर्थानां मूलं धनदनमनीयाङ्घ्रिकमले ।
त्वमादिः कामानां जननि कृतकन्दर्पविजये सतां मुक्तेर्बीजं त्वमसि परमब्रह्ममहिषी ॥८॥

प्रभूता भक्तिस्ते यदपि न ममालोलमनसस्त्वया तु श्रीमत्या सदयमवलोक्योऽहमधुना ।
पयोदः पानीयं दिशति मधुरं चातकमुखे भृशं शङ्के कैर्वा विधिभिरनुतीता मम मतिः ।।९।।
कृपापाङ्गालोकं वितर तरसा साधुचरिते न ते युक्तोपेक्षा मयि शरणदीक्षामुपगते ।
न चेदिष्टं दद्यादनुपदमहो कल्पलतिका विशेषः सामान्यैः कथमितरवल्लीपरिकरैः ।।१०।।
महान्तं विश्वासं तव चरणपङ्केरुहयुगे निधायाऽन्यन् नैवाश्रितमिह मया दैवतमुमे ।
तथापि त्वच्चेतो यदि मयि न जायेत सदयं निरालम्बो लम्बोदरजननि कं यामि शरणम् ।।११।।
अयःस्पर्शे लग्नं सपदि लभते हेमपदवीं यथा रथ्यापाथः शुचि भवति गङ्गौगमिलितम्।
तथा तत्तत्पापैरतिमलिनमन्तर्मम यदि त्वयि प्रेम्णासक्तं कथमिव न जायेत विमलम्।।१२।।
त्वदन्यस्मादिच्छाविषयफललाभेन नियमस्त्वमर्थानामिच्छाधिकमपि समर्था वितरणे ।
इति प्राहुः प्राञ्चः कमलभवनाद्यास्त्वयि मनस्त्वदासक्तं नक्तं दिवमुचितमीशानि कुरु तत् ।।१३।।
स्फुरन्नानारत्न-स्फटिकमयभित्ति-प्रतिफलं त्वदाकारं चञ्चच्छशधरशिलासौधशिखरम् ।
मुकुन्द-ब्रह्मेन्द्रप्रभृतिपरिवारं विजयते तवागारं रम्यं त्रिभुवनमहाराजगृहिणी ।।१४।।
निवासः कैलासे विधिशतमखाद्याः स्तुतिकराः कुटुम्बं त्रैलोक्यं कृतकरपुटः सिद्धिनिकरः ।
महेशः प्राणेशस्तदवनिधराधीशतनये न ते सौभाग्यस्य क्वचिदपि मनागस्ति तुलना ।।१५।।
वृषो वृद्धो यानं विषमशनमाशा निवसनं श्मशानं क्रीडाभूर्भुजगनिबहो भूषणविधिः ।
समग्रा सामग्री जगति विदितैवं स्मररिपोर्यदेतस्यैश्वर्यं तव जननि सौभाग्यमहिमा ।।१६।।
अशेषब्रह्माण्ड-फलयविधि-नैसर्गिकमतिः श्मशानेष्वासीनः कृतभसितलेपः पशुपतिः ।
दधौ कण्ठे हालाहलमखिलभूगोलकृपया भवत्याः सङ्गत्याः फलमिति च कल्याणि कलये ।।१७।।
त्वदीयं सौन्दर्यं निरतिशयमालोक्य परया भियैवासीद् गङ्गा जलमयतनुः शैलतनये ।
तदैतस्यास्तस्माद्वदनकमलं वीक्ष्य कृपया प्रतिष्ठामातन्वन् निजशिरसि वासेन गिरिशः ।।१८।।
विशालश्रीखण्डद्रवमृगमदाकीर्णघुसृणप्रसूनव्यामिश्रं भगवति तवाभ्यङ्गसलिलम् ।
समादाय स्रष्टा चलितपदपांसून्निजकरैः समाधत्ते सृष्टिं विबुधपुरपङ्केरुहदृशाम् ।।१९।।
वसन्ते सानन्दे कुसुमितलताभिः परिवृते स्फुरन्नानापद्मे सरसि कलहंसालिसुभगे ।
सखीभिः खेलन्तीं मलयपवनान्दोलितजले स्मरेद्यस्त्वां तस्य ज्वरजनितापीडाऽपसरति ।।२०।।

।। इति आनन्दलहरी सम्पूर्ण ।।

## *श्रीललितास्तवरत्नपारायणपद्धति*

अस्य श्रीललितास्तवरत्नमाला महामन्त्रस्य। भगवान् श्रीदुर्वास ऋषिः। पंक्तिः छन्दः। सपरिवार श्रीललितामहात्रिपुरसुन्दरी देवता।।

**ऐं— तापिञ्छ मेचकाभां-तालीदलरचित-कर्णताटङ्काम् ।**
**तांबूल-पूरितमुखीं ताम्राधरबिंब-दरहासाम् ।।**—बीजम्

**सौः— धूर्तानामतिदूरा वार्ताशेषावलग्न कमनीया ।**
**आर्तालि शुभदात्री वार्तालि भवतु वाञ्छितार्थाय ।।**—शक्तिः

**क्लीं— आदि मरसावलंबामनिदं प्रथमाक्ति वल्लरी कलिकाम् ।**
**आब्रह्मकीट-जननीमन्तः कलयामि सुन्दरीमनिशम् ।।**—कीलकम्

## *श्रीललितास्तवरत्नम्*

**वन्दे गजेन्द्रवदनं वामाङ्कारूढवल्लभाश्लिष्टम् ।**
**कुङ्कुमपरागशोणं कुवलयिनीजारकोरकापीडम् ।।१।।**

**स जयति सुवर्णशैलः सकलजगच्चक्रसंघटितमूर्तिः ।**
**काञ्चननिकुञ्जवाटीकन्दलदमरीप्रपञ्चसंगीतः ।।२।।**

**हरिहयनैर्ऋतमारुतहरितामन्तेष्ववस्थितं तस्य ।**
**विनुमः सानुत्रितयं विधिहरिगौरीशविष्टपाधारम् ।।३।।**

**मध्ये पुनर्मनोहररत्नरुचिस्तवकरञ्जितदिगन्तम् ।**
**उपरि चतुःशतयोजनमुत्तुङ्ग-शृङ्गपुङ्गवमुपासे ।।४।।**

**तत्र चतुःशतयोजनपरिणाहं देवशिल्पिना रचितम् ।**
**नानासालमनोज्ञं नमाम्यहं नगरमादिविद्यायाः ।।५।।**

**प्रथमं सहस्रपूर्वकषट्शतसंख्याकयोजनं परितः ।**
**वलयीकृतस्वगात्रं वरणं शरणं व्रजाम्ययोरूपम् ।।६।।**

**तस्योत्तरे समीरणयोजनदूरे तरङ्गितच्छायः ।**
**घटयतु मुदं द्वितीयो घण्टास्वन-सारनिर्मितः सालः ।।७।।**

उभयोरन्तरसीमन्युद्दामभ्रमररञ्जितोदारम् ।
उपवनमुपास्महे वयमूरी-कृतमन्दमारुतस्यन्दम् ॥८॥

आलिङ्ग्य भद्रकालीमासीनस्तत्र हरिशिलाश्यामाम् ।
मनसि महाकालो मे विहरतु मधुपानविभ्रमन्नेत्रः ॥९॥

तार्तीयीको वरणस्तस्योत्तरसीम्नि वातयोजनतः ।
ताम्रेण रचितमूर्तिस्तनुतादाचन्द्रतारकं भद्रम् ॥१०॥

मध्ये तयोश्च मणिमयपल्लवशाखाप्रसूनपक्ष्मलिताम् ।
कल्पानोकहवाटीं कलये मकरन्दपङ्किलावालाम् ॥११॥

तत्र मधुमाधवश्रीतरुणीभ्यां तरलदृटक्चकोराभ्याम् ।
आलिङ्गितोऽवतान्मामनिशं प्रथमर्तुरात्तपुष्पास्त्रः ॥१२॥

नमत तदुत्तरभागे नाकिपथोल्लङ्घिशृङ्गसंघातम् ।
सीसाकृति तुरीयं सितकिरणालोकनिर्मलं सालम् ॥१३॥

सालद्वयान्तराले सरलालिकपोतचाटुसुभगायाम् ।
संतानवाटिकायां सक्तं चेतोऽस्तु सततमस्माकम् ॥१४॥

तत्र तपनातिरूक्षः साम्राज्ञीचरणसान्द्रितस्वान्तः ।
शुक्रशुचिश्रीसहितां ग्रीष्मर्तुर्दिशतु कीर्तिमाकल्पम् ॥१५॥

उत्तरसीमनि तस्योन्नतशिखरोत्कम्पिहाटकपताकः ।
प्रकटयतु पञ्चमो नः प्राकारः कुशलमारकूटमयः ॥१६॥

प्राकारयोश्च मध्ये पल्लवितान्यभृतपञ्चमोन्मेषा ।
हरिचन्दनद्रुवाटी हरतादामूलमस्मदनुतापम् ॥१७॥

तत्र नभश्रीमुख्यैस्तरुणीवर्गैः समन्वितः परितः ।
वज्राट्टहासमुखरो वाञ्छापूर्ति तनोतु वर्षर्तुः ॥१८॥

मारुतयोजनदूरे महनीयस्तस्य चोत्तरे भागे।
भद्रं कृषीष्ट षष्ठः प्राकारः पञ्चलोहधातुमयः॥१९॥

अनयोर्मध्ये संततमङ्कुरद्दिव्यकुसुमगन्धायाम् ।
मन्दारवाटिकायां मानसमङ्गीकरोतु मे विहृतिम् ॥२०॥

तस्यामिषोर्जलक्ष्मीतरुणीभ्यां शरदृतुः सदा सहितः ।
अभ्यर्चयन्स जीयादम्बामामोदमेदुरैः कुसुमैः ।।२१।।

तस्यर्षिसंख्ययोजनदूरे देदीप्यमानशृङ्गौघः ।
कलधौतकलितमूर्तिः कल्याणं दिशतु सप्तमः सालः ।।२२।।

मध्ये तयोर्मरुत्पथलङ्घितविटपाग्रविरुतकलकण्ठा ।
श्रीपारिजातवाटी श्रियमनिशं दिशतु शीतलोद्देशा ।।२३।।

तस्यामतिप्रियाभ्यां सह खेलन्सहसहस्यलक्ष्मीभ्याम् ।
सामन्तो झषकेतोर्हेमन्तो भवतु हेमवृद्ध्यै नः ।।२४।।

उत्तरतस्तस्य महानुद्भटहुतभुक्शिखारुणमयूखः ।।
तपनीयखण्डरचितस्तनुतादायुष्यमष्टमो वरणः ।।२५।।

कादम्बविपिनवाटीमनयोर्मध्यभुवि कल्पितावासाम् ।
कलयामि सूनकोरककन्दलितामोदतुन्दिलसमीराम् ।।२६।।

तस्यामतिशिशिराकृतिरासीनस्तपतपस्यलक्ष्मीभ्याम् ।
शिवमनिशं कुरुतान्मे शिशिरर्तुः सततशीतलदिगन्तः ।।२७।।

तस्यां कदम्बवाट्यां तत्प्रसवामोदमिलितमधुगन्धम् ।
सप्तावरणमनोज्ञं शरणं समुपैमि मन्त्रिणीशरणम् ।।२८।।

तत्रालये विशाले तपनीयारचिततरलसोपाने ।
माणिक्यमण्डपान्तर्महिते सिंहासने मणीखचिते ।।२९।।

बिन्दुत्रिपञ्चकोणद्विपनृपवसुवेददलकुरेखाढ्ये ।
चक्रे सदा निविष्टां षष्ठ्यष्टत्रिंशदक्षरेशानीम् ।।३०।।

तापिञ्छमेचकाभां तालीदलघटितकर्णताटङ्काम् ।
ताम्बूलपूरितमुखीं ताम्राधरबिम्बदृष्टदरहासाम् ।।३१।।

कुङ्कुमपङ्किलदेहां कुवलयजीवातुशावकवतंसाम् ।
कोकनदशोणचरणां कोकिलनिक्वाणकोमलालापाम् ।।३२।।

वामाङ्गगलितचूलीं वनमाल्यकदम्बमालिकाभरणाम् ।
मुक्तालललन्तिकाञ्चितमुग्धालिकमिलितचित्रकोदाराम् ।।३३।।

करविधृतकीरशाबककलनिनदव्यक्तनिखिलनिगमार्थाम्।
वामकुचसङ्गिवीणावादनसौख्यार्धमीलिताक्षियुगाम् ।।३४।।

आपाटलांशुकधरामादिरसोन्मेषवासितकटाक्षाम् ।
आम्नायसारगुलिकामाद्यां संगीतमातृकां वन्दे ।।३५।।

तस्य च सुवर्णसालस्योत्तरतस्तरुणकुङ्कुमच्छायः ।
शमयतु मम संतापं सालो नवमः स पुष्परागमयः ।।३६।।

अनयोरन्तरवसुधाः प्रणुमः प्रत्यग्रपुष्परागमयीः ।
सिंहासनेश्वरीमनुचिन्तननिस्तन्द्रसिद्धनीरन्ध्राः ।।३७।।

तत्सालोत्तरदेशे तरुणजपाकिरणधोरणीशोणः ।
प्रशमयतु पद्मरागप्राकारो मम पराभवं दशमः ।।३८।।

अन्तर भूकृतवासननयोरपनीतचित्तवैमत्यान् ।
चक्रेशीपदभक्तांश्चारणवर्गानहर्निशं कलये ।।३९।।

सारङ्गयाहयोजनदूरेऽसंघटितकेतनस्तस्य ।
गोमेदकेन रचितो गोपायतु मां समुन्नतः सालः ।।४०।।

वप्रद्वयान्तरोर्व्यां वटुकैर्विविधैश्च योगिनीवृन्दैः ।
सततं समर्चितायाः संकर्षिण्याः प्रणौमि चरणाब्जम् ।।४१।।

तापसयोजनदूरे तस्य समुत्तुङ्गगोपुरोपेतः ।
वाञ्छापूर्त्यै भवताद्वज्रमणीनिकरनिर्मितो वप्रः ।।४२।।

वरणद्वितयान्तरतो वासजुषो विहितमधुरसास्वादाः ।
रम्भादिविबुधवेश्या रचयन्तु महान्तमस्मदानन्दम् ।।४३।।

तत्र सदा प्रवहन्ती तटिनी वज्राभिधा चिरं जीयात् ।
चटुलोर्मिजालनृत्यत्कलहंसीकुलकलक्वणितपुष्टा ।।४४।।

रोधसि तस्या रुचिरे वज्रेशी जयति वज्रभूषाढ्या ।
वज्रप्रदानतोषितवज्रिमुखत्रिदशविनुतचारित्रा ।।४५।।

तस्योदीच्यां हरिति स्तबकितसुषमावलीढवियदन्तः ।
वैडूर्यरत्नरचितो वैमल्यं दिशतु चेतसो वरणः ।।४६।।

अधिमध्यमेतयोः पुनरम्बाचरणावलम्बितस्वान्ताम् ।
कार्कोटकादिनागान्कलयामः किं च बलिमुखान्दनुजान् ।।४७।।

गन्धवहसंख्ययोजनदूरे गगनोर्ध्वजाङ्घिकस्तस्य ।
वासवमणिप्रणीतो वरणो बर्धयतु वैदुषीं विशदाम् ।।४८।।

मध्यक्षोण्यामनयोर्महेन्द्रनीलात्मकानि च सरांसि।
शातोदरीसहायान्भूपालानपि पुनः पुनः प्रणुमः।।४९।।

आशुगयोजनदूरे तस्योर्ध्वं कान्तिधवलितदिगन्तः।
मुक्ताविचरितगात्रो मुहुरस्माकं मुदे भवतु वप्रः।।५०।।

आवृत्त्यरधिमध्यं पूर्वस्यां दिशि पुरंदरः श्रीमान् ।
अभ्रमुविटाधिरूढो विभ्रममस्माकमनिशमातनुतात् ।।५१।।

तत्कोणे व्यजनस्त्रुक्तोमरपात्रस्त्रुवान्नशक्तिधरः ।
स्वाहास्वधासमेतः सुखयतु मां हव्यवाहनः सुचिरम् ।।५२।।

दक्षिणदिगन्तराले दण्डधरो नीलनीरदच्छायः ।
त्रिपुरापदाब्जभक्तस्तिरयतु मम निखिलमंहसां निकरम् ।।५३।।

तस्यैवपश्चिमायां दिशि दलितेन्दीवरप्रभाश्यामः ।
खेटासियष्टिधारी खेदानपनयतु यातुधानो मे ।।५४।।

तस्या उत्तरदेशे धवलाङ्गो विपुलझषवरारूढः ।
पाशायुधात्तपाणिः पाशी विदलयतु पाशजालानि ।।५५।।

वन्दे तदुत्तरहरित्कोणे वायुं चमूरूवरवाहम् ।
कोरकिततत्त्वोधानन्गोरक्षप्रमुखयोगिनोऽपि मुहुः ।।५६।।

तरुणीरिडाप्रधानास्तिस्त्रो वातस्य तस्य कृतवासाः ।
प्रत्यग्रकापिशायनपानपरिभ्रान्तलोचनाः कलये ।।५७।।

तल्लोकपूर्वभागे धनदं ध्यायामि शेवधिकुलेशम् ।
अपि माणिभद्रमुख्यानम्बाचरणावलम्बिनो यक्षान् ।।५८।।

तस्यैव पूर्वसीमनि तपनीयारचितगोपुरे नगरे ।
कात्यायनीसहायं कलये शीतांशुखण्डचूडालम् ।।५९।।

तत्पुरषोडशवरणस्थलभाजस्तरुणचन्द्रचूडालान् ।
रुद्राध्याये पठितान रुद्राणीसहचरान्भजे रुद्रान् ।।६०।।

पचमानसंख्ययोजनदूरे बालतृणमेचकस्तस्य ।
सालो मरकतरचितः संपदमचलां श्रियं च पुष्णातु ।।६१।।

आवृतियुग्मान्तरतो हरितमणीनिवहमेचके देशे ।
हाटकतालीविपिनं हालाघटघटितविटपमाकलये ।।६२।।

तत्रैव मन्त्रिणीगृहपरिणाहं तरलकेतनं सदनम् ।
मरकतसौधमनोज्ञं दद्यादायूंषि दण्डनाथायाः ।।६३।।

सदने तत्र हरिन्मणिसंघटिते मण्डपे शतस्तम्भे ।
कार्तस्वरमयपीठं कनकमयाम्बुरुहकर्णिकामध्ये ।।६४।।

बिन्दुत्रिकोणवर्तुलषडस्रवृत्तद्वयान्विते चक्रे ।
संचारिणी दशोत्तरशतार्णमनुराजकमलकलहंसी ।।६५।।

कोलवदना कुशेशयनना कोकारि माण्डातांशखण्डा।
संतप्तकाञ्चनाभा संध्यारुणचेलसंवृतनितम्बा ।।६६।।

हलमुसलशङ्खचक्राङ्कुशपाशाभयवरस्फुरितहस्ता ।
कूलंकषानुकम्पा कुङ्कुमजम्बालितस्तनाभोगा ।।६७।।

धूर्तानामतिदूरा वार्ताशेषावलग्नकमनीया ।
आर्तालीशुभदात्री वार्ता भवतु वाञ्छितार्थाय ।।६८।।

तस्याः परितो देवीः स्वप्नेश्युन्मत्तभैरवीमुख्याः ।
प्रणमत जम्भिन्याद्या भैरववर्गांश्च हेतुकप्रमुखान् ।।६९।।

पूर्वोक्तसंख्ययोजनदूरे पूयांशुपाटलस्तस्य ।
विद्रावयतु मदार्तिं विद्रुमसालो विशङ्कटद्वारः ।।७०।।

आवरणयोरहर्निशमन्तरभूमौ प्रकाशशालिन्याम् ।
आसीनमम्बुजासनमभिनवसिन्दूरगौरमहमीडे ।।७१।।

वरणस्य तस्य मारुतयोजनतो विपुलगोपुरद्वारः ।
सालो नानारत्नैः संघटिताङ्गः कृषीष्ट मदभीष्टम् ।।७२।।

अन्तरकक्ष्यामनयोरविरलशोभापि चण्डिलोद्देशाम् ।
माणिक्यमण्डपाख्यां महतीमधिहृदयमनिशमाकलये ।।७३।।

तत्र स्थितं प्रसन्नं तरुणतमालप्रवालकिरणाभम् ।
कर्णावलम्बिकुण्डलकन्दलिताभीशुकवचितकपोलम् ।।७४।।

शोणाधरं शुचिस्मितमेणाङ्कवदनमेधमानकृपम् ।
मुग्धैणमदविशेषकमुद्रितनिटिलेन्दुरेखिकारुचिरम् ।।७५।।

नालीकदलसहोदरनयश्चलघटितमनसिजाकूतम् ।
कमलाकठिनपयोधरकस्तूरीघुसृणपङ्किलोरस्कम् ।।७६।।

चाम्पेयगन्धि कैश्यं शम्पासब्रह्मचारि कौशेयम् ।
श्रीवत्सकौस्तुभधरं श्रितजनरक्षाधुरीणचरणाब्जम् ।।७७।।

कम्बुसुदर्शनविलसत्करपद्मं कण्ठलोलवनमालम् ।
मुचुकुन्दमोक्षफलदं मुकुन्दमानन्दकन्दमचलम्बे ।।७८।।

तद्वरणोत्तरभागे तारापतिबिम्बचुम्बिनिजशृङ्गः ।
विविधमणीगणघटितो वितरतु सालो विनिर्मलां धिषणाम् ।।७९।।

प्राकारद्वितयान्तरकक्ष्यां पृथुरत्ननिकरसंकीर्णाम् ।
नमत सहस्रस्तम्भकमण्डपनाम्नातिविश्रुतां भुवने ।।८०।।

प्रणुमस्तत्र भवानीसहचरमीशानमिन्दुखण्डधरम् ।
शृङ्गारनायिकामनुशीलनभाजोऽपि भृङ्गिनन्दिमुखान् ।।८१।।

तस्यैणवाहयोजनदूरे वन्दे मनोमयं वप्रम् ।
अङ्कुरन्मणिकिरणामन्तरकक्ष्यां च निर्मलामनयोः ।।८२।।

तत्रैवामृतवापीं तरलतरङ्गावलीढतटयुग्मामाम् ।
मुक्तामयकलहंसीमुद्रितकनकारविन्दसंदोहाम् ।।८३।।

शक्रोपलमयभृङ्गीसंगीतोन्मेषघोषितदिगन्ताम् ।
काञ्चनमयाङ्गविलसत्कारण्डवषण्डताण्डवमनोज्ञाम् ।।८४।।

कुरुविन्दात्मकहल्लककोरकसुषमासमूहपाटलिताम् ।
कलये सुधास्वरूपां कन्दलितामन्दकैरवामोदाम् ।।८५।।

तद्वापिकान्तराले तरले मणिपोतसीम्नि विहरन्तीम् ।
सिन्दूरपाटलाङ्गीं सितकिरणाङ्कुरकल्पितवतंसाम् ।।८६।।

पर्वेन्दुवदनां पल्लवशोणाधरस्फुरितहासाम् ।
कुटिलकबरीं कुरङ्गीशिशुनयनां कुण्डलस्फुरितगण्डाम् ।।८७।।

निकटस्थपोतनिलयाः शक्तीः शयविधृतहेमशृङ्गजलैः ।
परिषिञ्चन्तीं परितस्तारां तारुण्यगर्वितां वन्दे ।।८८।।

प्रगुक्तसंख्ययोजनदूरे प्रणमामि बुद्धिमयसालम् ।
अनयोरन्तरकक्ष्यामष्टापदपुष्टमेदिनीं रुचिराम् ।।८९।।

कादम्बरीनिधानां कलयाम्यानन्दवापिकां तस्याम् ।
शोणाश्मनिवहनिर्मितसोपानश्रेणिसोभमानतटीम् ।।९०।।

माणिक्यतरणिनिलयां मध्ये तस्या मदारुणकपोलाम् ।
अमृतेशीत्यभिधानामन्तः कलयामि वारुणीं देवीम् ।।९१।।

सौवणकेनिपातनहस्ताः सौन्दर्यगर्विता देव्यः ।
तत्पुरतस्थितिभाजो वितरन्त्वस्माकमायुषां वृद्धिम् ।।९२।।

तस्य पृषदश्वयोजनदूरेऽहंकारसालमतितुङ्गम् ।
वन्दे तयोश्च मध्ये कक्ष्यां वलमानमलयपवमानाम् ।।९३।।

विनुमो विमर्शवापीं सौषुम्नसुधास्वरूपिणीं तत्र ।
वेलातिलङ्घ्यवीचीकोलाहलभरितकूलवनवाटीम् ।।९४।।

तत्रैव सलिलमध्ये तापिञ्छदलप्रपञ्चसुषमाभाम् ।
श्यामलकञ्चुकलसितां श्यामाविटबिम्बडम्बरहरास्याम् ।।९५।।

आभुग्नमसृणचिल्ली हसितायुग्मशरकार्मुकविलासाम् ।
मन्दस्मिताञ्चितमुखीं मणिमयताटङ्कमण्डितकपोलाम् ।।९६।।

कुरुविन्दतरणिनिलयां कुलाचलस्पर्धिकुचनमन्मध्याम् ।
कुङ्कमविलिप्तगात्रीं कुरुकुल्लां मनसि कुर्महे सततम् ।।९७।।

तत्सालोत्तरभागे भानुमयं वप्रमाश्रये दीप्तम् ।
मध्यं च विपुलमनयोर्मन्ये विश्रान्तमातपोद्गारम् ।।९८।।

तत्र कुरुविन्दपीठे तामरसे कनकर्णिकाघठिते ।
आसीनमरुणवाससमम्लानप्रसवमालिकाभरणम् ।।९९।।
चक्षुष्मती प्रकाशनशक्तिच्छायासमारचितकेलिम् ।
माणिक्यमुकुटरम्यं मन्ये मार्तण्डभैरवं हृदये ।।१००।।
इन्दुमयसालमीडे तस्योत्तरतस्तुषारगिरिगौरम् ।
अत्यन्तशिशिरमारुतमनयोर्मध्यं च चन्द्रिकोद्गारम् ।।१०१।।
तत्र काशमानं तारानिकरैश्च सर्वतस्सेव्यम् ।
अमृतमयकान्तिकन्दलमन्तः कलयामि कुन्दसितमिन्दुम्।।१०२।।
शृङ्गारसालमीडे शृङ्गोल्लसितं तदुत्तरे भागे ।
मध्यस्थले तयोरपि महितां शृङ्गारपूर्विकां परिखाम् ।।१०३।।
तत्र मणिनौस्थिताभिस्तपनीयारचितशृङ्गहस्ताभिः ।
शृङ्गारदेवताभिः सहितं परिखाधिपं भजे मदनम् ।।१०४।।
शृङ्गारवरणवर्यस्योत्तरतः सकलविबुधसंसेव्यम् ।
चिन्तामणिगणरचितं चिन्तां दूरीकरोतु मे सदनम् ।।१०५।।
मणिसदनसालयोरधिमध्यं दशतालभूमिरुहदीर्घैः ।
पर्णैः सुवर्णवर्णैर्युक्तां काण्डैश्च योजनोत्तुङ्गैः ।।१०६।।
मृदुलैस्तालीपञ्चकमानैर्मिलितां च केसरकदम्बैः ।
संततगलितमरन्दस्रोतोनिर्यन्मिलिन्दसंदोहाम् ।।१०७।।
पाटीरपवनबालकधाटीनिर्यत्परागपिञ्जरिताम् ।
कलहंसीकुलकलकलकूलंकषनिनदनिवास कमनीयाम्।।१०८।।
पद्माटवीं भजामः परिमलकल्लोलपक्ष्मलोपान्ताम् ।
देव्यर्घ्य पात्रधारी तस्याः पूर्वदिशि दशकलायुक्तः ।
वलयितमूर्तिर्भगवान्वह्निः क्रोशोन्नतश्चिरं पायात् ।।१०९।।
तत्राधारे देव्याः पात्रीरूपः प्रभाकरः श्रीमान् ।
द्वादशकलासमेतो ध्वान्तं मम बहुलमान्तरं भिन्द्यात् ।।११०।।

तस्मिन्दिनेशपात्रे तरङ्गितामोदममृतमयमर्घ्यम् ।
चन्द्रकलात्मकममृतं सान्द्रीकुर्यादमन्दमानन्दम् ।।१११।।

अमृते तस्मिन्नभितो विहरन्त्यो विविधमणितरणिभाजः।
षोडशकलाः सुधांशोः शोकादुत्तारयन्तु मामनिशम् ।।११२।।

तत्रैव विहृतिभाजो धातृमुखानां च कारणेशानाम् ।
सृष्ट्यादिरूपिकास्ताः शमयन्त्वखिलाः कलाश्च संतापम् ।।११३।।

कीनाशवरुणकिन्नरराजदिगन्तेषु रत्नगेहस्य ।
कलयामि तान्यजस्रं कलयन्त्वायुष्यमर्घ्यपात्राणि ।।११४।।

पात्रस्थलस्य पुरतः पद्मारमणविधिपार्वतीशानाम् ।
भवनानि शर्मणे नो भवन्तु भासा प्रदीपितजगन्ति ।।११५।।

सदनस्यानलकोणे सततं प्रणमामि कुण्डमाग्नेयम् ।
तत्र स्थितं च वह्निं तरलशिखाजटिलमम्बिकाजनकम् ।।११६।।

तस्यासुरदिशि तादृशरत्नपरिस्फुरितपर्वनवकाढ्यम् ।
चक्रात्मकं शताङ्गं शतयोजनमुन्नतं भजे दिव्यम् ।।११७।।

तत्रैव दिशि निषण्णं तपनीयध्वजपरम्पराश्लिष्टम् ।
रथमपरं च भवान्या रचयामो मनसि रत्नयम् ।।११८।।

भवनस्य वायुभागे परिष्कृतो विविधवैजयन्तीभिः ।
रचयतु मुदं रथेन्द्रः सचिवेशान्याः समस्तवन्द्यायाः ।।११९।।

कुर्मोऽधिहृदयमनिशं क्रोडास्यायाः शताङ्गमूर्धन्यम् ।
रुद्रदिशि रत्नधाम्नो रुचिरपलाकाप्रपञ्चकञ्चुकितम् ।।१२०।।

परितो देवीधाम्नः प्रणीतवासा मनुस्वरूपिण्यः ।
कुर्वन्तु रश्मिमालाकृतयः कुशलानि देवता निखिलाः ।।१२१।।

प्राग्द्वारस्य भवानीधाम्नः पार्श्वद्वयारचितवासे ।
मातङ्गी किटिमुख्यौ सणिसदने मनसि भावयामि चिरम्।।१२२।।

योजनयुगलाभोगा क्रोशपरिणाहयैव भित्या च।
चिन्तामणिगृहभूमिर्जीयादाम्नायमयचतुर्द्वारा ।।१२३।।

द्वारे द्वारे धाम्नः पिण्डीभूता नवीनबिम्बाभाः ।
विदधतु विपुलां कीर्तिं दिव्या लौहित्यसिद्धयो देव्यः ।।१२४।।

मणिसदनस्यान्तरतो महनीये रत्नवेदिकामध्ये ।
बिन्दुमयचक्रमीडे पीठानामुपरि विरचितावासम् ।।१२५।।

चक्राणां सकलानां प्रथममधःसीमफलकवास्तव्याः ।
अणिमादिसिद्धयो मा मवन्तु देवीप्रभास्वरूपिण्यः ।।१२६।।

अणिमादिसिद्धिफलकस्योपरि हरिणाङ्कखण्डकृतचूडाः ।
भद्रं पक्ष्मलयन्तु ब्राह्मीप्रमुखाश्च मातरोऽस्माकम् ।।१२७।।

तस्योपरि मणिफलके तारुण्योत्तुङ्गपीनकुचभाराः ।
संक्षोभिणीप्रधाना भ्रान्तिं विद्रावयन्तु दश मुद्राः ।।१२८।।

फलकत्रयस्वरूपे पृथुले त्रैलाक्यमोहने चक्रे ।
दीव्यन्तु प्रकटाख्यास्तासां कर्त्री च भगवती त्रिपुरा ।।१२९।।

तदुपरि विपुले धिष्ण्ये तरलदृशस्तरुणकोकनदभासः ।
कामाकर्षण्याद्याः कलये देवीः कलाधरशिखण्डाः ।।१३०।।

सर्वाशापरिपूरकचक्रेऽस्मिन्गुप्तयोगिनीसेव्या ।
त्रिपुरेशी मम दुरितं तुद्यात्कण्ठावलम्बिमणिहारा ।।१३१।।

तस्योपरि मणिपीठे ताम्राम्भोरुहदलप्रभाशांणाः ।
ध्यायाम्यनङ्गकुसुमा प्रमुखा देवीश्च विधृतकूर्पासाः ।।१३२।।

संक्षोभकारकेऽस्मिंश्चक्रे श्रीत्रिपुरसुन्दरी साक्षात् ।
गोप्त्री गुप्ततराख्या गोपायतु मां कृपार्द्रया दृष्ट्या ।।१३३।।

संक्षोभिणीप्रधानाः शक्तीस्तस्योर्ध्ववलयकृतवासाः ।
आलोलनीलवेणीरन्तः कलयामि यौवनोन्मत्ताः ।।१३४।।

सौभाग्यदायकेऽस्मिंश्चक्रेशी त्रिपुरवासिनी जीयात् ।
शक्तीश्च संप्रदायाभिधाः समस्ताः प्रमोदयन्त्वनिशम् ।।१३५।।

मणिपीठोपरि तासां महति चतुर्हस्तविस्तृते वलये ।
संततविरचितवासाः शक्तीः कलयामि सर्वसिद्धिमुखाः ।।१३६।।

सर्वार्थसाधकाख्ये चक्रेऽमुष्मिन्समस्तफलदात्री ।
त्रिपुराश्रीर्मम कुशलं दिशतादुत्तीर्णयोगिनी सेव्या ।।१३७।।

तासां निलयस्योपरि धिष्ण्ये कौसुम्भकञ्चुकमनोज्ञाः ।
सर्वज्ञाद्या देव्यः सकलाः संपादयन्तु मम कीर्तिम् ।।१३८।।

चक्रे समस्तरक्षाकरनाम्न्यस्मिन्समस्तजनसेव्याम् ।
मनसि निगर्भासहितां मन्ये श्रीत्रिपुरमालिनीं देवीम् ।।१३९।।

सर्वज्ञासदनोपरि चक्रे विपुले समाकलितगेहाः ।
धन्दे वशिनीमुख्याः शक्तीः सिन्दूररेणुशोणरुचः ।।१४०।।

श्रीसर्वरोगहारिणिचक्रेऽस्मिंस्त्रिपुरपूर्विकां सिद्धाम् ।
वन्दे रहस्यनाम्ना वेद्याभिः शक्तिभिः सदा सेव्याम् ।।१४१।।

वशिनीगृहोपरिष्टाद्विंशतिहस्तोन्नते महापीठे ।
शमयन्तु शत्रुवृन्दं शस्त्राण्यस्त्राणि चादिदम्पत्योः ।।१४२।।

शस्त्रसदनोपरिष्टाद्वलये बलवैरिरत्नसंघटिते ।
कामेश्वरीप्रधानाः कलये दवीः सस्तजनवन्द्याः ।।१४३।।

चक्रेऽत्र सर्वसिद्धिप्रदनामनि सर्वफलदात्री ।
त्रियुराम्बावतु सततं परापररहस्ययोगिनीसेव्या ।।१४४।

कामेश्वरीगृहोपरि वलये विविधिमनुसंप्रदायज्ञाः ।
चत्वारो युगनाथा जयन्तु मित्रेशपूर्वका गुरवः ।।१४५।।

नाथभवनोपरिष्टान्नानारत्नचयमेदुरे पीठे ।
कामेश्याद्या नित्याः कलयन्तु मुदं तिथिस्वरूपिण्यः ।।१४६।।

नित्यासदनख्योपरि निर्मलमणिनिवहविरचिते धिष्ण्ये ।
कुशलं षडङ्गदेव्यः कलयन्त्वस्माकमुत्तरलनेत्राः ।।१४७।।

सदनस्योपरि तासां सर्वानन्दमयनामके बिन्दौ ।
पञ्चब्रह्माकारं मञ्चं प्रणमामि मणिगणाकीर्णम् ।।१४८।।

परितो मणिमञ्चस्य प्रलम्बमाना नियन्त्रिता पाशैः ।
मायामयी यवनिका मम दुरितं हरंतु मेचकच्छाया ।।१४९।।

मञ्चस्योपरिलम्बन्मल्लीपुन्नागमालिकाभरितम् ।
हरिगोपमयवितानं हरतादालस्यमनिशमस्माकम् ।।१५०।।

पर्यङ्कस्य भजामः पादान्बिम्बाम्बुदेन्दुहेमरुचः ।
अजहरिरुद्रेशमयाननलासुरमारुतेशकोणस्थान् ।।१५१।।

फलकं सदा शिवमयं प्रणौमि सिन्दूररेणुकिरणाभम्।
आरभ्याङ्केशीनां सदनात्कलितं च रत्नसोपानम् ।।१५२।।

पट्टोपधानगण्डकचतुष्टयस्फुरितपाटलास्तरणम् ।
पर्यङ्कोपरि घटितं पातु चिरं हंसतूलशयनं नः ।।१५३।।

तस्योपरि निवसन्तं तारुण्यश्रीनिषेवितं सततम् ।
आवृन्तफुल्लहल्लकमरीचिकापुञ्जमञ्जुलच्छायम् ।।१५४।।

सिन्दूरशोणवसनं शीतांशुस्तवकचुम्बितकिरीटम् ।
कुङ्कुमतिलकमनोहरकुटिलालिकहसितकुमुदबन्धुशिशुम् ।।१५५।।

पूर्णेन्दुबिम्बवदनं फुल्लसरोजातलोचनत्रितयम् ।
तरलापाङ्गतरङ्गितशफराङ्कनशास्त्रसंप्रदायार्थम् ।।१५६।।

मणिमयकुण्डलपुष्यन्मरीचिकल्लोलमांसलकपोलम् ।
विद्रुमसहोदराधरविसृक्करस्मितकिशोरसंचारम् ।।१५७।।

आमोदिकुसमुमशेखरमानीलभ्रूलतायुगमनोज्ञम् ।
वीटीसौरभवीचीद्विगुणितवक्त्रारविन्दसौरभ्यम् ।।१५८।।

पाशाङ्कुशेक्षुचापप्रसवशरस्फुरितकोमलकराब्जम् ।
काश्मीरपङ्किलाङ्गं कामेशं मनसि कुर्महे सततम् ।।१५९।।

तस्याङ्कभुवि निषण्णां तरुणकदम्बप्रसूनकिरणाभाम् ।
शीतांशुखण्डचूडां सीमन्तन्यस्तसान्द्रसिन्दूराम् ।।१६०।।

कुङ्कुमललामभास्वपिटिलां कुटिलतरचिल्लिकायुगलाम् ।
नालीकतुल्यनयनां नासञ्चलनटितमौक्तिकाभरणाम् ।।१६१।।

अङ्कुरितमन्दहासामरुणाधरकान्तिविजितबिम्बाभाम् ।
कस्तूरीमकरीयुतकपोलसंक्रान्तकनकताटङ्काम् ।।१६२।।

कर्पूरसान्द्रवीटीकबलितवदनारविन्दकमनीयाम् ।
कम्बुसहोदरकण्ठप्रलम्बमानाच्छमौक्तिककलापाम् ।।१६३।।

कल्हारदामकोमलभुजयुगलस्फुरितरत्नकेयूराम् ।
करपद्ममूलविलसत्काञ्चनमयकटकवलयसंदोहाम् ।।१६४।।
पाणिचतुष्टयविलसत्पाशाङ्कुशपुण्ड्रचापपुष्पास्त्राम् ।
कूलंकषकुचशिखरां कुङ्कुमकर्दमितरत्नकूर्पासाम् ।।१६५।।
अणुदायादवलग्नामम्बुदशोभासनाभिरोमलताम् ।
माणिक्यखचितकाञ्चीमरीचिकाक्रान्तमांसलनितम्भाम्।।१६६।।
करभोरुकाण्डयुगलां जङ्घाजितकामजैत्रतूणीराम् ।
प्रपदपरिभूतकूर्मां पल्लवसच्छायपदयुगमनोज्ञाम् ।।१६७।।
कमलभवकञ्जलोचनकिरीटरत्नांशुरञ्जितपदाब्जाम् ।
उन्मस्तकानुकम्पामुत्तरलापाङ्गपोषितानङ्गाम् ।।१६८।।
आदिमरसावलम्बामनिदंप्रथमोक्तिवल्लरीकलिकाम् ।
आब्रह्मकीटजननीमन्तः कलयामि सुन्दरीमनिशम् ।।१६९।।
कस्तु क्षितौ पटीयान्वस्तु स्तोतुं शिवाङ्कवास्तव्यम् ।
अस्तु चिरंतनसुकृतैः प्रस्तुतकाम्याय तन्मम पुरस्तात् ।।१७०।।
प्रभुसंमितोक्तिगम्ये परमशिवोत्सङ्गतुङ्गपर्यङ्कम् ।
तेजः किंचन दिव्य पुरतो मे भवतु पुण्ड्रकोदण्डम् ।।१७१।।
मधुरिमभरितशरासं मकरन्दस्यान्दमार्गणोदारम् ।
कैरविणीविटचूडं कैवल्यायास्तु किंचन महो नः ।।१७२।।
अक्षज्ञमिक्षुचापं परोक्षमवलग्नसीमनि त्र्यक्षम् ।
क्षपयतु मे क्षेमेतरमुक्षरथप्रेमपक्ष्मलं तेजः ।।१७३।।
भृङ्गरुचिसंगरकरापाङ्गं शृङ्गारतुङ्गमरुणाङ्गम् ।
मङ्गलमभङ्गुरं मे घटयतु गङ्गाधराङ्गसङ्गि महः ।।१७४।।
प्रपदजितकूर्ममूर्मिलकरुणं मर्मरुचिनिर्मथहदेहम् ।
श्रितवर्म मर्म शंभोः किंचन नर्म मम शर्म निर्मातु ।।१७५।।
कालकुरलालिकालिमकन्दलविजितालिविधृतमणिवालि ।
मिलतु हृदि पुलिनजघनं बहुलितगलगरलकेलि किमपि महः।।१७६।।

कुङ्कुमतिलकितफाला कुरुविन्दच्छायपाटलदुकूला ।
करुणापयोधिवेला काचन चित्ते चकास्तु मे लीला ।।१७७।।

पुष्पंधयरुचिवेषः पुलिनाभोपत्रपाकरश्रोण्यः
जीयासुरिक्षुपाणयः काश्चन कामारिकेलिसाक्षिण्यः ।।१७८।।

तपनीयांशुकभांसि द्राक्षामाधुर्यनास्तिकवचांसि ।
कतिचन शुचं महांसि क्षपयुत कपालितोषिमनांसि ।।१७९।।

असितकचमायताक्षं कुसुमशरं कूलमुद्वहकृपार्द्रम् ।
आदिमरसाधिदैवतमन्तः कलये हराङ्कवासि महः ।।१८०।।

कर्णोपान्ततरङ्गितकटाक्षनिस्पन्दिकण्ठदघ्नकृपाम् ।
कामेश्वराङ्कनिलयां कामपि विद्यां पुरातनीं कलये ।।१८१।।

अरविन्दकान्त्यरुंतुदविलोचनद्वन्द्वसुन्दरमुखेन्दुः ।
छन्दः कन्दलमन्दिरमन्तःपुरमैन्दुशेखरं वन्दे ।।१८२।।

बिम्बिनिकुरुम्बडम्बरविडम्बकच्छायमम्बरवलग्नम् ।
कम्बुगलमम्बुजकचं बिम्बोकं कमपि चुम्बतु मनो मे ।।१८३।।

कमपि कमनीयरूपं कलयाम्यन्तः कदम्बकुसुमाढ्यम् ।
चम्पकरुचिरसुवेषैः संपादितकान्त्यलंकृतदिगन्तम् ।।१८४।।

शम्पारूचिभरगर्हा संपादककान्तिकवचितदिगन्तम् ।
सिद्धान्तं निगमानां शुध्दान्तं किमपि शूलिनः कलये ।।१८५।।

उद्यद्दिनकरशोणानुत्पलबन्धुस्तनंधयापीडान् ।
करकलितपुण्ड्रचापान्कलये कानपि कपर्दिनः प्राणान् ।।१८६।।

रशनालसज्जघनया रसना जीवातु चापभासुरया ।
घ्राणायुष्करशरया घ्रातं चित्तं कयापि वासनया ।।१८७।।

सरसिजसहयुध्वदृशा शम्पालतिकासनाभिविग्रहया ।
भासा कयापि चेतो नासामणिशोभिवदनयाभारितम् ।।१८८।।

नवयावकाभसिचयान्वितया गजयानया दयापरया ।
धृतयामिनीशकलया धिया कयापि क्षतामया ह्रि वयम्।।१८९।।

अलमलमकुसुमबाणैरबिम्बशोणैरपुण्ड्रकोदण्डैः ।
अकुमुदबान्धवचूडैरन्यैरिह जगति दैवतंमन्यैः ।।१९०।।

कुवलयसदृक्षनयनैः कुलगिरिकूटस्थबन्धुकुचभारैः ।
करुणास्पन्दिकटाक्षैः कवचितचित्तोऽस्मि कतिपयैः कुतुकैः ।।१९१।।

नवजनसुलभाय नमो नालीकसनाभिलोचनाय ।
नन्दितगिरिशाय नमो महसे नवनीपपाटलाय ।।१९२।।

कादम्बकुसुमधाम्ने कायच्छायाकणायितार्यम्णे ।
सीम्ने चिरंतनगिरां भूम्ने कस्मैचिदादधे प्रणतिम् ।।१९३।।

कुटिलकवरीभरेभ्यः कुङ्कुमसब्रह्मचारिकिरणेभ्यः ।
कूलंकपस्तनेभ्यः कुर्मः प्रणतिं कुलाद्रिकुतुकेभ्यः ।।१९४।।

कोकनदशोणचरणात्कोमलकुरलालिविजितशैवालात्।
उत्पलसुगन्धिनयनादुररीकुर्मो न देवतामन्याम् ।।१९५।।

आपाटलाधराणामानीलस्निग्धबर्बरकचानाम् ।
आम्नायजीवनानामाकूतानां हरस्य दासोऽस्मि ।।१९६।।

पुङ्खितविलासहासस्फुरितासु पुराहिताङ्कनिलयासु ।
मग्नं मनो मदीयं क्वास्वपि कामारिजीवनाडीषु ।।१९७।।

ललिता पातु शिरो मे ललाटमम्बा च मधुमतीरूपा ।
भ्रूयुग्मं च भवानी पुष्पशरा पातु लोचनद्वन्द्वम् ।।१९८।।

पायान्नासां बाला सुभगा दन्तांश्च सुन्दरी जिह्वाम् ।
अधरोष्ठमादिशक्तिश्चक्रेशी पातु मे चिरं चिबुकम् ।।१९९।।

कामेश्वरी च कर्णौ कामाक्षी पातु गण्डयोर्युगलम् ।
शृङ्गारनायिकाव्याद्वदनं सिंहासनेश्वरी च गलम् ।।२००।।

स्कन्दप्रसूश्च पातु स्कन्धौ बाहू च पाटलाङ्गी मे ।
पाणी च पद्मनिलया पायादनिशं नखावलीर्विजया ।।२०१।।

कोदण्डिनी च वक्षः कुक्षिं चाव्यात्कुलाचलतनूजा ।
कल्याणी च वलग्नं कटिं च पायात्कलाधरशिखण्डा।।२०२।।

ऊरुद्वयं च पायादुमा मृडानी च जानुनी रक्षेत् ।
जङ्घे च षोडशी मे पायात्पादौ च पाशसृणिहस्ता ।।२०३।।

प्रातः पातु परा मां मध्याह्ने पातु मणिगृहाधीशा ।
शर्वाण्यवतु च सायं पायाद्रात्रौ च भैरवी साक्षात् ।।२०४।।

भार्यां रक्षतु गौरी पायात्पुत्रांश्च बिन्दुगृहपीठा ।
श्रीविद्या च यशो मे शीलं चाव्याच्चिरं महाराज्ञी ।।२०५।।

पवनमयि पावकमयि क्षोणीमयि गगनमयि कृपीटमयि ।
रविमयि शशिमयि दिङ्मयि समयमयि प्राणमयि शवे पाहि।।२०६।।

कालि कपालिनि शूलिनि भैरवि मातङ्गि पञ्चमि त्रिपुरे।
वाग्देवि विन्ध्यवासिनि बाले भुवनेशि पालय चिरं माम्।।२०७।।

अभिनवसिन्दूराभा मम्ब त्वां चिन्तयन्ति ये हृदये ।
उपरि निपतन्ति तेषामुत्पलनयनाकटाक्षकल्लोलाः ।।२०८।।

वर्गाष्टकमिलिताभिर्वशिनीमुख्याभिरावृतां भवतीम् ।
चिन्तयतां सितवर्णां वाचो निर्यान्त्ययत्नतो वदनात् ।।२०९।।

कनकशलाकागौरीं कर्णव्यालोलकुण्डलद्वितथाम् ।
प्रहसितमुखीं च भवतीं ध्यायन्तो ये त एव भूधनदाः।।२१०।।

शीर्षाम्भोरुहमध्ये शीतलपीयूषवर्षिणीं भवतीम् ।
अनुदिनमनुचिन्तयतामायुष्यं भवति पुष्कलमवन्याम् ।।२११।।

मधुरास्मितां मदारुणनयनां मातङ्गकुम्भवक्षोजाम् ।
चन्द्रावतंसिनीं त्वां सविधे पश्यन्ति सुकृतिनः केचित्।।२१२।।

ललितायाः स्तवरत्नं ललितपदाभिः प्रणीतमार्याभिः।
प्रतिदिनभवनौ पठतां फलानि वक्तुं प्रगल्भते सैव ।।२१३।।

श्रीभगवद्दुर्वासमहर्षिप्रणीतं ललितास्तवरत्नं संपूर्णम्।

## *श्रीमहाराज्ञी गायत्री*

**ओं एं महाराज्ञै च विद्महे ह्रीं षोडशाक्षर्यै धीमहि श्रीं तन्नो राजेश्वरी प्रचोदयात्।**

## *श्रीसर्वमङ्गलमङ्गला श्रीमहाराज्ञी राजराजेश्वरीस्तोत्रध्यानम्*

ओं अस्य श्रीमहाराज्ञी श्रीराजराजेश्वरी ध्यानमहामन्त्रस्य आनन्ददक्षिणामूर्तिः ऋषिः। षङ्क्तिः छन्दः। श्रीराजराजेश्वरी परादेवता। एं बीजं। सौः शक्तिः। क्लीं कीलकं। मम श्रीमहाराज्ञी राजराजेश्वरी प्रसादसिद्ध्यर्थे जपे विनियोगः। पञ्चदशीमूलेन षडङ्गन्यासः।

## ध्यानम्

आरक्ताभां त्रिनेत्रां मणिमकुटधरां रत्नताटङ्करम्यां
हस्ताम्भोजैः सपाशांकुशमदनधनुस्सायकैः विस्फुरन्तीम् ।
आपीनोत्तुङ्गवक्षोरुहपरिविलुठत्तारहारोज्वलाङ्गीं
ध्यायेत् कामाङ्गसंस्थां अरुणिमवसनां ईश्वरीं ईश्वराणाम् ।।

## पञ्चोपचारपूजाः

देवी उवाच

देवदेव महादेव करुणानन्दविग्रह ।
पञ्चकृत्य परेशान परमानन्ददायक ।।१।।
श्रीराजराजराजेश्याः श्रीमत्त्रिपुरसुन्दरी ।
देव्याः ध्यानं समाचक्ष्व यदि ते करुणा मयि ।।२।।

ईश्वर उवाच

बहुवारसहस्राणि वारितापि पुनः पुनः ।
स्त्रीस्वभावात् महादेवि पुनः मां परिपृच्छसि ।।३।।
इतःपूर्वं मया नोक्तं गोप्यात् गोप्यतरं शिवे ।
येन अहमपि युद्धेषु देवासुरजयी सदा ।।४।।
निगमागमकोटीनां सारात् सारतरं शिवे ।
श्रीराजराजराजेश्याः ध्यानं सर्वोत्तमोत्तमम् ।।५।।
तव स्नेहात् प्रवक्ष्यामि भोगमोक्षप्रदं नृणाम् ।
सर्वरोग अपमृत्युघ्नं सर्वसौभाग्यवर्धनम् ।।६।।
भूतप्रेतपिशाचारिकृत्यादिशमनं शुभम् ।
यत् ध्यानात् जननी गर्भे न पुनः जायते नरः।।७।।
अनेककोटिब्रह्माण्डकोटीनां बहिः ऊर्ध्वतः ।
सहस्रकोटिविस्तीर्णसुधासिन्धोः तु मध्यमे।।८।।
रत्नद्वीपे जगद्वीपे शतकोटिप्रविस्तरे ।
पञ्चविंशति तत्वाख्य पञ्चविंशतिवप्रकैः ।।९।।

नवरत्नमयैः स्तम्भैः हाटकारचितैः शुभैः
अनेककोटिविततैः मणिकुट्टिममण्टपैः ।।१०।।
जातीचम्पकपुन्नागकेतकीवकुलादिभिः ।
बिल्वैः च सहकारैश्च कल्पकैश्च कदम्बकैः ।।११।।
मन्दारपारिजाताद्यैः पुन्नागाद्यैः सुपुष्पितैः ।
सार्वर्तुकुसुमैः सर्ववांछितार्थप्रपूरकैः ।।१२।।
वसन्तमन्मथाऽनीकरक्षितैः पक्षसंकुलैः ।
नदीनदसहस्रैश्च सुधाधिकरसोत्तमैः ।।१३।।
स्वर्नदीशतसाहस्रैः कूलोद्यत् कल्पपादपैः ।
स्वर्णसारसहंसाद्यैः लसत् सौवर्णपङ्कजैः ।।१४।।
अन्यैश्च विविधैः पक्षिलक्षैः पूर्णौ सुलक्षणैः ।
शतयोजनमुन्नम्रैः गोपुराट्टालमण्टपैः ।।१५।।
रविकोटिसमप्रख्यैः काञ्चनैः मणितोरणैः ।
अनेकाऽऽदित्यसंकाशौ विराजितदिगन्तरैः ।।१६।।
त्रिलक्षयोजनायाम महापद्मवनावृते ।
सहस्रयोजनायाम चिन्तामणिगृहान्तरे ।।१७।।
नवशक्तिलसत् योगपीठे तत्वमयाम्बुजे ।
शतयोजनविस्तीर्णश्रीचक्रान्तः त्रिकोणके ।।१८।।
चतुःपीठान्तरे बिन्दौ चन्द्रसूर्याग्निकोटिभे ।
पञ्चब्रह्मात्मके मञ्चे सर्वतत्वमये शुभे ।।१९।।
महामाया यवनिका महिते सुबृहत्तरे ।
लसदासनषट्कोणे चतुरासनगर्भिते ।।२०।।
तुर्यपीठान्तषट् त्रिंशत् तत्वोद्यत् हंसतूलिके ।
सर्वविद्यामये सर्वतेजोमय शुभाऽऽस्तरे ।।२१।।
कोटकिन्दर्पलावण्यशिववमाङ्कवासिनीमू ।
एककालोदितानेकचन्द्रकोट्यर्कपाटलाम् ।।२२।।
कालाग्निकोटिसदृशीं कान्त्या यावकलोहिताम्।
जपाकुसुमसङ्काशां अजपां अजपात्मिकाम् ।।२३।।

प्रभापाटलिताऽनेककोटिब्रह्माण्डमण्डलाम् ।
कुंकुमोदरसङ्काशां दाडिमीकुसुमारुणाम् ।।२४।।
बालार्ककोटिभां त्र्यक्षां बालेन्दुमकुटोज्वलाम्।
पाशांकुशेक्षुकोदण्डपुष्पबाण-लसत्कराम् ।।२५।।
अचञ्चलतटित्कोटिप्रभापिङ्गलवाससा ।
समावृतां सुवृत्तोरुजघनस्तनमण्डलाम् ।।२६।।
कोटीरकोटिघटितसुधाकरसुधाप्लुताम् ।
अनर्घरत्नखचितमकुटाऽञ्चितमस्तकाम् ।।२७।।
पारिजातप्रसूनश्रीवासिधम्मिल्लबन्धनाम् ।
मुक्तादिमालाविलसत् कण्ठशोभिमुखाम्बुजाम्।।२८।।
कलङ्ककार्श्यनिर्मुक्तशरश्चन्द्रनिभाननाम् ।
ललाटकान्तिविभवैः विजितार्धसुधाकराम् ।।२९।।
सान्द्रसौरभ्यसम्पन्नकस्तूरीतिलकाञ्चिताम् ।
फालभूतिलकीभूतलोचनां कामलोचनाम् ।।३०।।
कटाक्षसरणीनिर्यत् करुणापूर्णवीक्षणाम् ।
भ्रूलताजितकन्दर्पकरकार्मुकविभ्रमाम् ।।३१।।
विलसत् तिलपुष्पश्री विजयोद्यतनासिकाम् ।
सूर्येन्दुमण्डलाकारमणिताटङ्कमण्डिताम् ।।३२।।
शुक्रज्योतितिरस्कारि नासाभरणभासुराम्।
रत्नाङ्कृतलसत् स्वर्णकर्णपूरोपशोभिताम्।।३३।।
जपाविद्रुमलावण्यललिताधरपल्लवाम् ।
दाडिमीबीजसन्दोह सन्देहरदनावलीम् ।।३४।।
शीतांशुशतसङ्काशकान्तिसन्तानहासिनीम् ।
अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ।।३५।।
वीणारवघृणादायिनिजवाणीगुणोदयाम् ।
कर्पूरवीटिकामोदसमाकर्षद्दिगन्तराम् ।।३६।।
मणिदर्पणदर्पघ्नकपोलफलकप्रभाम् ।
प्रसन्नवदनाम्भोजां समन्दहसितेक्षणाम् ।।३७।।

मणिमङ्गलसूत्रेण विलसत् कम्बुकन्धराम् ।
श्रितकल्पलतीभूत भुजवल्लीचतुष्टयाम् ।।३८।।
तप्तकाञ्चनसन्नद्धवैडूर्याङ्गदभूषणाम् ।
पद्मरागशिलापूर्णकङ्कणाढ्यकराम्बुजाम् ।।३९।।
रत्नांगुलीयनिवहैः लसदंगुलिपल्लवाम् ।
तारहारझरीभास्वत् स्तनहाटकभूधराम् ।।४०।।
पाटीरभङ्गकर्पूरकुंकुमालंकृतस्तनीम् ।
बिन्दुत्रयाद्यवक्त्राब्जस्तनद्वितयगुह्यकाम् ।।४१।।
कुचभारनमत् मध्यत्रिवलीललितोदराम् ।
मुक्तामाणिक्यवैडूर्यसम्बद्धोदरबन्धनाम् ।।४२।।
जाह्नवीसरिदावर्तविलसत् नाभिराजिताम् ।
अनर्घरत्नखचितरशना जघनस्थलीम् ।।४३।।
सुवृत्तजङ्घोरुकाण्डां गूढगुल्फां गुडालकाम् ।
शिञ्जानमणिमञ्जीरमञ्जुपादाब्जमञ्जुलाम् ।।४४।।
रत्नग्रैवेयवलयां मकुटाङ्गदकङ्कणाम् ।
कम्बुकण्ठीं सुनासाढ्यां बिम्बोष्ठीं उडुपाननाम्।।४५।।
नवयौवनमध्यस्थां सर्वाभरणसंयुताम् ।
सर्वशृङ्गारवेषाढ्यां सर्वाऽलङ्कारभास्वराम् ।।४६।।
चन्दनागरुकर्पूरीमृगनाभिसुगन्धिनीम् ।
तनुदीर्घाङ्गुलीभास्वत् नखचन्द्रविराजिताम् ।।४७।।
कारणेशशिरोरत्ननिघृष्टचरणाम्बुजाम् ।
पञ्चप्रेतासनाऽऽसीनां पञ्चप्रणवरूपिणीम् ।।४८।।
सृष्टिस्थिति उपसंहाराधिकारानुग्रहोद्यताम् ।
अष्टत्रिंशत् कलारूपां अष्टवाग्देवताऽऽवृताम्।।४९।।
षोढान्यासमहाभूषां षोडशार्णस्वरूपिणीम् ।
इच्छाज्ञानक्रियाऽऽनन्दचित्पञ्चकविलासिनीम्।।५०।।
प्रपञ्चादिजगन्मूर्ति मन्त्रदैवतमातृकाम् ।
सप्तकोटिमहामन्त्ररूपिणीं चित्स्वरूपिणीम् ।।५१।।

षडध्वसौधशृङ्गाटविहाररसपेशलाम् ।
षट्विधैक्यानुसन्धानपरचित् व्योम्नि संस्थिताम्।।५२।।
षडम्बुरुहचक्रान्तः स्फुरत् सौदामिनीप्रभाम् ।
षट्वक्त्रगजवक्त्राभ्यां पार्श्वयोः उपशोभिताम्।।५३।।
अणिमाद्यावृतां आद्यां अणिमाद्यष्टसिद्धिदाम् ।
सकृत् स्मरणमात्रेण वौरिञ्च्यादिपदप्रदाम् ।।५४।।
कल्याणगुणसम्पन्नां नतकल्याणदायिनीम् ।
सर्वमङ्गलदां देवीं सर्वमङ्गलविग्रहाम् ।।५५।।
अनेकजन्मसंसिद्धसुकृताराध्यपादुकाम् ।
सर्वलोकैकजननीं सर्वलोकैकनायिकाम् ।।५६।।
सचामराभ्यां श्रीवाग्भां पार्श्वयोरुपवीजिताम्।
मन्त्रिणी दण्डिनी नीतिविद्यामाऽऽकर्णनोत्सुकाम्।।५७।।
कलाचीं कीटिकाछत्र (चन्द्र) भृङ्गारादर्शपादुकाम्।
मणिवीणां शुकं शारीं तालवृन्तं कमण्डलुम्।।५८।।
पानपात्रं स्वर्णवेत्रं कर्णस्वर्णघटद्वयम् ।
जयकाहालिकां भेरीं शङ्खदुन्दुभिमद्दलान् ।।५९।।
मकरध्वजपंक्तिं च हंससिंहद्विजावलीम् ।
दिव्यानि धूपपात्राणि तथा सौवर्णदीपिकाम् ।।६०।।
बिभ्रतीभिश्च बालान्नपूर्णा ताराभिः आदरात् ।
गायत्र्या चैव सावित्र्या सिद्धलक्ष्म्यादिशक्तिभिः।।६१।।
वाग्वादिन्या नकुल्या च तुरगारूढया वृताम् ।
कपालशूलधारिण्या शूलिन्या भगलाम्बया ।।६२।।
सम्पत्कर्या च सांराज्यलक्ष्म्या च कुरुकुल्लया।
पद्मावत्या धेनुकया भीमकाल्या च दुर्गया ।।६३।।
नीलकण्ठ्या महाकाल्या भद्रकाल्या च भद्रया।
गङ्गाद्याभिः सरिद्भिश्च मातृभिश्चोपसेविताम् ।।६४।।
महाषोडोदिताशेषदेवतागणसेविताम् ।
गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।।६५।।

पञ्चाशत् पीठमध्यस्थां पञ्चाशद्वर्णरूपिणीम्।
मातृकापीठमध्यस्थां मातृकाष्टकवर्गिणीम् ।।६६।।
नवचक्रात्मिकां देवीं नवचक्राधिदेवताम् ।
नित्यानन्दमयीं नित्यां नित्याषोडशिकान्विताम्।।६७।।
सर्वपीठमयीं आद्यां पीठत्रितयमध्यगाम् ।
ओड्याणपीठनिलयां गुरुमण्डलनायिकाम् ।।६८।।
अनन्तयोगिनीवृन्दैः अणिमाद्यैः महोज्वलाम् ।
कोटिकोटिप्रभिन्नैश्च कोटिबालार्कसन्निभैः ।।६९।।
चतुःसमयविद्याभिः षड्विधैः योगिनीगणैः ।
षट्दर्शनादिवेदैश्च पञ्चाम्नायादिदैवतैः ।।७०।।
चतुरायतनोद्भासि गणेशार्कहरीश्वरैः ।
नवावरणदेवीभिः नवधायोगिनीगणैः ।।७१।।
सेवितां अरुणाऽनेककोटिकोट्यर्कपाटलाम् ।
ब्रह्माणीकोटिसहित कोटिब्रह्मभिरावृताम् ।।७२।।
अनेककोटिभिश्चैव बालार्कायुतसन्निभैः ।
नामपारायणपरैः लक्ष्मीनारायणैः स्तुताम् ।।७३।।
ज्वलन्मन्युभिः अत्युग्रैः शतरुद्रीयसंस्तुतैः ।
रुद्राणीकोटिसहितैः रुद्रकोटिभिः अर्चिताम् ।।७४।।
अनेकशरभाऽघोर बडबानलभैरवैः ।
दुर्गाभिः कालिकाभिश्च महाकाल्या च संस्मृताम्।।७५।।
गणपैः वीरभद्रैश्च वटुकैः क्षेत्रपालकैः ।
सुकुमारैः कुमारैश्च तथा हरिहरात्मजैः ।।७६।।
अनेकदशदिक्पालैः चन्द्रार्कवसुकोटिभिः।
सनकाद्यैश्च योगीन्द्रैः सप्तर्षीणां च कोटिभिः।।७७।।
नारदादिसुरऋषीणां कोटिभिः सेवितां सदा ।
शङ्खपद्मनिधनां च कोटिभिः परिसेविताम् ।।७८।।
अप्सरो-यक्ष-गन्धर्व-किन्नराणां च कोटिभिः।
कोटिभिः गुह्यकानां च सविद्याधरकोटिभिः।।७९।।

भैरवी भैरवाणां च कोटिकोटिभिरावृताम् ।
सुरासुराणां कोटीनां कोटिभिः परिसेविताम्।।८०।।
सर्वमन्त्रमयीं देवीं सच्चिदानन्दविग्रहाम् ।
इच्छा-ज्ञान-क्रियारूपां इच्छाकलितविग्रहाम्।।८१।।
परादिवैखरीरूपां परामार्यां परात्पराम् ।
महालक्ष्मीं महादेवीं महात्रिपुरसुन्दरीम् ।।८२।।
जगदह्लादनकरीं जगत् सङ्कल्पविग्रहाम् ।
जगत् सञ्जीवनीद्युक्तां जगत् रञ्जनकारिणीम्।।८३।।
महाकामकलारूपां चतुरासनसंस्थिताम् ।
राजराजेश्वराङ्कस्थां राजराजेश्वरेश्वरीम्।।८४।।
एवं ध्यात्वा पराशक्तिं हृदि श्रीचक्ररूपिणीम्।
पूर्वोक्त न्यासशुद्धात्मा स्वात्माऽभेदेन भावयेत्।।८५।।
अन्तर्यागक्रमेणैव शुद्धिद्रव्यसमन्वितः।
रक्ताम्बरस्रगालेप रक्तभूषणभूषितः।।८६।।
लाक्षारुणगृहे स्थित्वा पूजां कुर्यात् समाहितः।
आवाहनादिभेदांश्च दशमुद्राः प्रदर्शयेत्।।८७।।
यथाशक्ति जपेत् विद्वान् विद्यां सर्वसिद्धिदाम्।
सौभाग्यदण्डिनीमुद्रां रिपुजिह्वाग्रहन्त्रिणीम्।।८८।।
शाक्तं च तिलकं कुर्वन् मुखवैष्टनमाचरेत् ।
पुनः सम्पूर्णया चैव गलोर्ध्वं विन्यसेत् बुधः।।८९।।
व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वा अभिवादयेत्।
ब्रह्मरन्ध्रे न्यसेत् पूर्वं मणिबन्धद्वये पुनः ।।९०।।
ललाटे अनामिकां कृत्वा त्रैलोक्यस्यापि अहं प्रभुः ।
गुरूपदिष्टमार्गेण षोडशार्णं न्यसेत् ततः ।।९१।।
संहारं च ततः सृष्टिं स्थितिन्यासं समाचरेत् ।
षट्कया बाहुन्यासपूर्वं षडङ्गन्यासमाचरेत् ।।९२।।
चक्रपूजापरो यन्त्री श्रीचक्रार्चनपूर्वकम् ।
बिन्दुबिन्दुद्वयारूढ हार्दबिन्दुस्वरूपकाम् ।।९३।।

महाकामकलारूपं आत्मानं भावयेत् धिया ।
सम्पूर्णं चिन्तयेत् विद्वान् ब्रह्मरन्ध्रे अरुणप्रभाम्।।९४।।
स्रवत् सुधाषोडशार्णां सर्वसौभाग्यदां स्मरेत्।
षोडशार्णं महामन्त्रं मन्त्रराजोत्तमोत्तमम्।।९५।।
सकृत् श्रवणमात्रेण कोटिजन्माऽघनाशनम् ।
महापातककोटीनां भञ्जनं स्मृतिमात्रतः ।।९६।।
उपपातकदौर्भाग्यशमनं भुक्तिमुक्तिदम् ।
विषरोगादिदारिद्र्यमृत्युसंहारकारकम् ।।९७।।
सप्तकोटिमहामन्त्रपारायणफलप्रदम् ।
शतरुद्रीयकोटीनां जपयज्ञफलप्रदम् ।।९८।।
चतुःसमुद्रपर्यन्तभूदानफलदं शिवे ।
सहस्रकोटि-गोदानफलदं ध्यानमात्रतः ।।९९।।
कोटि अश्वमेधफलदं जरामृत्युनिवारकम् ।
किं पुनः बहुनोक्तेन शिवसायुज्यदायकम् ।।१००।।
गुलिका पादुकासिद्धि खेचरत्वादिदायकम् ।
ब्रह्माविष्णुमहेशाद्यैः जप्तं यत्पदसिद्धये ।।१०१।।
तत्पदं देशिकाल्लब्धुं षोडशार्णं माहमनुम् ।
सहस्रं प्रजपेत् विद्वान् त्रिशतं शतमेव वा ।।१०२।।
स जीवन्मुक्त एव स्यात् सर्वसौभाग्यसुन्दरः ।
चतुष्षष्टिकलापूर्णहृदयः सदयोदयः ।।१०३।।
श्रीगुरोः पादुका मूर्ध्नि श्रीचक्रं हृदि देवता ।
श्रीविद्या यस्य जिह्वाग्रे स साक्षात् परमः शिवः।।१०४।।
सहस्रारसुधाक्लृप्तषडम्भोरुहमण्डलः ।।१०५।।
श्रीचक्रदेवी श्रीनाथ स्वात्मनां ऐक्यभावनः ।
त्रैलोक्यं अरुणं ध्यात्वा श्रीविद्यां यः जपेत् सुधीः।।१०६।।
स योगी कृतकृत्यश्च चराचरविभुः भवेत् ।
सृष्टिस्थितलयादीनां कृत्याकृत्याविभञ्जकः ।।१०७।।

जङ्गमस्थावरोद्भूतविषविद्रावकोविदः ।
दिव्यमङ्गलकल्याणगुणरत्नैः अलंकृतः ।।१०८।।
मृतसञ्जीवकः नित्यः महाद्भुतचरित्रभूः ।
सिद्धचारणगन्धर्वयक्षरक्षोगणैः स्तुतः ।।१०९।।
विचरन् सकलान् लोकान् निग्रहानुग्रहक्षमः ।
महालक्ष्मीमयः भूत्वा लक्ष्मीवृन्दैश्च सेवितः ।।११०।।
भुञ्जानो बहुलान् भोगान् मूर्तिमानिव मन्मथः।
सृष्टिस्थितिसुसंहारकर्ता शिव इवापरः ।।१११।।
राजराजेश्वरीरूपः राजराजाभिवन्दितः ।
कुलकोटिं समुद्धृत्य शिवयोः ऐक्यमाप्नुयात्।।११२।।
इदं ध्यानं मया प्रोक्तं श्रीविद्याप्रीतिदायकम् ।
तस्मात् सर्वप्रयत्नेन प्रजपेत् ध्यानमुत्तमम् ।।११३।।

सर्वमङ्गलमङ्गला महाराज्ञी श्रीराजराजेश्वरीध्यानं सम्पूर्णम्।

## *श्रीमहाषोडशाक्षरीध्यानम्*

चापं च इक्षुमयं प्रसूनविशिखान् पाशांकुशौ पुस्तकं
माणिक्याक्षमहास्त्रजं मणिमयीं वीणां उरोजद्वये ।
पाणिभ्यां अभयं वरं च दधतीं ब्रह्मादिसेव्यां परां
सिन्दूरारुणविग्रहां त्रिनयनां तां षोडशीमाश्रये ।।१।।
श्रीमन्त्रयन्त्रबलतः किल राजमान सर्वेष्टपूर्तिकरणैकमहासुचक्रे ।
देदीप्यमानवपुषा भुवि भासमानौ राजेश्वरीसुचरणौ शरणं प्रपद्ये ।।४।।
साहस्त्रिकैश्च निजनामभिरर्च्यमानौ साहस्त्रसंख्यदलपद्मनिवासलीलौ ।
नीलोत्पलाभनयनद्वयनित्यरम्यौ राजेश्वरीसुचरणौ शरणं प्रपद्ये ।।५।।
श्रीशादिदेवपरिपूजनलोकपूज्यौ भाग्यप्रदानपरिपूरितभक्तकामौ ।
कार्तस्वराभवपुषा कमनीयरूपौ राजेश्वरीसुचरणौ शरणं प्रपद्ये ।।६।।
श्रुत्यागमादिनिखिलागमसारभूतौ नेत्रत्रयेण नयनोत्सवदानशीलौ ।
नीवारशूकवपुषा हृदि भाव्यमानौ राजेश्वरीसुचरणौ शरणं प्रपद्ये ।।७।।

षष्ट्या चतुर्भिरुपचारपरम्पराभिः षष्ट्या चतुर्भिरथकोटिसुयोगिनीभिः ।
षट्कोणमध्यनिलयौ सकलागमेड्यौ राजेश्वरीसुचरणौ शरणं प्रपद्ये ।।८।।
श्रीन्यासपूर्वकसुमन्त्रितरुद्रकुम्भैः क्षीराज्यमाक्षिकफलैरथ नारिकेलैः ।
श्रीकाञ्चनेन कवचेन विराजमानौ राजेश्वरीसुचरणौ शरणं प्रपद्ये ।।९।।
भक्तौघभक्तिवशतः नियमार्चनाभिः सान्निध्यनित्यपरिपूर्णकलाभिरामौ ।
नित्याभिषेकसततािद्रमहाप्रभावौ राजेश्वरीसुचरणौ शरणं प्रपद्ये ।।१०।।
राजेश्वरीचरणयोः शरणागतित्व-संबोध्यमानदशकं पठतां सुराज्ञी ।
सर्वेष्टपूर्तिमचिरात् कुरुते दयार्द्रा सर्वत्र रक्षति मुदा सुतनिर्विशेषम् ।।११।।

श्रीराजराजेश्वरीशरणागतिस्तवः समाप्तः।

## *श्रीराजराजेश्वरी महाराज्ञी कवचम्*

श्रीभैरव उवाच—

**श्रृणु देवि प्रक्ष्यामि सम्राज्ञीकवचं शुभम् । त्रैलोक्यविजयं नाम दिव्यं भोगापवर्गदम् ।।१।।**
**मूलमन्त्रमयं मुख्यं अष्टसिद्धिप्रदायकम् । सर्वैश्वर्यप्रदं लोके सर्वागमविनिश्चितम् ।।२।।**
**पठतां शृण्वतां देवि महापातकनाशनम् । महोत्पातप्रशमनं मूलविद्यामनोहरम् ।।३।।**
**विरूपाक्षः शिवो देवि विष्णुर्नारायणो बली । ब्रह्मा पितामहो लोके जिष्णुर्गीर्वाणनायकः ।।४।।**
**महोनिधिः सदा सूर्यः तारकाधिपतिः शशी । रत्नाकरश्च जलधिः शेषश्चानन्ततांगतः ।।५।।**
**श्रीराज्ञ्याः कवचस्यास्य पठनात् धारणात्सदा । बहुनोक्तेन देवेशि कवचस्यास्य धारणात् ।।६।।**
**मर्त्योऽप्यमरतां याति राज्ञीपदमवाप्नुयात् । ऋषिरस्य महादेवि ब्रह्मा छन्दः समीरितम् ।।७।।**
**गायत्री देवता राज्ञी माया बीजमुदाहृतम् । शरत् शक्तिः कीलकं च कामरजः सुरेश्वरि ।।८।।**

भोगापवर्गसिद्ध्यर्थे विनियोग इति स्मृतः।।

ओं अस्य श्रीमहाराज्ञी त्रैलोक्यविजयकवचस्य। ब्रह्मा ऋषिः। गायत्री छन्दः। श्रीमहाराज्ञी देवता। ह्रीं बीजं। सौः शक्तिः। क्लीं कीलकं। भोगापवर्गसिद्ध्यर्थे जपे विनियोगः।

**ब्रह्मणे ऋषये नमः** (शिरसि)। **गायत्री छन्दसे नमः** (मुखे)। **महाराज्ञी देवतायै नमः** (हृदि)। **ह्रीं बीजाय नमः** (नाभौ)। **सौः शक्तये नमः** (गुह्ये)। **क्लीं कीलकाय नमः** (पादयोः)। **विनियोगाय** नमः सर्वांगे। ओम् ह्रामिति षट् दीर्घयुक्तेन मायाबीजेन करादि न्यासं कृत्वा ध्यायेत् ।।

### ध्यानम्

उद्यद्दिवाकरसहस्त्ररुचिं त्रिनेत्राम् सिंहासनोपरिगतां उरगोपवीतीम् ।
खड्गाम्बुजाढ्यकलशामृतपात्रहस्तां राज्ञीं भजामि विकसद्वदनारविन्दाम् ।।९।।
चतुर्भुजं चन्द्रकलार्धशेखरां सिंहासनस्थां भुजगोपवीतिनीम् ।
पाशांकुशाम्भोरुहखड्गधारिणीं राज्ञीं भजे चेतसि राज्यदायिनीम् ।।१०।।

पञ्चोपचारपूजा

ॐ श्रीलक्ष्मीर्मे शिरः पातु ह्रीं ललाटं सरस्वती।
श्रीं बाला पातु मे नेत्रे त्र्यक्षा पातु श्रुती मम ।।११।।
रां दुर्गा पातु मे नासां क्लीं मुखं पातु शारिका ।
सौः कण्ठं वैखरी पातु भं भुजौ पातु मे शिवा ।।१२।।
गं हस्तौ पातु मे काली वं वक्षः त्रिपुरावतु ।
षडश्रं पातु मे मध्यं वृत्तं पार्श्वौ सदाऽवतु ।।१३।।
त्यै पृष्ठं पातु मे ब्राह्मी रां नाभिं पातु वैष्णवी ।
ज्यै गुदं पातु रुद्राणी ह्रीं कटिं मेऽपराजिता ।।१४।।
खां कौमारी पातु जानु ह्रां जंघेऽवतु चण्डिका।
स्वाहा गुल्फौ च वाराही ओं पादौ नारसिंहिका।।१५।।
विस्मारितं च यत् स्थानं यत् स्थानं नामवर्जितम्।
तत् सर्वं पातु मे राज्ञी मूलविद्यामयी परा ।।१६।।
वासुकिः पूर्वतः पातु नीलनागोऽनलेवतात् ।
तक्षको दक्षिणे पातु नैर्ऋत्यां पद्मनागकः ।।१७।।
कार्कोटकः पश्चिमेऽव्यात् शङ्खपालस्तु वायुगे ।
कुलिकश्चोत्तरे पातु शेषः ईशानमण्डले ।।१८।।
ब्राह्मी ब्राह्ममुहूर्तेऽव्यात् दिनादौ वैष्णवी तथा ।
रुद्राणी पातु मध्याह्ने सायं पात्वपराजिता ।।१९।।
निशादौ पातु कौमारी निशीथे चण्डिकावतु ।
निशान्ते पातु वाराही सर्वदा नारसिंहिका ।।२०।।

असिताङ्गः क्षितेः पातु पयसो रुरुभैरवः ।
चण्डो मां पवनात् पातु क्रोधेशः पातु माऽनलात्।।२१।।
उन्मत्तः सोमतः पातु भीषणः सूर्यतोऽवतु ।
याजकाश्च कपालीशः व्योम्नः संहारकोऽवतु ।।२२।।
सदा समन्ततः पातु वपुर्वसुदलं मम ।
गुरवः पान्तु सर्वत्र दिगीशाः पान्तु सर्वतः।।२३।।
वृत्तत्रयं पातु नित्यं धरा गेहं सदाऽवतु ।
श्रीचक्रं पातु भीतिभ्यो योगिन्यः पान्तु सर्वतः ।।२४।।
ऊर्ध्वं चाधः सदा पातु देवः सोमेश्वरः शिवः ।
सर्वत्र सर्वदा सत्यं वपुर्भूतिश्वरोऽवतु ।।२५।।
पादादिमूर्धपर्यन्तं वपुः सर्वत्र मेऽवतु ।
शिरसः पादपर्यन्तं राज्ञी पञ्चदशाक्षरी ।।२६।।
इतीदं कवचं राज्या मन्त्रगर्भं जयावहम् ।
त्रैलोयविजयं नाम दारिद्र्यभयनाशनम् ।।२७।।
सर्वरोगहरं साक्षात् सिद्धिदं पापनाशनम् ।
महाभयहरं देवि मूलविद्यामयं वरम् ।।२८।।
परमार्थप्रदं नित्यं भोगमोक्षैककारणम् ।
यः पठेत् कवचं देवि रणे राजभये क्षणात् ।।२९।।
संग्रामेषु रिपुनू जित्वा विजयी गृहमेष्यति ।
पठनात् कवचस्यास्य राजकोपः प्रशाम्यति ।।३०।।
सूते धनं लभेत् धैर्यं सर्वसिद्धिमवाप्नुयात् ।
त्रिकालं तु पठेत् रात्रौ कवचं यो महेश्वरि ।।३१।।
तस्य राज्ञी स्वयं विद्या स्वप्नेऽभीष्टप्रदा भवेत् ।
रसैर्भूर्जे लिखेत् वर्म रवौ प्रातर्महेश्वरि ।।३२।।
चीनतन्तुभिरप्यङ्गं लाक्षया वेष्टितं तथा ।
सुवर्णगुलिकान्तःस्थं पूजयेत् यन्त्रराजवत् ।।३३।।
गुडिकीया महाविद्या राज्ञीमूर्तिरिवापरा ।
मूलविद्यामयी देवी सर्वाभीष्टफलप्रदा ।।३४।।

स्थिरस्था धनदा नित्यं कण्ठस्था वाक्प्रदायिनी।
वक्षःस्था पुत्रदा देवि कटिस्था भोगदायिनी ।।३५।।
पृष्ठस्था बलदा नित्यं कुक्षिस्था रोगनाशिनी ।
सर्वार्थसाधिनी लोके यथाभीष्टफलप्रदा ।।३६।।
गुडिकेयं शुभा राज्ञ्याः न देया यस्य कस्यचित्।
इदं कवचमीशानि मूलविद्यामयं ध्रुवम् ।।३७।।
सारस्वतप्रदं लक्ष्मी पुत्रपौत्रप्रवर्धकम् ।
आयुष्करं पुष्टिकरं श्रीकरं च यशस्करम् ।।३८।।
चतुःषष्ट्यादितन्त्राणां सारमादाय वर्णितम् ।
सायंप्रातः पठेत् देवि महाचजीनक्रमेश्वरः ।।३९।।
स साधको महादेवि राज्ञीपुत्रो भविष्यति ।
इतीदं मम सर्वस्वं त्रैलोक्यविजयाभिधम् ।
कवचं मन्त्रगर्भं तु गोपनीयं स्वयोनिवत् ।।४०।।

इति श्रीराजराजेश्वरी श्रीमहाराज्ञी कवचं समाप्तम्।

## *श्रीराजराजेश्वरी महात्रिपुरसुन्दरी अष्टोत्तरशतदिव्यनामस्तोत्रम्*

वामेचइक्षुधनुः मुदा अभयकरंदक्षंवरंकौसुमंबिभ्राणास्मितमञ्जुलाशशिधरासिंहासनेशीपरा।
श्रीवाणीकरवीजिता नतजने सांराज्यदानोद्यता संराज्ञी वरषोडशी भगवती मां पातु राजेश्वरी।।

सदाशिव उवाच

उमा भगवती भद्रा शर्वाणी विजया जया ।
वाणी सर्वगता गौरी वाराही कमलप्रिया ।।१।।
सरस्वती कला माया मातङ्गी त्रिपुरा अम्बिका ।
शाकम्भरी शिवा चण्डी कुण्डली वैष्णवी क्रिया।।२।।
श्रीचाद्री श्रीः मधुमती गिरिजा सुभगा परा।
तारा पद्मावती हंसी पद्मनाभसहोदरी ।।३।।
अपर्णा ललिता धात्री कुमारी शिखिवाहिनी।
शाम्भवी सुमुखी मैत्री त्रिणेत्री विश्वरूपिणी ।।४।।

आर्या मृडानी ह्रींकारी क्रोधिनी सुदिनाऽजपा ।
सूक्ष्मा परापरा शोभा सर्ववर्णा हरिप्रिया ।।५।।
महालक्ष्मीः महासिद्धिः स्वधा स्वाहा मनोन्मणी ।
त्रिलोकपालिनी भूता त्रिसन्ध्या त्रिपुरान्तकी ।।६।।
षोडशी च महाराज्ञी ब्राह्मी त्रैलोक्यमोहिनी ।
पुष्कराक्षी लता गौरी त्रिवर्णा त्रिस्वरा अमृता ।।७।।
त्रिगुणा निर्गुणा सत्या निर्विकल्पा निरञ्जनी ।
ज्वालिनी मालिनी चार्या क्रव्यादोपनिबर्हिणी ।।८।।
कामाक्षी कामिनी कान्तिः कामदा कलहंसिनी ।
कल्पवल्ली च कुटिला प्राज्ञा प्रासादवासदा ।।९।।
वागीश्वरी विशालाक्षी सर्वविद्या सुमङ्गला ।
काली कामेश्वरी चण्डी भैरवी भुवनेश्ववरी ।।१०।।
नित्यानित्यान्तविभवा सत्यज्ञाना तमोपहा ।
माहेश्वरी प्रियकरी महात्रिपुरसुन्दरी ।।११।।
राजराजेश्वरी भद्रा श्रीमत्सिंहासनेश्वरी ।
नाम्नां अष्टोत्तरशतं सर्वसिद्धिप्रदं शुभम् ।।१२।।
यः त्रिसन्ध्यं पठेत् विद्वान् स्तोत्रं शीघ्रफलप्रदम् ।
तस्य पुण्यफलं वक्ष्ये श्रृणु मे प्राणवल्लभे ।।१३।।
कामार्थी लभते कामान् धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्याः सर्वसिद्धिं च सर्वदा ।।१४।।
विद्याप्रदं कीर्तिकरं सुकवित्वप्रदायकम् ।
सर्वसम्पत्प्रदं सर्वसौख्यदं सर्वमङ्गलम् ।।१५।।
सर्वाभीष्टप्रदं चैव दीर्घायुष्यप्रदं भवेत् ।
आयुरारोग्यसन्तोष सुतसम्पत्त्विवर्धनम् ।।१६।।
सिद्धासारस्वतं नाम साम्राज्ञीप्रीतिदायकम् ।
सर्वसांराज्यदं नाम महाराज्ञीशतं शुभम् ।।१७।।

श्रीराजराजेश्वरीमहात्रिपुरसुन्दरी अष्टोत्तरशतदिव्यनास्तोत्रं सम्पूर्णम्।

## *श्रीराजराजेश्वरीविजयस्तवः*

कल्पान्तोदितचण्डभानुविलसद्देहप्रभामण्डिता
कालाम्बोदसमानकुन्तलभरा कारुण्यवारांनिधिः ।
काद्यर्णाङ्कितमन्त्रराजविलसत्कूटत्रयोपासिता
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।१।।

एतत्प्राभवशालिनीतिनिगमैः अद्याप्यनालोकिता
हेमाम्भोजमुखी चलत्कुवलयप्रस्पर्धमानेक्षणा ।
एणाङ्कांशसमानफालफलके प्रोल्लासिकस्तूरिका
श्रीचक्राधिनिवसिनी विजयते श्रीराजराजेश्वरी ।।२।।

ईषत्फुल्लकदम्बकुड्मलमहालावण्यगर्वापह-
स्निग्धस्वच्छसुदान्तकान्तिविलसन्मन्दस्मितालंकृता ।
ईशित्वाद्यखिलेष्टसिद्धिफलदा भक्त्या नतानां सदा
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।३।।

लक्ष्यालक्ष्यवलग्नदेशविलसद्रोमावलीवल्लरी
वृत्तस्निग्धफलद्वयभ्रमकरोत्तुङ्गस्तनी सुन्दरी ।
रक्ताशोकसुमप्रपाटलदुकूलाच्छादितांगी सदा
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।४।।

ह्रींकारी सुरवाहिनीजलगभीरावर्तनाभिः घन-
श्रोणीमण्डलभारमन्दगमना काञ्चीकलापोज्वला ।
शुण्डादण्डसुवर्णवर्णकदलीकाण्डोपमोरुद्वयी
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।५।।

हस्तप्रोज्वलदिक्षुकार्मुकलसत्पुष्पेषु पाशांकुशा
हाद्यर्णांकितमन्त्रराजनिलया हारादिभिः भूषिता ।
हस्तप्रान्तरणत्सुवर्णलया हर्यक्षसम्पूजिता
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।६।।

संरक्ताम्बुजपादयुग्मविलसन्मञ्जुक्वणन्नूपुरा
संसारार्णवतारणैकतरणिः लावण्यवारांनिधिः ।
लीलालोलतमं शुकं मधुरया संलापयन्ती गिरा
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।७।।

कल्याणी करुणावसाद्रह्रदया कल्यणसन्दायिनी
काद्यर्णाङ्कितमन्त्रमक्षिततनुः तन्वी तमोनाशिनी ।
कामेशाङ्गविहारिणी कलगिरां आवासभूमिः शिवा
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।८।।

हन्तुं दानवपुङ्गवं रणभुवि प्रोच्चण्डभण्टाभिधं
हर्यश्वाद्यमरार्थिता भगवती दिव्या तनूमाश्रिता ।
श्रीमाता ललितेत्यचिन्त्यविभवैः नाम्नां सहस्रैस्तुता
श्रीचक्राधिनिवासिन विजयते श्रीराजराजेश्वरी ।।९।।

लक्ष्मीवागगजादिभिः बहुविधैः रूपैः स्तुतापि स्वयं
नीरूपा गुणवर्जिता त्रिजगतां माता च चिद्रूपिणी ।
भक्तानुग्रहकारणाय ललितं रूपं समासादिता
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।१०।।

ह्रींकारैकपरायणार्त-जनतासंरक्षणे दीक्षिता
हार्दं सन्तमसं व्यपोहितुमलंभूष्णुः हरप्रेयसी ।
हन्यात् अप्रकटाघसंधालने दक्षा च दाक्षायणी
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।११।।

सर्वानन्दमयी समस्तजगतामानन्दसन्दायिनी
सर्वोत्तुङ्गसुवर्णशैलनिलया सा सारसाक्षी सती ।
सर्वैः योगिचयैः सदैव विचिता सांराज्यदानक्षमा
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।१२।।

कन्यारूपधरा गलाब्जविलसत्मुक्तालतालंकृता
कादिक्षान्तमनुप्रविष्टह्रदया कल्याणशीलान्विता ।
कल्पान्तोत्कटताण्डवप्रमुदिता श्रीकामजित्साक्षिणी
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।१३।।

लक्ष्म्या भक्तिरसाद्रहृत्सरसिजे सद्भिः सदाराधिता
सान्द्रानन्दमयी सुधाकरकलाखण्डोज्वलन्मौलिका ।
शर्वाणी शरणागतार्तिशमनी सच्चिन्मयी सर्वदा
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।१४।।

ह्रींकारत्रयसंपुटातिमहितश्रीमन्त्रसम्पूजिता
होत्री चन्द्रसमीरणाग्निजलभूभास्वन्नभोरूपिणी ।
हंसः सोहमिति प्रकृष्टधिषणैः आराधिता योगिभिः
श्रीचक्राधिनिवासिनी विजयते श्रीराजराजेश्वरी ।।१५।।

श्रींकाराम्बुजहंसिका श्रितजनक्षेमङ्करी शङ्करी
शृङ्गारैकरसाकरस्य मदनस्योज्जीविकावल्लरी ।
श्रीकामेशरहः सखी च महति श्रीमद्गुहाराधिता
श्रीचक्राधिनिवासिनि विजयते श्रीराजराजेश्वरी ।।१६।।

श्रीराजराजेश्वरीविजयस्तवः सम्पूर्णः

## *श्रीराजराजेश्वरीबिन्दुतर्पणस्तवः*

कल्याणयुतपूर्णचन्द्रवदनां प्राणेश्वरानन्दिनीं
पूर्णां पूर्णतरां परेशमहिषीं पूर्णाऽमृतास्वादिनीम् ।
सम्पूर्णां परमोत्तमामृतकलां विद्यावतीं भारतीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।१।।

एकारादिसमस्तवर्णविविधाकारैकचिद्रूपिणीं
चैतन्यात्मकचक्रराजनिलयां चन्द्रान्तसञ्चारिणीम् ।
भावाभावविभाविनीं भवपरां सद्भक्तिचिन्तामणिं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।२।।

ईहाधिक्परयोगिवृन्दविनुतां स्वानंन्दभूतां परां
पश्यन्तीं तनुमध्यमां विलसिनीं श्रीवैखरीरूपिणीम् ।
आत्मानात्मविचारिणीं विवरगां विद्यां त्रिबीजात्मिकां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।३।।

लक्ष्यालक्ष्यनिरीक्षणां निरुपमां रुद्राक्षमालाधरां
त्र्यक्षार्धाकृतिं दक्षवंशकलिकां दीर्घाक्षि दीर्घस्वराम् ।
भद्रां भद्रवरप्रदां भगवतीं भद्रेश्वरीं मुद्रिणीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।४।।

ह्रींबीजागतनादबिन्दुभरितां ओंकारनादात्मिकां
ब्रह्मानन्दघनोदरीं गुणवतीं ज्ञानेश्वरीं ज्ञानदाम् ।
ज्ञानेच्छाज्ञानकृतिनीं महीं गतवतीं गन्धर्वसंसेवितां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।५।।

हर्षोन्मत्तसुवर्णपात्रभरितां पीनोन्नताघूर्णितां
हुङ्कारप्रियशब्दजालनिरतां सारस्वतोल्लासिनीम् ।
सारासारविचारचारुचतुरां वर्णाश्रमाकारिणीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।६।।

सर्वेशाङ्कविहारिणीं सकरुणां सन्नादिनीं नादिनीं
संयोगप्रियरूपिणीं प्रियवतीं प्रीतां प्रतापोन्नताम् ।
सर्वान्तर्गतिशालिनीं शिवतनूसन्दीपिनीं दीपिनीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।७।।

कर्माकर्मविवर्जितां कुलवतीं कर्मप्रदां कौलिनीं
कारुण्याम्बुधिसर्वकामनिरतां सिन्धुप्रियोल्लासिनीम् ।
पञ्चब्रह्मसनातनासनगतां गेयां सुयोगात्मिकां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।८।।

हस्त्युत्कुम्भनिभस्तनद्वितयतः पीनोन्नतादानतां
हाराद्याभरणां सुरेन्द्रविनुतां शृङ्गारपीठालयाम् ।
योन्याकारकयोनिमुद्रितकरां नित्यां नवार्णात्मिकां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।९।।

लक्ष्मीलक्षणपूर्णभक्तवरदां लीलाविनोदस्थितां
लाक्षारञ्जितपादपद्मयुगलां ब्रह्मेन्द्रसंसेविताम् ।
लोकालोकितलोककामजननीं लोकाश्रयाङ्कस्थितां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।१०।।

ह्रींकाराश्रितशङ्करप्रियतनुं श्रीयोगपीठेश्वरीं
माङ्गल्यायुतपङ्कजाभनयनां माङ्गल्यसिद्धिप्रदाम् ।
कारुण्येन विशेषिताङ्गसुमहालावण्यसंशोभितां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।११।।

सर्वज्ञानकलावतीं सकरुणां सर्वेश्वरीं सर्वदां
सत्यां सर्वमयीं सहस्रदलजां सत्वार्णवोपस्थिताम् ।
सङ्गासङ्गविवर्जितां सुखकरीं बालार्ककोटिप्रभां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।१२।।

कादिक्षान्तसुवर्णबिन्दुसुतनूं सर्वाङ्गसंशोभितां
नानावर्णविचित्रचित्रवसनां चातुर्यचिन्तामणिम् ।
चित्रानन्दविधायिनीं सुचपलां कूटत्रयाकारिणीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।१३।।

लक्ष्मीशानसुरेन्द्रमुख्यमकुटाद्यष्टाङ्गपीठाश्रितां
सूर्येन्दु अग्निमयैकपीठनिलयां नित्यां त्रिकोणेश्वरीम् ।
गोप्त्रीं गर्वविवर्जितां गगनगां गङ्गागणेशप्रियां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।१४।।

ह्रींकूटत्रयरूपिणीं समयिनां संसारिणीं हंसिनीं
वामाचारपरायणीं सुकुलजां बीजावतीं मुद्रिणीम् ।
कामाक्षीं करुणार्द्रचित्तसहितां श्रीं श्रीं त्रिमूर्त्यम्बिकां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ।।१५।।

श्रीविद्या शिवकेशवादिजननी या वै जगन्मोहिनी
या ब्रह्मादिपिपीलिकान्तजगदानन्दैकसन्दायिनी ।
या पञ्चप्रणवद्विरेफजननी या चित्कलामालिनी
सा पायात् परदेवता भगवती श्रीराजराजेश्वरी ।।१६।।

श्रीराजराजेश्वरीबिन्दुतर्पणस्तवः।

## *मीनाक्षीपञ्चरत्नम्*

उद्यभानुसस्त्रकोटिसदृशा के यूरहारोज्ज्वलां
बिम्बोष्ठीं स्मितदन्तपङ्क्तिरुचिरां पीताम्बरालंकृताम् ।
विष्णुब्रह्मसुरेन्द्रसेवितपदां तत्त्वस्वरूपां शिवां
मीनाक्षीं प्रणतोऽस्मि संततमहं कारुण्यवारांनिधिम् ।।१।।

मुक्ताहारलसत्किरीटरुचिरां पूर्णेन्दुवक्त्रप्रभां
शिञ्चन्नूपुरकिंकिणीमणिधरां पद्मप्रभाभासुराम् ।
सर्वाभीष्ठफलप्रदां गिरिसुतां वाणीरमासेवितां
मीनाक्षीं प्रणतोऽस्मि संततभहं कारुण्यवारांनिधिम् ।।२।।

श्रीविद्यां शिववामभागनिलयां ह्रींकारमन्त्रोज्ज्वलां
श्रीचक्राङ्कितबिन्दुमध्यवसतिं श्रीमत्सभानायकीम् ।
श्रीमत्षण्मुखविघ्नराजजननीं श्रीमज्जगन्मोहिनीं
सीनाक्षीं प्रणतोऽस्मि संततमहं कारुण्यवारांनिधिम् ।।३।।

श्रीमत्सुन्दरनायकीं भयहरां ज्ञानप्रदां निर्मलां
श्यामाभां कमलासनार्चितपदां नारायणस्यानुजाम् ।
वीणावेणुमृदङ्गवाद्यरसिकां नानाविधाडम्बिकां
मीनाक्षीं प्रणतोऽस्मि संततभहं कारुण्यवारांनिधिम् ।।४।।

नानायोगिमुनीन्द्रहृन्निवसतीं नानार्थसिद्धिप्रदां
नानापुष्पविराजिताङ्घ्रियुगलां नारायणेनार्चिताम् ।
नादब्रह्मभयीं परात्परतरां नानार्थतत्त्वात्मिकां
मीनाक्षीं प्रणतोऽस्मि संततमंह कारुण्यवारांनिधिम् ।।५।।

।।श्रीकाञ्चीनगरी उपनिषदब्रमेन्द्र पीठाधीशः श्री श्री इष्ठसिद्धेन्द्र सरस्वती शिव्यश्री कृष्णानेन्द्र सरस्वती शिष्य श्री पूर्णानेन्द्र सरस्वती शिष्य श्री ज्ञानानन्देन्द्र सरस्वती विरचित श्रीविद्यामहार्णवे स्तोत्र प्रकरणम् सम्पूर्णम्।।

।।श्रीगुरुभ्यो नमः।।

''परिरक्षणीय परिवेदक परमार्थरत्न''

# श्रीविद्यामहार्णवः

(सचित्र-सम्पूर्ण-सपर्यापद्धति ग्रन्थः)

श्रीप्रकाशानन्दनाथ
श्री प्रकाशाम्बा लहरी
चिन्तामणिः

क्रियाशक्तिः

## तृतीयो भागः

## १२. अन्य देवता आवरण-प्रकरणम्

दाक्षिणात्य
परमहंस-परिव्राजक
श्री श्री श्री ज्ञानानन्देन्द्रसरस्वतीयति-विरचितः

वाराणसी, चेन्नै, हैदराबाद एवं बेंगलूर

# १२. द्वादशो-मुद्राकल्पतरङ्गः


१३३ ग्रासमुद्रा –उदग्राणां विरलानां वामकरां गुलीनां ईषदाकुंचने ग्रासः।


१३४ प्राणमुद्रा – मध्यमातर्जन्यंगुष्ठयोगे प्राणमुद्रा।


१३५ अपान मुद्रा – मध्यमानामांगुष्ठसंबन्धे।


१३६ व्यानमुद्रा – कनिष्ठानामांगुष्ठसंबन्धे व्यानमुद्रा।


१३७ उदान मुद्रा – तर्जन्यनाममांगुष्ठ उदानमद्रा।


१३८ समान मुद्रा – सर्वांगुलसंश्लेषे समान मुद्रा।।


१३९ विततम् – विततम् संहतौ हस्तावुत्ताना वायतांगुली।


१४० द्विमुखम् – संमुखं सक्तयोः पाण्योः कनिष्ठाद्वययोगतः। शेषांगुलीनां वैकल्ये द्विमुखमित्युच्यते।।


१४१संपुटम्– संपुट पद्माकाणाभौ करौ अन्योन्य संहतौ।


१४२ बिन्दुः – तर्जन्यंगुष्ठसंयोगादग्रतो बिन्दु मुद्रिका।


१४३ विस्मयमुद्राः– दक्षिणा निबिडा मुष्टिर्नासि कार्पित तर्जनी। मुद्रा विस्मय संज्ञा स्यात् विस्मयावेश कारिणी।।


१४५ कालकर्णिकाः– अंगुष्ठावन्नतौ कृत्वा मुष्ट्योः संलग्नयोर्द्वयोः। तावेवाभिमुखौ कुर्यात् मुद्रैषा कालकर्णिका।।



श्री गुरुमण्डल पूजा मण्डप

Smt. RAJAMMAL PRAKASAMBA (GURU)  SRI KAMAKODI SHASTRI SRIVIDHYA SCHOLAR

श्रीगणेशाय नमः श्रीसरस्वत्यै नमः श्रीगुरुभ्यो नमः

# श्रीविद्यामहार्णवः

## श्रीप्रकाशाम्बा श्रीप्रकाशानन्दनाथ लहरी

## चिन्तामणिः

## क्रियाशक्तिः

## तृतीयो भागः

## १२. अन्यदेवता आवरण-प्रकरणम्

### आवरण सपर्या खण्डः

### श्रीसुब्रह्मण्याराधनक्रमः

[ श्रीसुब्रह्मण्यम आवरण पूजा श्रीदेवी के नवावरण पूजा होने के बाद यह पूजा करना अनिवार्य है। पूर्व पूजा तो देवी नवावरण पूजा में ही हो चुकी है, अतः उन्हें पुनः करने की आवश्यकता नही है ]

श्रीदेवीं श्रीक्रमोक्तप्रकारेण यथाविधि सावरणामाराध्य ततः बिन्दु-त्रिकोण-षट्कोण-षड्दल-द्वादशदल-त्रिवलय-भूपुरत्रयात्मके यन्त्रे श्रीसुब्रह्मण्यावरणपूजां कुर्यात्।

**अथाहं बैन्दवे चक्रे सत्यसिंहासने शुभे। समासीनं गुहं वन्दे परं ब्रह्मण्यसंज्ञकम्।।**

इति पुष्पाञ्जलिं दत्वा।

**बिन्दौ मूलेन। ब्रह्मण्यश्रीपादुकां पूजयामि तर्पयामि नमः।** इति दशवारं संतर्प्य।

अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च षड्ङ्गार्चनम्—

**ॐ ह्रीं श्रीं ऐं क्लीं सौः। ब्रं हृदयाय नमः। हृदयशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः हं शिरसे स्वाहा। शिरः शक्तिश्रीपाश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः ण्यां शिखायै वषट्। शिखाशक्तिश्रीपादुकां पूजयामि नमः।**

ॐ ऐं ह्रीं श्रीं क्लीं सौः यं कवचाय हुं। कवचशक्तिश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः नं नेत्रत्रयाय वौषट्। नेत्रशक्तिश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः मं अस्त्राय फट्। अस्त्रशक्तिश्रीपादुकां पूजयामि नमः।

गुरुमण्डलार्चनं त्रिरेखासु—

ॐ ऐं ह्रीं श्रीं क्लीं सौः दिव्यसिद्धमानवौघेभ्यो नमः। इति पुष्पाञ्जलिं दत्वा।

दिव्यौघः। प्रथमरेखायां—

ॐ ऐं ह्रीं श्रीं क्लीं सौः दक्षिणामूर्तिश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः ब्रह्मश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः सनातनश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः सनत्कुमारश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः नारायणश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः सनकश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः सनन्दनश्रीपादुकां पूजयामि नमः।

सिद्धौघः। द्वितीयरेखायां—

ॐ ऐं ह्रीं श्रीं क्लीं सौः कश्यपश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः विश्वामित्रश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः वसिष्ठश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः ऋभुश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः अत्रिश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः गौतमश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः शुकश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः निदाघश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः भरद्वाजश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः जमदग्निश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः अगस्त्यश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः दत्तात्रेयश्रीपादुकां पूजयामि नमः।

मानवौघः। तृतीयरेखायां—

ॐ ऐं ह्रीं श्रीं क्लीं सौः गोरक्षानन्दनाथश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः भोगानन्दनाथश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः मलयाचलानन्दनाथश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः परमेष्ठिगुरुश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः मत्स्यानन्दनाथश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः कल्हाटानन्दनाथश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः मध्यानन्दनाथश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः परमगुरुश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः कोङ्कणानन्दनाथश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः वीरेन्द्रानन्दनाथश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः गिरानन्दनाथश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः स्वगुरुश्रीपादुकां पूजयामि नमः।

गन्ध-पुष्प-धीप-दीप-नैवेद्य-ताम्बूल-नीराजनाद्युपचारान् कृत्वा।

## आवरणपूजा

सच्चिदानन्द सर्वज्ञ सुब्रह्मण्य शिवात्मक। अनुज्ञां देहि मे स्वामिन् परिवारार्चनाय ते।।

इत्यनुज्ञां लब्ध्वा।

### प्रथमावरणम् (भूपुरत्रयं)

ॐ ह्रीं श्रीं ऐं क्लीं सौः। हं दिक्चक्राय नमः।

इति पुष्पाञ्जलिं दत्वा।

प्रथमरेखायाम्—

ॐ ऐं ह्रीं श्रीं क्लीं सौः अणिमासिद्धिश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः गरिमासिद्धिश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः प्राप्तिसिद्धिश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः ईशित्वसिद्धिश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः महिमासिद्धिश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः लघिमासिद्धिश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः प्राकाम्यसिद्धिश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः वशित्वसिद्धिश्रीपादुकां पूजयामि नमः।

द्वितीयरेखायाम्—

ॐ ऐं ह्रीं श्रीं क्लीं सौः विवेकश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः दमश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः श्रद्धाश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः श्रवणश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः वैराग्यश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः उपरतिश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः समाधानश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः मननश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः शमश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः तितिक्षाश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः मुमुक्षुताश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः निदिध्यासनश्रीपादुकां पूजयामि नमः।

तृतीयरेखायाम्—

ॐ ऐं ह्रीं श्रीं क्लीं सौः वीराबाहुश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः वीरमहेष्द्रश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः वीराक्षश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः वीरमार्तण्डश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः वीरकेसरिश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः वीरपुरन्दरश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः वीरान्तकश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः वीरमाहेन्द्रश्रीपादुकां पूजयामि नमः।
ॐ ऐं ह्रीं श्रीं क्लीं सौः वीरधीरश्रीपादुकां पूजयामि नमः।

**ॐ ऐं ह्रीं श्रीं क्लीं सौः दिक्चक्राधिष्ठितचिदग्निस्वरूपापरिच्छिन्नपरब्रह्मश्रीपादुकां पूजयामि नमः।**

मूलेन त्रिः संतर्प्य गन्धाद्युपक्षारान् कृत्वा।

**ॐ ऐं ह्रीं श्रीं क्लीं सौः अभीष्टसिद्धिं मे देहि शरणागतवत्सल**
**भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ।।**

इति सामान्यार्घ्यं देवस्य वामहस्ते समर्प्य।

**अनेन प्रथमावणार्चनेन भगवान् सर्वदेवात्मकः श्रीसुब्रह्मण्यः प्रीयताम्।** योनिमुद्रया प्रणमेत्।

**द्वितीयावरणम् (वृत्तत्रयं)**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः सं रं तं गुणचक्राय नमः।** इति पुष्पाञ्जलिं दत्वा।

प्रथमवलये—

**ॐ ऐं ह्रीं श्रीं क्लीं सौः सत्वगुणश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः तमोगुणश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः रजोगुणश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः मायाश्रीपादुकां पूजयामि नमः।**

द्वितीयवलये—

**ॐ ऐं ह्रीं श्रीं क्लीं सौः परावाग्देवताश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः मध्यमावाग्देवताश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः पश्यन्तीवाग्देवताश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः वैखरीवाग्देवताश्रीपादुकां पूजयामि नमः।**

तृतीयरेखायां—

**ॐ ऐं ह्रीं श्रीं क्लीं सौः भूतपञ्चकश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः ज्ञानेन्द्रियपञ्चकश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः गुणपञ्चकश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः कर्मेन्द्रियपञ्चकश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः सं रं तं गुणचक्राधिष्ठित गुणातीतस्वरूपनिस्त्रैगुण्यपरब्रह्मश्रीपादुकां पूजयामि नमः।**

मूलेन त्रिः संतर्प्य गन्धाद्युपचारान कृत्वा

**ॐ ऐं ह्रीं श्रीं क्लीं सौः अभीष्टसिद्धिं मे देहि शरणागतवत्सल। भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्।।**

इति सामान्यार्घ्यं देवस्य वामहस्ते समर्प्य। अनेन द्वितीयावरणार्चनेन भगवान् + प्रीयताम्। योनिमुद्रया प्रणमेत्।

## तृतीयावरणम् (द्वादशदलकमलं)

**ॐ ऐं ह्रीं श्रीं क्लीं सौः कं कालचक्राय नमः।** इति पुष्पाञ्जलिं दत्वा।

**ॐ ऐं ह्रीं श्रीं क्लीं सौः कलाश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः मुहूर्तश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः मासश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः संवत्सरश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः काष्ठाश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः दिवसश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः ऋतुश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः युगश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः घटिकाश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः पक्षश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः अयनश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः कालश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः कालचक्राधिष्ठितकालकालस्वरूप नित्यपरब्रह्म श्रीपादुकां पूजयामि नमः।**

मूलेन त्रिः संतर्प्य गन्धाद्युपचारान् कृत्वा

**ॐ ऐं ह्रीं श्रीं क्लीं सौः अभीष्टसिद्धिं मे देहि शरणागतवत्सल। भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम्।।**

सामान्यार्घ्यं देवस्य वामहस्ते समर्प्यं। अनेन तृतीयाचरणार्चनेन भगवान् + प्रीयताम्। योनिमुद्रया प्रणमेत्।

## तुरीयावरणम् (षड्दळपद्मं)

ॐ ऐं ह्रीं श्रीं क्लीं सौः सं सर्वज्ञचक्राय नमः। इति पुष्पाञ्जलिं दत्वा।

ॐ ऐं ह्रीं श्रीं क्लीं सौः सर्वज्ञशक्तिश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः नित्यमलुप्तशक्तिश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः भूलोकश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः सूर्यमण्डलश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः नित्यतृप्तशक्तिश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः स्वतन्त्रशक्तिश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः अग्निमण्डलश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः स्वर्गश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः अनादिबोधशक्तिश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः अनन्तबोधशक्तिश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः अन्तरिक्षश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः सोममण्डलश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः सं सर्वज्ञचक्राधिष्ठित भूमास्वरूप सर्व से ऐश्वर्यप्रदपरब्रह्मश्रीपादुकां पूजयामि नमः।

मूलेन त्रिः संतर्प्य गन्धाद्युपचारान् कृत्वा।

ॐ ऐं ह्रीं श्रीं क्लीं सौः अभीष्टसिद्धिं मे देहि शरणागतवत्सल।
भक्त्या समर्पये तुभ्यं तरीयावरणार्चनम् ।।

सामान्याघ्यं। देवस्य वमहस्ते समर्प्य। अनेन तुरेयावरणार्चने भगवान् रुद्र प्रीयताम्। योनिमुद्रया प्रणमेत्।

## पञ्चमावरणम् (षट्कोणचक्रं)

ॐ ऐं ह्रीं श्रीं क्लीं सौः ऐं बाम्भवचक्राय नमः। इति पुष्पाञ्जलिं दत्वा।

ॐ ऐं ह्रीं श्रीं क्लीं सौः प्रज्ञानं ब्रह्म। ऋग्वेदमयमहावाक्यश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः अहं ब्रह्मास्मि। यजुर्वेदमयमहावाक्यश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः तत्वमसि। सामवेदमयमहावाक्यश्रीपादुकां पूजयामि नमः।

ॐ ऐं ह्रीं श्रीं क्लीं सौः अयमात्मा ब्रह्म। अथर्ववेदमयमहावाक्यश्रीपादुकां पूजयामि नमः।

**ॐ ऐं ह्रीं श्रीं क्लीं सौः शिक्षाशास्त्रश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः कल्पशास्त्रश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः व्याकरणशास्त्रश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः छन्दःशास्त्रश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः ज्योतिषशास्त्रश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः निरुक्तशास्त्रश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः ऊँ ह्रीं नमः शिवाय। शैवदर्शनश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः ऊँ नमो नारायणाय। वैष्णवदर्शनश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः ऊँ श्रीं ह्रीं श्रीं। शाक्तदर्शनश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः ऊँ गं गणपतये नमः। गाणापत्यदर्शनश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः ऊँ ह्रीं घृणिः सूर्य आदित्यो। सौरदर्शनश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः ऊँ भं भैरवाय नमः। कापालिकदर्शनश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः परशिलापीठश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः जयन्तीपीठश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः शुद्धचित्तपीठश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः पूर्णगिरिपीठश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः पूर्णफलपीठश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः वनगिरिपीठश्रीपादुकां पूजयामि नमः।**
**ॐ ऐं ह्रीं श्रीं क्लीं सौः ऐं। वाग्भवचक्राधिष्ठितवाचामगोचरस्वरूपपरब्रह्मश्रीपादुकां पूजयामि नमः।**

मूलेन त्रिः संतर्प्य गन्धपुष्पाद्युपचारान् कृत्वा।

**ॐ ऐं ह्रीं श्रीं क्लीं सौः अभीष्टसिद्धिं मे देहि शरणागतवत्सल।**
**भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ।।**

सामान्यार्घ्यं देवस्य वामहस्ते समर्प्य। अनेन पञ्चमाचरणार्चनेन भगवान् + प्रीयताम्। योनिमुद्रया प्रणमेत्।

## षष्ठारणम् (त्रिकोणं)

**ॐ ऐं ह्रीं श्रीं क्लीं सौः क्लीं । शक्तिचक्राय नमः।** इति पुष्पाञ्जहि दत्वा।

**ॐ ऐं ह्रीं श्रीं क्लीं सौः अं । अकारात्मकइच्छाशक्तिस्वरूपवाणीसमेतब्रह्मश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः उं। उकारात्मकज्ञानशक्तिस्वरूपवैष्णवीसमेतविष्णुश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः मं । मकारात्मकक्रियाशक्तिस्वरूपरुद्राणीसमेतरुद्रश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः ॐ। ओंकारात्मकपराशक्तिस्वरूपमायाविशिष्टकारणेश्वरश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः सत्स्वरूपविद्याशक्तिश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः चित्स्वरूपविद्याशक्तिश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः आनन्दस्वरूपविद्याशक्तिश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः क्लीं शक्तिचक्राधिष्ठितविद्यास्वरूपपरब्रह्मश्रीपादुकां पूजयामि नमः।**

मूलेन त्रिः संतर्प्य। गन्धाद्युपचारान् कृत्वा।

**ॐ ऐं ह्रीं श्रीं क्लीं सौः अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।**
**भक्त्या समर्पये तुभ्यं षष्ठाख्यावरणार्चनम् ।।**

सामान्यार्घ्यं देवस्य वामहस्ते समर्प्य। अनेन षष्ठावरणार्चनेन भगवान् ह प्रीयताम्। योनिमुद्रया प्रणमेत्।

### सप्तमावरणम् (बिन्दुः)

**ॐ ऐं ह्रीं श्रीं क्लीं सौः परब्रह्मचक्राय नमः।** इति पुष्पाञ्जलिं दत्वा।

**ॐ ऐं ह्रीं श्रीं क्लीं सौः मूलं। ब्रह्मण्यश्रीपादुकां पूजयामि नमः।**

**ॐ ऐं ह्रीं श्रीं क्लीं सौः परब्रह्मचक्राधिष्ठितपरब्रह्मश्रीपादुकां पूजयामि तर्पयामि नमः।**

मूलेन त्रिः संतर्प्य। गन्धाद्युपचारान् कृत्वा।

**ॐ ऐं ह्रीं श्रीं क्लीं सौः अभीष्टसिद्धिं मे देहि शरणागतवत्सल।**
**भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम्।।**

सामान्यार्घ्यं देवस्य वामहस्ते दत्वा। अनेन सप्तमावरणार्चनेन भगवान् सर्वदेवात्मकः श्रीसुब्रह्मण्यः प्रीयताम्। योनिमुद्रया प्रणमेत्।

ततः श्रीसुब्रह्मण्यसिद्धनामाष्टोत्तरशतनामानि संपूज्य।

धूप-दीप-नैवेद्य-ताम्बूल-नीराजन-मन्त्रपुष्पाणि समर्पयेत्।

।।इति श्रीसुब्रह्मण्याराधनक्रमः संपूर्णः।।

## श्रीसुब्रह्मण्यसिद्धनामाष्टोत्तरशतनामावलिः

ॐ ह्रीं सुब्रह्मण्याय नमः ।
ॐ ह्रीं ज्ञानशक्तये नमः ।
ॐ ह्रीं अचिन्त्याय नमः ।
ॐ ह्रीं दहरालयाय नमः ।
ॐ ह्रीं चिच्छिवाय नमः ।
ॐ ह्रीं चिद्भवाय नमः ।
ॐ ह्रीं चिदाकारमहाद्वीपमध्यदेशसदालयाय नमः।
ॐ ह्रीं चिदब्धिमथनोत्पन्नचित्सारमणिमण्डलाय नमः।
ॐ ह्रीं चिदानन्दमहासिन्धुमध्यरत्नशिखामणये नमः।
ॐ ह्रीं विज्ञानकोशविलसदानन्दामृतमण्यलाय नमः। (१०)
ॐ ह्रीं वाचामगोचरानन्तशुद्धचैतन्यविग्रहाय नमः।
ॐ ह्रीं मूलकन्दस्थचिद्देशमहाताण्डवपण्डिताय नमः।
ॐ ह्रीं षट्कोणमार्गविलसत्परमण्डलमण्डिताय नमः।
ॐ ह्रीं द्वादशारमहापद्मस्थितचिद्व्योम भासुराय नमः।
ॐ ह्रीं त्रिकोणाख्यमहापीठस्थित चिद्बिन्दुनायकाय नमः।
ॐ ह्रीं बिन्दुमण्डलमध्यस्थ चिद्विलासप्रकाशकाय नमः।
ॐ ह्रीं षट्कोणमन्दिरोद्भासिमध्यस्तम्भशिरोमणये नमः।
ॐ ह्रीं प्रथमाक्षरनिर्दिष्टपरमार्थार्थविग्रहाय नमः।
ॐ ह्रीं अकारादिक्षकारान्तमातृकाक्षर संगताय नमः।
ॐ ह्रीं अकाराख्यप्रकाशात्ममहालक्ष्यार्थ विग्रहाय नमः। (२०)
ॐ ह्रीं हकाराख्यविमर्शात्ममहालक्ष्यार्थ विग्रहाय नमः।
ॐ ह्रीं ग्रन्थित्रयमहाभेद, चतुराय नमः।
ॐ ह्रीं सद्गुरवे नमः।
ॐ ह्रीं हृदयाम्बुजमध्यस्थविरजव्योमनायकाय नमः।
ॐ ह्रीं शान्ताद्रिनिलयाय नमः।
ॐ ह्रीं अखण्डाकारकज्ञानलक्षणाय नमः।

ॐ ह्रीं सजातीयविजातीयस्वगतभेदराहिताय नमः।
ॐ ह्रीं ब्रह्मविद्यास्वरूपहैमवतीतनूजाय नमः।
ॐ ह्रीं चिदग्निसंभूताय नमः।
ॐ ह्रीं भूमानन्दपरिपूर्णाचलविराजिताय नमः। (३०)
ॐ ह्रीं महावाक्योपदेष्ट्रे नमः।
ॐ ह्रीं शिवगुरवे नमः।
ॐ ह्रीं मूलाधारमुखोत्पन्नब्रह्मरन्ध्रचिदालयाय नमः।
ॐ ह्रीं मध्यनाडीमहामार्गस्थितमण्डलमध्यगाय नमः।
ॐ ह्रीं हंसमार्गेकनिरतज्ञानमण्डलचिद्रसाय नमः।
ॐ ह्रीं सदोदितमहाप्रज्ञाकाराय नमः।
ॐ ह्रीं सहस्त्रारकमलान्तस्थ बिन्दुकूटमहागुरवे नमः।
ॐ ह्रीं स्वात्मन्यारोपितसमस्तजगदाधाराय नमः।
ॐ ह्रीं सर्वाधिष्ठानचिन्मात्रस्थानमध्यविराजिताय नमः।
ॐ ह्रीं सर्वोपनिषदुद्घुष्टमहाकीर्तिधराय नमः।
ॐ ह्रीं स्वसाम्राज्यसुखासीनस्वयंज्योतिः स्वरूपाय नमः।
ॐ ह्रीं कार्यसहितमायाविध्वंसकाय नमः।
ॐ ह्रीं सर्ववेदान्तसिद्धान्तमहासाम्राज्यदीक्षिताय नमः।
ॐ ह्रीं सालम्बननिरालम्बवृत्तिमध्यस्थरूपकाय नमः।
ॐ ह्रीं मोक्षलक्ष्मीप्रदात्रे नमः।
ॐ ह्रीं शुद्धचैतन्यकान्तारसिद्धाय नमः।
ॐ ह्रीं भानुकूटप्रतीकाशचित्पर्वतशिखामणये नमः।
ॐ ह्रीं भावाभावकलातीतशून्यग्राममहेश्वराय नमः।
ॐ ह्रीं कल्पितपञ्चकृत्याधिपतये नमः।
ॐ ह्रीं ब्रह्मविद्यामयग्रामचिदालयमहाप्रभवे नमः। (५०)
ॐ ह्रीं प्रत्यग्भूतमहामौनगोचराय नमः।
ॐ ह्रीं शुद्धचिद्रसाय नमः।
ॐ ह्रीं हृदयग्रन्थिभेद्विद्याविशारदाय नमः।

ॐ ह्रीं कामाद्यरिषड्वर्गनाशकाय नमः।
ॐ ह्रीं सर्वज्ञत्वादिगुणमूर्तीकृतषडाननाय नमः।
ॐ ह्रीं कर्मब्रह्मस्वरूपवेदविलसितचरणाय नमः।
ॐ ह्रीं अद्वैतपरमानन्दचिद्विलासमहानिधये नमः।
ॐ ह्रीं मण्डलत्रभासकाय नमः।
ॐ ह्रीं अनेककोटिब्रह्माण्डधारिणे नमः। (६०)
ॐ ह्रीं सर्वात्मकाय नमः।
ॐ ह्रीं तत्वमस्यादि महावाक्यलक्ष्यार्थस्वरूपाय नमः।
ॐ ह्रीं अविमुक्तमहापीठस्थितचिद्रूपविग्रहाय नमः।
ॐ ह्रीं अमितानन्दबोधान्तनादान्तस्थितमण्डलाय नमः।
ॐ ह्रीं अखण्डशुद्धचैतन्यस्वरूपाय नमः।
ॐ ह्रीं आदिमध्यान्तरहितब्रह्मनन्दनिधये नमः।
ॐ ह्रीं आधारमार्ग सीमान्तवासिने नमः।
ॐ ह्रीं निस्तरङ्गसुखार्णवाय नमः।
ॐ ह्रीं अवाङ्गानसगोचराय नमः। (७०)
ॐ ह्रीं नित्यशुद्धबुद्धमुक्तसत्यस्वरूपाय नमः।
ॐ ह्रीं चिद्दीपमङ्गलज्योतिःस्वरूपाय नमः।
ॐ ह्रीं षट्चक्रनगरविभवेश्वराय नमः।
ॐ ह्रीं सकललोकैकनेत्रे नमः।
ॐ ह्रीं निष्प्रपञ्चाय नमः।
ॐ ह्रीं निराधाराय नमः।
ॐ ह्रीं सकलाधारस्वरूपाय नमः।
ॐ ह्रीं भक्तमानसरञ्जकाय नमः।
ॐ ह्रीं बाह्यानुविद्धसमाधिनिष्ठात्मगोचरवृत्तिस्वरूप देवसेना समेताय नमः।
ॐ ह्रीं आन्तरानुविद्धसमाधिनिष्ठात्मगोचरवृत्तिस्वरूपवल्लीपतये नमः। (८०)
ॐ ह्रीं अनाहतमहाचक्रस्थिताय नमः।
ॐ ह्रीं अवस्थात्रयसाक्षिणे नमः।

**ॐ ह्रीं सहस्रकोटितपनसंकाशाय नमः।**
**ॐ ह्रीं संसारमायादुःखौघभेषजाय नमः।**
**ॐ ह्रीं शुद्धचित्तस्वरूपमयूराधिष्ठानाय नमः।**
**ॐ ह्रीं चराचरस्थूलसूक्ष्मकल्पकाय नमः।**
**ॐ ह्रीं ब्रह्मादिकीटपर्यन्तव्यापकाय नमः।**
**ॐ ह्रीं समस्तलोकगीर्वाणशरण्याय नमः।**
**ॐ ह्रीं सनकादिसमायुक्तप्रज्ञानघनविग्रहाय नमः।**
**ॐ ह्रीं अनन्तवेदवेदान्तसंवेद्याय नमः। (९०)**
**ॐ ह्रीं धर्मार्थकामकैवल्यदायकाय नमः।**
**ॐ ह्रीं सकलवेदसारप्रणवलक्ष्यार्थनिजस्वरूपाय नमः।**
**ॐ ह्रीं अप्राकृतमहादिव्यपुरुषाय नमः।**
**ॐ ह्रीं अज्ञानतिमिरध्वान्तभास्कराय नमः।**
**ॐ ह्रीं अव्ययानन्दविज्ञानसुखदाय नमः।**
**ॐ ह्रीं अचिन्त्यदिव्यमहिमारञ्जिताय नमः।**
**ॐ ह्रीं परानन्दस्वरूपार्थबोधकाय नमः।**
**ॐ ह्रीं षड्म्बुरुहचक्रान्तस्फूर्तिसौदामनीप्रभाय नमः।**
**ॐ ह्रीं षड्विधैक्यानुसंधानपरहृद्व्योमसंस्थिताय नमः।**
**ॐ ह्रीं निस्त्रैगुण्यमहामार्गगामिने नमः। (१००)**
**ॐ ह्रीं नित्यपूर्णचिदाकाशस्थितचिन्मण्डलाय नमः।**
**ॐ ह्रीं कार्यकारणनिर्मुक्ताय नमः।**
**ॐ ह्रीं नादबिन्दुकलातीताय नमः।**
**ॐ ह्रीं शिवाब्धिमथनोत्पन्नानन्दपीयूषविग्रहाय नमः।**
**ॐ ह्रीं परिपूर्णपरानन्दप्रज्ञानघनलक्षणाय नमः।**
**ॐ ह्रीं अखण्डैकरसस्फूर्तिप्रवाहाश्रयाय नमः।**
**ॐ ह्रीं नामरूपविवर्जिताय नमः।**
**ॐ ह्रीं श्रीपरब्रह्मणे नमः।**

इतिश्रीमत्परमहंसपरिव्राजकाचार्यवर्य श्रीमदात्मानन्दनाथ
प्रणीतब्रह्मण्यसिद्धनामाष्टोत्तर शतनामावलिः।

# संक्षिप्त आवरण देवता पूजा

## शिवपंचाक्षरीमंत्रप्रयेगावरणयन्त्रम्




प्रथमत: मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रासादनानि पूरयित्वा ततः एतत् आवरण पूजां आरम्भेत्।

तद्यथा पीठादौ रचिते सर्वतोभद्रमंडले लिंगतोभद्रमंडले वा मंडूकादि परतत्त्वान्तपीठदेवताभ्यो नमः इति पीठदेवता संपूज्य स्वाग्रादिप्रादक्षिण्ये नव पीठशक्तिः पूजयेत्।

| | | | | |
|---|---|---|---|---|
| तद्यथा | **ॐ वामायै** | **नमः** | **ॐ बलविकरिण्यै** | **नमः** |
| | **ॐ ज्येष्ठायै** | **नमः** | **ॐ बलप्रामथिन्यै** | **नमः** |
| | **ॐ रौद्रयै** | **नमः** | **ॐ सर्वभूतदमन्यै** | **नमः** |
| | **ॐ काल्यै** | **नमः** | **ॐ मनोन्मन्यै** | **नमः** |

मध्ये इति पूजयेत्। ततः स्वर्णादि निर्मितं यंत्रम् मूर्ति वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दग्धधारां जलधारा च दत्त्वा स्वच्छवस्त्रेण संशोष्य **"ॐ नमो भगवरे सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठान्मने नमः"** इति मन्त्रेम पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठा च कृत्वा पुनर्ध्यात्वा मूलेन मूर्तिं प्रकल्प्य पाद्यादि पुष्पाक्षतैरुपचारैः संपूज्य देवज्ञया आवरणपूजां कुर्यात्। तद्यथा संविन्मयः परो देवः परामृतरसप्रियः अनुज्ञां शिव मे देहि परिवारार्चनाय मे।। इत्याज्ञां गृहीत्वा आवरणपूजां कुर्यात्

षट्कोणे ऐशान्याम् **ॐ ईशानाय नमः**

इति सर्वत्र वें **ओं तत्पुरुषाय नमः**

**ॐ अघोराय नमः**

पश्चिमे **ॐ वामदेवाय नमः**

उत्तरे **ॐ सद्योजाताय नमः**

इति पंचमूर्ताः पूजयेत् ततः पुष्पाञ्जलिं गृहीत्वा ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सल। भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्। इति पठित्वा पुष्पाञ्जलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत्। इति प्रथमावरणम्।

ततः षट्कोणाग्रेषु ऐशान्यां

**ॐ निवृत्यै नमः** **ॐ प्रतिष्ठायै नमः**

**ॐ विद्यायै नमः** **ॐ शान्त्यै नमः**

उत्तरे **ॐ शांत्यतीतायै नमः**

इति कलाः पूजयित्वा पुष्पांजलिं च दद्यात् इति द्वितीयावरणम्। ततोऽष्टदले पूज्यपूजकयोरंतरालं प्राची तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण।

**ॐ अनंताय नमः** **ॐ एकरुद्राय नमः**

**ॐ सूक्ष्माय नमः** **ॐ त्रिमूर्तये नमः**

**ॐ शिवोत्तमाय नमः** **ॐ श्रीकंठाय नमः**

**ॐ एकनेत्राय नमः** **ॐ शिखंडिने नमः**

इति विघ्नेशान् पूजयित्वा पुष्पांजलिं च दद्यात्। इति तृतीयावरणम्। ततोऽष्टदलाषूत्तग्रेरादिक्रमेण

**ॐ उमायै नमः** **ॐ गणेशाय नमः**

**ॐ चण्डेश्वराय नमः** **ॐ वृषभाय नमः**

**ॐ नंदिने नमः** **ॐ भृगारित्ये नमः**

**ॐ महाकालाय नमः** **ॐ स्कन्दाय नमः**

इति गणान्पूजयित्वा पुष्पांजलिं च दद्यात् इति गणान्पूजयित्वा पुष्पांजलिं च दद्यात् इति चतुर्थावरणम्। ततो भूपुरे पूर्वादिक्रमेण।

**ॐ लं इन्द्राय नमः** **ॐ यं यमाय नमः**

**ॐ रं अग्नये नमः** **ॐ क्षं निऋृतये नमः**

**ॐ वं वरुणाय नमः**

इति इन्द्रादिदशदिक्पालान् पूजयित्वा पुष्पांजलिं च दद्यात्। इति पंचमावरणम्। ततः पूर्वादिक्रमेण इन्द्रादिसमीपे।

**ॐ वं वज्राय नमः** **ॐ अं अंकुशाय नमः**
**ॐ शं शक्तये नमः** **ॐ गं गदायै नमः**
**ॐ दं दण्डाय नमः** **ॐ त्रिं त्रिशूलाय नमः**
**ॐ खं खड्गाय नमः** **ॐ पं पद्माय नमः**
**ॐ पां पाशाय नमः** **ॐ चं चक्राय नमः**

इत्यस्त्राणि पूजयित्वा पुष्पांजलिं च दद्यात्। इति षष्ठावरणम्।

इत्यावरणपूजां कृत्वा धूपादिनमस्कारंतं संपूज्य जपं कुर्यात् अस्य पुरश्चरणं चतुर्विंशतिलक्षात्मकं जपः। जपांते दशांशेन वा चतुर्विंशतिसहस्र मंत्रैः पायसं त्रिमधुपलाशेन होमयेत्। एवंकृतो मंत्र सिद्धोभवति। सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत् तथा च तत्त्वलक्षं जपेत्मंत्रं दीक्षितः शैववर्त्मना।

## *अष्टाक्षर शिवमंत्रप्रयोगावरणम्*



प्रथमत: मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धतिप्रकारेण पात्रासादनानि पूरयित्वा ततः एतदावरणपूजां आरभेत्।

मं मण्डूकादि कल्पात्रान्त पीठदेवताभ्यो नमः इति रचिते सर्वतोभद्रमण्डले/ लिङ्गतोभद्रमण्डले वा अर्चयेत् तद्यथा पूर्वादिक्रमेण, ततः नवपीठशक्तिः इति वदेत्।

**ॐ नं हृदयाय नमः** | **ॐ वां कवचाय हुं**

**औं मं शिरसे स्वाहा** | **ॐ मं अस्त्राय फट्**

**ॐ शिं शिखायै वषट्**

इति पंचांगांनि पूजयेत्। ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य अभीष्टसिद्धिं मे देहि—प्रथमावरणार्चनम्। इति पठित्वा पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत्। इति प्रथमावरणम्। तद्वाह्ये।

**ॐ हल्लेखायै नमः** | **ॐ कालिकायै नमः**

**ॐ गगनायै नमः** | **ॐ महोच्छुष्मायै नमः**

**ॐ रक्तायै नमः**

इति पूजयित्वा पुष्पांजलिं च दद्यात् इति द्वितीयावरणम्। ततोऽष्टदले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण।

**ॐ वृषभाय नमः** | **ॐ नंदिने नमः**

**ॐ क्षेत्रपालाय नमः** | **ॐ विघ्नेशाय नमः**

**ॐ दुर्गायै नमः** | **ॐ श्यामाय नमः**

**ॐ कार्तिकेयाय नमः** | **ॐ सेनाय नमः**

इति पूजयित्वा पुष्पांजलिं च दद्यात् इति तृतीयावरणम्।

**ॐ ब्राह्मयै नमः** | **ॐ वाराह्यै नमः**

**ॐ माहेश्वर्यैनमः** | **ॐ इन्द्राण्यै नमः**

**ॐ कौमार्यैं नमः** | **ॐ चामुण्डायै नमः**

**ॐ वैष्णव्यै नमः** | **ॐ महालक्ष्म्यै नमः**

इति पूजयित्वा पुष्पाञ्जलिं च दद्यात् चतुर्थावरणम् ततो भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयित्वा पुष्पांजलिं च दद्यात्। इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात्। अस्य पुरश्चरणं चतुर्दशलक्षं जपेत्। तत्तद्दशांशेन होमतर्पणब्राह्मण भोजनं च कुर्यात्। एवंकृतो मंत्रः सिद्धो भवति। सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत्।

## त्र्यक्षरीमृत्युयन्त्रम्



प्रथमतः मूलमन्त्रन्यासादीन् कृत्वा सर्वदेवता पद्धतिप्रकारेण पात्रासाथनानि पूरयित्वा ततः एतदावरण पूजां आरम्भेत्।

मं मण्डूकादि कल्पात्रान्त पीठदेवताभ्यो नमः इति सर्वतोभद्रमंण्डले लिंगतोभद्रमंण्डले पीठपूजां विधाय पूर्वोक्ते शिवपीठे वामादिनवपीठशक्तीः संपूजयेत्। तद्यथा पूर्वादिक्रमेण इति वदेत्।

**ॐ सां हृदयाय नमः** **ॐ सैं कवचाय हुं**

**ॐ सीं शिरसे स्वाहा** **ॐ सौं नेत्रत्रयाय वौषट्**

**ॐ सूं शिखायै वषट्** **ॐ सः अस्त्राय फट्**

इति षडंगानि पूजयेत्। ततः **"पुष्पांजलिमादाय मूलमुच्चार्य"** अभीष्टसिद्धिं मे देहि— प्रथमावरणार्चनम्। इति पठित्वा पुष्पांजलिं च दत्वा विशेषाध्यार्द्बिंदुं निक्षिप्य पूजितास्तर्पिताः संतु इति वदेत्। इति प्रथमावरणं ततो भूपुरे इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयित्वा पुष्पाञ्जलिं दद्यात्। इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतं संपूज्य जपं कुर्यात्। अस्य पुरश्चरणं लक्षत्रयं जपः।

पुरश्चरणदशांशेन दुग्धाज्यलोलितैरमृताखण्डैहोमः तत्तद्दशांशेन तर्पणमार्जब्राह्मणभोजनं च कुर्यात्। एवं कृते मंत्रः सिद्धो भवति। सिद्धे च मंत्रे मंत्री प्रयोगान् साधयेत्।

## त्रयम्बकपूजनयंत्रम्




प्रथमतः मूलमन्त्र न्यासादीन् कृत्वा सर्वदेवता आवरणदेवता पद्धति प्रकारेण पात्रसाथनानि पूरयित्वा ततः एतत् आवरण पूजां आरम्भेत्।

मं मण्डूकादि कल्पात्रान्त पीठदेवताभ्यो नमः इति सर्वतोभद्रमण्डले लिंगतोभद्रमण्डले वा मंडूकादिपरतत्त्वांतपीठदेवताः संपूज्य नवपीठशक्तीः पूजयेत्।

पूर्वादिक्रमेण ॐ वामायै नमः, ॐ ज्येष्ठायै नमः, ॐ रौद्रये नमः, ॐ काल्यै नमः, ॐ कलविकरिण्यै नमः, ॐ बलप्रमथिन्यै नमः, ॐ सर्वभूतदमन्यै नमः। मध्ये ॐ मनोन्मन्यै नमः इति पूजयेत्। देव आज्ञां गृहीत्वा आवरणपूजां कुर्यात्।

वक्ष्यमाणावरणपूजां सर्वत्र नामान्ते श्रीपादुकां पूजयामि तर्पयामि नमः इति वदेत्।

ॐ त्र्यम्बकं हृदयाय नमः

ॐ यजामहे शिरसे स्वाहा

ॐ सुगंधिं पुष्टिवर्धनम् शिखायै वषट्

ॐ ऊर्वारुकमिव बन्धनात् कवचाय हुं

ॐ मृत्योर्मुक्षीय नेत्रत्रयाय वौषट्

मामृतृतात् अस्त्राय फट् इति षडंगानि पूजयेत् ततः पुष्पांजलिं च दत्त्वा पूजितास्तर्पिताः संतु इति वदेत्। इति प्रथमावरणम्। ततोऽष्टदले पूज्यपूजकयोरंतरालं प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण।

ॐ अर्कमूर्तये नमः

ॐ इन्दुमूर्तये नमः

ॐ वसुधामूर्तये नमः

ॐ तोयमूर्तये नमः

ॐ वह्निमूर्तये नमः

ॐ वायुमूर्तये नमः

ॐ आकाशमूर्तये नमः

ॐ यजमानमूर्तये नमः

इत्यष्टौ मूर्तीः पूजयित्वा पुष्पांजलिं च दद्यात्। इति द्वितीयावरणम्। नद्बाऽष्टदले प्राचीक्रमेण।

ॐ रमायै नमः

ॐ राकायै नमः

ॐ प्रभायै नमः

ॐ ज्योत्स्नायै नमः

ॐ पूर्णायै नमः

ॐ उषायै नमः

ॐ पूरण्यै नमः

ॐ सुधायै नमः

इत्यष्टौ शक्तिः पूजयित्वा पुष्पांजलिं च दद्यात्। इति तृतीयावरणम् ततोऽष्टदले प्राचीक्रमेण।

ॐ विश्वायै नमः

ॐ विद्यायै नमः

ॐ सितायै नमः

ॐ प्रह्वायै नमः

ॐ रारायै नमः

ॐ संध्यायै नमः

ॐ शिवायै नमः

ॐ निशायै नमः

इत्युष्टौ शक्तीः पूजयित्वा पुष्पांजलिं च दद्यात् इति चतुर्थावरणम्।
तद्बाह्येऽष्टदलेषु प्राचीक्रमेण

ॐ आर्य्यायै नमः

ॐ प्रज्ञायै नमः

ॐ प्रभायै नमः

ॐ मेधायै नमः

ॐ शान्त्यै नमः

ॐ कान्त्यै नमः

ॐ धृत्यै नमः

ॐ मृत्यै नमः

इत्यष्टौ शक्तीः पूजयित्वा पुष्पांजलिं च दद्यात्। इति पंचमावरणम्। तद्बाह्येऽष्टदले प्राचीक्रमेण।

**ॐ धारायै नमः** **ॐ शांतायै नमः**
**ॐ मायायै नमः** **ॐ मोघायै नमः**
**ॐ अवन्ये नमः** **ॐ जयायै नमः**
**ॐ पद्मायै नमः** **ॐ अमलायै नमः**

इत्यष्टौ शक्तीः पूजयित्वा पुष्पांजलिं च दद्यात्। इति षष्ठावरणम्।

## सूर्य आवरणपूजा (देवीरहस्ये)

चक्रं बिन्दु, त्रिकोण, वसुकोण, सुवृत्त, अष्टदल, वृत्तत्रय धरणीसद्मपद्माश्रयं।।

षट्त्रिंशत्तत्व स्वरूपाय श्रीयोगपीठायनमः।। ऊँ ह्रां अष्टदलपद्माय नमः द्वादशदलपद्माय, सहस्त्रदलपद्माय, सप्तच्छंदोभ्यः, सप्ततुरगेभ्यः मूलं श्रीरत्नसिंहाय नमः।

**१. पद्मपत्रे।। भूपुरे लं इन्द्रादि दशदिक्पालाः।**

**२ अन्तर्द्वाः स्थान पूर्वदक्षिण पश्चिमोत्तरेषु। गं गणेश, चं चण्डवेताल, लों लोलक्ष, विकराल।**

**ॐ ऐं ह्रीं श्रीं क्लीं वसुदले पूर्वादिशात् ग्रहपात्रामृतात् सौः ज्योत्स्नादेवीदीप्ता सहित सोम, सं सूक्षासहित मंगल जयासहित बुध, जुं मद्रासहित गुरुं श्रीं विमलासहित शुक्र, शं निर्मलासहित शनि, रां विद्युता सहित राहु कं सर्वतोवकूत्रा सहित केतु।**

**५. वसुकोणे श्रीपात्रामृतात् स्ववामावृर्त्या। तपनीसहित सूर्य, तापिनीसहित दिवाकर बोधिनी सहित भानु, रोधिनीसहित भास्कर, कलिनीसहित रवि, शोषिणीसहित तत्वष्ट्र वरेण्यासहित तपन, आकर्षणी सहित धर्म,**

**६. मायासहितहंस, इति ईशाने, विश्वावती सहित ग्रहपति इति आग्नेये, हेमप्रभा सहित त्रयीतनु इति अग्रे।**

**७. जगद्ध्वनिमये मातर्घण्टायैनमः इति सपूज्य शतैर्वादयन् मूलं मुच्चार्य श्रीविस्फुरसहित सवित श्री इति द्वादशवारं शतपत्रैः केवलमभ्यर्चयेत्।।**

**८. रत्नकलशश्री, सुवर्णकमलश्री, इति परमपात्रामृतेन वामदक्षिण करकमलयोः ततः मूलेन बिन्दौ समर्चयेत्।।**

## श्री लक्ष्मीनारायण आवरणदेवताः (देवीरहस्यम्)

**यन्त्र। बिन्दु, त्रिकोण, वसुकोण, वृत्तं, वसुदलं, षोडषदलं, वृत्तत्रयं, चतरश्रं।। योगपीठपूजा। ऊँ ह्रीं मण्ड्काय, कालाग्निरुद्राय, मूलप्रकृत्यै, आधारशल्यै, कूर्माय, अनन्ताय, वराहाय, पृथिव्यै,**

सुधार्णवाय, मणिमयद्वीपाय, अष्टदिक्षु। नवरत्नखण्डेभ्यो, सुवर्णपर्वताय, नन्दनोद्यानाय, कल्पवनाय, पद्मवनाय, विचित्ररत्न खचित भूमिकायै, चिन्तामणिमण्डपाय, नवरत्नवेदिकायै रत्नसिंहासनाय, उच्चैः श्वेतच्छत्राय, पूर्वादिदिक्षु धर्म, ज्ञान वैराग्य, ऐश्वर्येभ्यो, विदिक्षु, अधर्माज्ञानावैराग्यानैश्वर्येभ्यो नमः।

संसत्वाय, रं रजसे, तं तमसे, तत्वेभ्यो, ऊँ ह्रीं न्हसौः मन्त्रवर्णभूषित कर्णिकायै, प्रकृतिमय पत्रेभ्यो, विकृतिमय केसराय, गरुडाय पञ्चाशद्वर्णविभूषित पद्मासनाय, मूलं सर्वतत्वात्मकाय श्री योगपीठायनमः।

१. बिन्दौ। महालक्ष्मी, राज्यलक्ष्मी, सिद्धलक्ष्मी।
२. त्र्यश्रे। गं गंगा, यं यमुना, सं सरस्वती।।
३. विन्दौ। शंख, चक्र, गदा, पद्म।।
४. वसुकोणे।। लक्ष्मीविष्णु, लक्ष्मीवासुदेव, लक्ष्मीदामोदर, लक्ष्मीनृसिंह, लक्ष्मीसंकर्षण, लक्ष्मीत्रिविक्रम, लक्ष्मीअनिरुद्ध, लक्ष्मोविश्वक्सेन।
५. अष्टदलेषु। महाभैरव, रुरुभैरव, चण्डभैरव, भूतेशभैरव, कालभैरव, कपालिभैरव, भीषणभैरव, श्मशानभैरव।
६. अन्तर्वृत्तत्रये वायव्यादीशान्तं। असिताङ्गभैरव, हंसकेतुभैरव, वंशीपाणि, स्वगुरु, परमगुरु, परापरगुरु, परमेष्ठिगुरु।।
७. षोडशदले। केशव, माधव, कृष्ण, गोविन्द, मधुसूदन, गदाधर, शंङ्खपाणि, चक्रपाणि, चतुर्भुज, पद्मायुध, कैटभारि, घोरदंष्ट्र, जनार्दन, वैकुण्ठ, वामन, गरुडध्वज।
८. चतुरश्रे। लंइन्द्रादि दशदिक्पालाः।
९. बाह्यद्वारचक्रेषु। वज्र, शक्ति, दण्ड, खड्ग, पाश, ध्वज, यष्टि, शूल।।

## भुवनेश्वरी आवरणदेवताः

मन्त्रं षट्कोणाष्टदलवृत्तषोडशदल भूपुरात्मकं।।

पीठदेवताः मं मंडूकादि...नमः। नवपीठशक्तीः। जया, विजया, अजिता अपराजिता, नित्या, विलासिनी, दोग्ध्रयै, अघोरा, पीठमध्ये मंगलायै नमः।

ऊँ ह्रीं सर्वशक्ति कमलासनाय नमः।

१ देव्या समीपे मध्ये हल्लेखायै। पूर्वे ऐं गगनायै, दक्षिणे रक्तायै, उत्तरे ईं करालिकायै, पश्चिमे महोच्छुष्मायै इति।।

२. षट्कोणकेसरेषु।। आग्नेय्यादि चतुर्विदिक्षु, मध्ये दिक्षु च। हृदयादि षडंगयुवतीः।।

३. षट्कोणाग्रेषु पूर्वे गायत्र्यै, ब्रह्म, नैऋते सावित्री, रुद्र, आग्नेये श्रिये, धनपतये, पश्चिमे रति, स्मराय, ईशान्यां पुष्टि गणपति, षट्कोणदक्षिणे शंखनिधि, वामे पद्मनिधि।

४. अष्टदले पूर्वादि। अनंगकुसुमा, अनंगकुसुमातुरा, अनंगदमना, अनंगमदनातुरा, भुवनपाला, नवेगा, शशिरेखा, गगनरेखा।

५. षोडशदलेषु पूर्वादिक्रमेण। कराली, विकराली, उमा, सरस्वती, श्रीः, दुर्गा, उषा, लक्ष्मी, रति, स्मृति, धृति, श्रद्धा, मेघा, मति, कांति, आर्या इति।

६. भूपुराभ्यन्तरे पूर्वादि। अनंगमदना, अनंगसदनातुरा, भुवनरेखा, भुवनपालिका, सर्वशिशिरा, अनंगवेदना, अनंगमेखला।

७. भूपुरे।। इंद्रादिदशदिक्पालान्, तेषां आयुधानि च।

## *महाराज्ञी आवरणदेवताः*

यंत्रं।। बिन्दु, त्रिकोण, षडश्र, वसुदल, वृत्तत्रय, चतुर्द्वाशोभित भूपुरम्।।

पीठदेवताः।। मंडूकाय, कालाग्निरुद्राय, मूलप्रकृतये, आधार शक्त्यै, वराहाय, कूर्माय, पृथिव्यै, सुधांबुधये, मध्ये स्वर्णद्वीपाय, कल्पवनाय, मध्ये मणिगेहाय, रत्नवेदिकायै, तन्मध्ये चिन्तामणिम तत्र श्मशानाय, धर्मज्ञानवैराग्यैश्वर्यैभ्यो, तद्वामे अधर्माज्ञानावैराग्यानैर्येभ्यो, तदुपरि रं वह्निमण्डल अर्कमण्डलाय, सों सोममण्डलाय, तं तमसे, रं रजसे, सं सत्वाय, मूलं सहस्रदलकमलाय, संविन्नालाय, प्रकृति पत्रेभ्यो, विकृतिमयकेसरेभ्यो, पंचाश द्वीजभूषितकर्णिकायै, मूलं मातृकामुच्चार्य श्री योगपीठाय नमः।।

१. भूपुरे।। ऊँ ह्रीं सर्वाशापरिपूरकचक्राय नमः
ऊँ ह्रीं गां गणेश्वर, ॐ ह्रीं भैं भीमराज, ॐ ह्रीं हौं कुमार, जुं जांगलेश्वर इति दिक्षु।।
ततः इंद्रादि दशदिक्पालान् ततः तेषां आयुधानि च।।

२. वृत्तत्रये। ॐ ह्रीं सर्वसंपत्प्रदचक्राय नमः।
श्रीगुरु, परमगुरु, परापरगुरु परमेष्ठिगुरु।।

३. वसुदले। ॐ ह्रीं सर्वार्थसाधक चक्राय नमः
पूर्वादि दिक्षु। ॐ ह्रीं वासुकि, ॐ ह्रीं नीलनाग, ॐ ह्रीं तक्षक, पद्मनाग विदिक्षु ॐ ह्रीं कर्कोटक, ॐ ह्रीं शंख ॐ ह्रीं कुलिक शेष नाग।
वसुदले वामावर्तेन, असितांग, रुरु, चण्ड, क्रोध, उन्मत्त, भीषण, कपालि, संहार भैरवाः।

४. षट्कोणे। ॐ ह्रीं सर्वसिद्धिप्रदचक्रायनमः।

वामावर्तेन। ॐ ह्रीं दुर्गा, शारिका, वैखरी, शिवा, कालिका, त्रिपुरा।।

५. त्रिकोणे। ईशानाग्नेय अग्रतो। सर्वसंमोहनचक्राय नमः।

ॐ ह्रीं लक्ष्मी, सरस्वती, बाला।

६. बिन्दौ। सर्वानन्दमयचक्रायनमः। ॐ ह्रीं मूलं भूतेश्वरेश्वरी।।

ॐ ह्रीं मूलं श्रीमहाराज्ञी, मूलं श्रीराज्यप्रदा, ॐ ह्रीं पंचदशाक्षरी,

ॐ ह्रीं भूतेश्वर, ॐ ह्रीं खड्ग, ॐ ह्रीं पद्म, ॐ ह्रीं कलश, ॐ ह्रीं सुधापात्र।।

## *महाषोडशी आवरणदेवताः (मनु महार्णवे)*

यन्त्रं।। बिन्दुगर्भं, त्रिकोणाष्टदलं, द्वादशदलं, चतुर्दशदलाष्टदलषोडश त्रिकोणरूप दलं च तस्योपरि त्रिरेखात्मक भूपुर।।

पीठपूजा।। मं मंडूकादि परतत्वांत पीठदेवताभ्यो नमः। पीठ मध्ये।

ब्रं ब्रह्मप्रेताय, विं विष्णुप्रेताय, रुं रुद्रप्रेताय, ईं ईश्वरप्रेताय, सं सदाशिवप्रेताय, सुं सुधार्णवासना प्रें प्रेतांबुजासनाय, दिं दिव्यासनाय, चं चक्रासनाय, सं सर्पमन्त्रासनाय, सां साध्यसिद्धासनाय नमः।

नवपीठशक्तीः पूर्वाधष्टसुदिक्षु, मध्ये च। इच्छा, ज्ञान, क्रिया, कामिनी, कामदायिनी, रतिप्रिया, नन्दा, मध्ये मनोन्मन्यै नमः।

ऐं परायै अपरायै, परापरायै, हसौः सदाशिव महाप्रेताय नमः।।

१. पूज्य पूजकयोरंतराले प्राची, तदनुसारेण अन्यदिशं प्रकल्प्य, आग्नेयादिकोणेषु वामावर्तेन।। ऐं नमः। क्लीं बीजाय, सौः बीजाय नमः। पूजयेतर्पयेच्च।।

ह्रीं श्रीं प्रकट गुप्तगुप्ततर संप्रदायकुल निगर्भ रहस्य परापररहस्य संज्ञक श्रीचक्रगत योगिनीकाभ्योनमः।। इति प्रथमावरणं।।

२. त्रिकोणबाह्ये धामपार्श्वे दक्षहस्तेन पुष्पचंदनाक्षतानि तर्पयामीति, वामहस्ते जलं च अर्पयेत्। जले कं प्रास्यमितिं केचित्।।

१. ऊँ अं ऐं क्लीं सौः ऊँ कामेश्वर्यै नमः। नमः कामेश्वरि इच्छाकाम फलप्रदे सर्वसत्ववशंकरि जगत्क्षोभणकरि हुं ऐं क्लीं सौः द्रां द्रीं क्लीं ब्लुं सः सौः क्लीं ऐं कामेश्वरिनित्या श्री...

२. ऊँ आं ऐं भगमालिन्यै नमः भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये

भगयोनेतिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय, वरदे रेते सुरेते भगक्लिन्नद्रवे क्लेदय, दावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्वान् भगेश्वरि ऐं ब्लूं, जेंब्लूं, मेंब्लूं मोंब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हरब्लें ह्रीं भगमालिनी नित्या श्री।।

३. इं ह्रीं नित्यक्लिन्नायै नमः। नित्यक्लिन्ने मदद्रवे स्वाहा। नित्यक्लिन्ना नित्या।।

४. ईं ॐ क्रों भ्रों क्रौं च्रौं छ्रौं ज्रौं झ्रौं भेरुंडायैनमः। भेरुडानित्याश्री।।

५. उं ॐ ह्रीं वह्निवासिन्यैनमः। वह्निवासिनि नित्याश्री इति वामरेखायां।

६. ऊं ह्रीं प्रें सः नित्यक्लिन्ने मदद्रवे महाविद्येश्वरि नमः स्वाहा। महाविद्येश्वरी नित्या श्री। (दक्षयां)।

७. ऋं ॐ ह्रीं शिवदूत्यै नमः। शिवदूती नित्या श्री।

८. ऋं ॐ ह्रीं हुं खे चछे क्षः स्त्रीं हें क्षें फट् त्वरितायै नमः। त्वरितानित्या श्री।

९. लृं ऐं क्लीं सौः कुलसुन्दर्यै नमः। कुलसुन्दरीनित्या श्री।।

१०. लृं ऐं क्लीं सौः हस्रैं हक्लीं हस्रौः सौः क्लीं ऐं द्रां द्रीं क्लीं ब्लूं नित्यायै नमः। नित्या श्री।।

११. ऐं ॐ ह्रीं फ्रें स्त्रूं ह्रीं स्त्रौं क्रों नित्यमदद्रवे हूं क्रों नीलपताकायैनमः नीलपताकाश्री।। ऐं ॐ विजयायैनमः। विजयानित्याश्री। ॐ स्वों सर्वमंगलायैनमः। सर्व मंगलाश्री औं ओं नमो भगवति देवदेवि सर्वभूतसंहारिके जातवेदसि ज्वलंती ज्वल ज्वल प्रज्वल प्रज्वल हुं रं रं हुं फट्। ज्वालामालिनी श्री। अंच्कौं विचित्रनित्यायै नमः विचित्रनित्याश्री।।

३. ततो भूपुराद्बहिः पूर्वादि चतुर्दिक्षु। गं गणपति श्री। बं बडुकाय। ह्रीं दुर्गायै। क्षं क्षेत्रपालकाय बाह्यचतुरस्रस्थ प्रथमरेखायां पश्चिमादि द्वाचतुष्टये।

अणिमासिद्धिश्री। लघिमासिद्धिश्री। महिमासिद्धिश्री। ईशित्वसिद्धिश्री।। कोशचतुष्टये। वशित्वसिद्धिश्री प्राकाम्यसिद्धिश्री। भुक्तिसिद्धिश्रीं। इच्छासिद्धिश्री। वरुणनिऋति मध्यं प्राप्तिसिद्धिश्री। पूर्वेशनयोः मध्ये सर्वकामसिद्धिश्री।।

मध्यरेखायां पश्चिमादि द्वारचतुष्टये। ह्रीं श्रीं-आं ब्राह्मी, ह्री श्रीं माहेश्वरी, ह्री श्रीं कौमारी, ऋ वैष्णवी कोणचतुष्टये। ह्री श्रीं लृं वाराही, ह्री श्रीं ऐं इन्द्राणी, ह्री श्रीं औं चामुण्डा, ह्री श्रीं अः महालक्ष्मी।। तृतीयरेखायां पश्चिमादि द्वारचतुष्टये। ह्री श्रीं त्रिखण्डमुद्रा, ह्री श्रीं सर्वसंक्षोभिणी, सर्वविद्राविणीसर्वाकर्षणीमुद्रा।।

कोणचतुष्टये। ह्री श्रीं सर्ववशंकरी, ह्री श्रीं सर्वोन्मादिनी, ह्री श्रीं सर्वमहांकुशा, ह्री श्रीं खेचरीमुद्रा।। ततस्त्रिबलये ह्री श्रीं बीज, ह्री श्रीं योनि, ह्री श्रीं चार्वादर्शनाय नमः।।

त्रैलोक्यमोहनचक्रे श्रीमहात्रि...यीं समधिष्ठिते एताः ईशित्वाद्याः प्रकटयोगिन्यः समुद्राः ससिद्धयः सायुधाः सवाहना सपरिवाराः सर्वोपचारैः संपूजिता संतर्पिताः संतु।

४. षोडशदलेषु पश्चिमदलादारभ्य वामावर्तेन।। अं कामाकर्षिणी, ह्री श्रीं आ बुद्ध्याकर्षिणी, ह्री श्रीं इं अहंकाराकर्षिणी, ह्री श्रीं ईं शब्दाकर्षिणी, ह्री श्रीं उं रूपाकर्षिणी, ह्री श्रीं ऊं स्पर्शाकर्षिणी, ह्री श्रीं ऋं रसाकर्षिणी, ह्री श्रीं ॠं गंधाकर्षिणी ह्री श्रीं लृं चिंताकर्षिणी, ह्री श्रीं लॄं धैर्याकर्षिणी, ह्री श्रीं एं स्मृत्याकर्षिणी, ह्री श्रीं ऐं नामाकर्षिणी, ह्री श्रीं ओं बीजाकर्षिणी, औं अमृताकर्षिणी, ह्री श्रीं अं शरीराकर्षिणी, अः आत्माकर्षिणी।।

सर्वांशा परिपूरकचक्रे श्री...कामाकर्षिण्याद्या गुप्तयोगिन्यः समुद्राः... सन्तु।।

५. अष्टदलेषु पूर्वादिक्रमेण। ह्री श्रीं कं...ङ अनंगकुसुमा, ह्री श्रीं चं.. ञं अनंगमेखला, ह्री श्रीं ढं...णं अनंगदना ह्री श्रीतं...नं अनंगदनातुरा, ह्री श्रीं पं...सं अनंगरेखा, ह्री श्रीं यं...व अनंग योगिनी, ह्री श्रीं शं...हं अनंगांकुशा, ह्री श्रीं लं क्ष अनंगमालिनी।

सर्वसंक्षोभकरचक्रे श्री...अनंगकुसुमाद्याः गुप्ततरयोगिन्य...सन्तु।।

६. चतुर्दशारचक्रे पश्चिमादि वामावर्तेन।। ह्री श्रीं सर्वसंक्षोभिणी, ह्री श्रीं सर्वविद्राविणी, ह्री श्रीं सर्वाकर्षिणां ह्री श्रीं सर्वाह्लादिनी, ह्री श्रीं सर्वसंमोहिनी, ह्री श्रीं सर्वस्तभिनी, सर्वजृंभिणी, ह्री श्रीं सर्ववशंकरी, ह्री श्रीं सर्वरजिनी, ह्री श्रीं सर्वोन्मादिनी सर्वार्थसाधिनी, ह्री श्रीं सर्वाशापरिपूरिणी, ह्री श्रीं सर्वमन्त्रमयी, सर्वद्वंद्वक्षयंकरी।।

सर्वसौभाग्यदायकेचक्रे श्री...सर्वसंक्षोभिण्याद्याः संप्रदाययोगिन्यः...सन्तु।।

७. दशारचक्रे पश्चिमादिवामावर्तेन। ॐ ऐं ह्रीं श्रीं सर्व सिद्धिप्रदादेवी, ह्री श्रीं सर्वसंपत्प्रदा, ह्री श्रीं सर्वप्रियंकरी ह्री श्रीं सर्वमंगलकारिणी, ह्री श्रीं सर्वकामप्रदा, ह्री श्रीं सर्वदुःखविमोचिनी, ह्री श्रीं सर्वांगसुन्दरी, ह्री श्रीं सर्वमृत्युविनाशिनी, ह्री श्रीं सर्वविघ्ननिवारिणी, ह्री श्रीं सर्वसौभाग्यदायिनी।।

सर्वसौभाग्यदायके चक्रे श्री...सर्वसिद्धिप्रदाद्यः कुलयौगिनीयोगिन्य...सन्तु।

८. अन्तर्दशारे पश्चिमादिवामावर्तेन। ह्री श्रीं सर्वज्ञादेवी, सर्वशक्तिमयी, ह्री श्रीं सर्वैश्वर्यप्रदा, ह्री श्रीं सर्वज्ञानमयी सर्वव्याधिविनाशिनी, सर्वाधारस्वरूपा, ह्री श्रीं सर्वपापहरा, ह्री श्रीं सर्वानन्दमयी, सर्वरक्षास्वरूपिणी, सर्वेप्सितफलप्रदा सर्वरक्षाकरे चक्रे श्री...सर्वज्ञाद्याः निगर्भयोगिन्यः... सन्तु।।

९. अष्टारचक्रे पश्चिमादिवामावर्तेन। ॐ ऐं ह्रीं श्रीं अं आं...अं अः वशिनीवाग्देवता।

ह्री श्रीं. कं...ङं कामेश्वरी, ॐ ऐं ह्रीं श्रीं चं जं मोदिनी, ॐ ऐं ह्रीं श्रीं टं..णं विमला, ॐ ऐं ह्रीं श्रीं तं...नं अव्यया (अरुणा) ॐ ऐं ह्रीं श्रीं पं...मं जयिनी, ॐ ऐं ह्रीं श्रीं यं...वं सर्वेश्वरी, ॐ ऐं ह्रीं श्रीं शं...क्षं कौलिनी।

सर्वरोगहरेचक्रे श्री वशिन्याद्याः रहस्ययोगिन्यः... सन्तु।।

ततः अभ्यन्तरचक्रमध्ये दक्षिणे ॐ ऐं ह्रीं श्रीं उत्तमबाणाय नमः। वामे मोहधनुषे। पुनः त्रिकोणे, ॐ ऐं ह्रीं श्रीं कामेश्वर्यै, क्रिण्यै, ॐ ऐं ह्रीं श्रीं भगमालिन्यै।।

## *दुर्गा अष्टाक्षरी पूजा आवरणदेवताः*

यन्त्रं।। चतुर्द्वारं त्रिवृत्तं, अष्टदलं, वृत्तं, षडस्त्रं, त्रिकोणं, बिन्दुं।।

पीठपूजा।। ॐ ह्रीं मण्ड्काय, कालाग्निरुद्राय, मूलप्रकृत्यै, आधारशक्त्यै कूर्माय, अनन्ताय, वराहाय, पृथिव्यै इत्युपर्यपरि। सुधार्णवाय नमः मध्ये।।

नवरत्न विराजित नवखण्डमयद्वीपाय, पद्मरागखण्डाय, स्वर्ण गिरये, नन्दनोद्यानाय, कल्पवनाय, पद्मवनाय, विचित्ररत्नखचित भूमिकायं, चिन्तामणिमण्डपाय, नवरत्नखचितवेदिकायै, रत्नसिंहासनाय, तन्मध्ये सहस्त्रारपद्माय, प्रकृतिमयपत्रेभ्यो, विकृतिमयकेसरेभ्यो, तन्मध्ये अष्टबीजविभूषितकर्णिकायै, तत्पार्श्वे धर्माय, ज्ञानाय, वैराग्य ऐश्वर्याय, वामत, अधर्माय, अज्ञानाय, अवैराग्याय, अनैश्वर्याय, मध्ये सं सत्वाय, रं रजसे, तं तमसे, मूलंउच्चार्य महिषासनाय, मूलं मातृकाश्च उच्चार्य श्रीयोगपीठाय नम।।

१. चतुरश्रे।। ॐ ह्रीं दुं सर्वसिद्धिप्रदचक्राय नमः। पूर्वे ॐ ऐं ह्रीं श्रीं गणेशाय, ॐ ऐं ह्रीं श्रीं हौं कुमाराय दक्षिणे प्रीं पुष्पदन्ताय, वैं विकर्तनाय, पश्चिम उत्तर भागौ।

२. ॐ ऐं ह्रीं श्रीं असितांग भैरवयुत ब्राह्मी, रुरु भैरवयुत नारायणी, चण्डभैरवयुत चामुण्डा, क्रोधेशभैरवयुत अपराजिता, ॐ ऐं ह्रीं श्रीं उन्मत्तभैरवयुत माहेश्वरी, कपालि भैरवयुत कौमारी, भीषणभैरवयुत वराही, संहारभैरवयुत नारसिंही। इतिवामवर्तेन।।

३. षट्कोणे।. ॐ ऐं ह्रीं श्रीं सर्वाशापरिपूरक चक्रायनमः।। वामावर्तेन।। ॐ ऐं ह्रीं श्रीं शैलपुत्री, ॐ ऐं ह्रीं श्रीं ब्रह्मचारिणी ॐ ऐं ह्रीं श्रीं चण्द्रघण्टा, ॐ ऐं ह्रीं श्रीं कूष्मांडा, ॐ ऐं ह्रीं श्रीं स्कन्दमाता, ॐ ऐं ह्रीं श्रीं कात्यायनी।।

४ त्रिकोणे।। अग्र, ईशान आग्नेये।। ॐ ऐं ह्रीं श्रीं सौभाग्यप्रद चक्रायनमः।। ॐ ऐं ह्रीं श्रीं कालरात्रि, महागौरी, देवदूती।।

५. बिन्दो। ॐ ऐं ह्रीं श्रीं अष्टसिद्धिप्रद चक्रायनमः। मूलमुच्चार्य श्रीनीलकण्ठ श्री दुर्गां (सप्तवारं)

६. बिन्दूपरि। मूलं अंबिका, अष्टाक्षरा, अष्टभुजा, नीलकण्ठ, जगदम्बिका।।

७. बिन्दुपरि। शङ्खाय, पद्माय, खड्गाय, बाणेभ्यो, धनुषे, खटवायै, शूलाय, तर्जन्यै, ततः मूलेन सप्तवारं।।

## मातृकाक्षर महिमा खण्डः

### १. अकार मातृकापीठ रूपिणीः

अं अमृता- अजामुखी

*अं*

१. अं ॐ ह्रीं श्रीं अं कामरूप पीठाय नमः

ध्यानश्लोकः

| |
|---|
| २. अं ॐ ह्रीं श्रीं अं अजामुखी रक्तवर्णा हंसगाधवलांशुका।<br>शरासनं वरं दक्षेधत्ते वामेशराऽभयौ। |

—सिद्धशाबर तन्त्रे।

३. अ-कारः केशवो विष्णः श्रीकण्ठोऽपि खरादिकः।

(श्रीतन्त्राभिधानम्)

मस्तकश्च ललाटश्च हृस्वश्च वरवर्णिनि!।।१।।

(मन्त्राभिधानम्)

अं ॥४१॥

४. अः श्रीकण्ठः मुरेशश्च ललाटश्चैकमातृकः ।
पूर्णोदरी सृष्टिमेधौ सारखतः प्रियम्बदः ।।१।।
महाब्राह्मी वासुदेवी धनेशः केशवोऽमृतम् ।
कीर्त्तिर्निष्टत्तिर्वागीशो नरकारिर्हरो मरुत् ।।२।।
ब्रह्मा वामाऽद्यजो हृस्वः करसूः प्रणवाद्यकः।
ब्रह्माणी कामरूपश्च कामेशी वासिनी वियत् ।।३।।
विश्वेशः श्रीविष्णुकण्ठौ प्रतिपत्तिः स्थिरं शिनी।
अर्कमण्डलवर्णाद्यौ ब्राह्मणः कामकर्षिणी ।।४।।

५. श्रीकण्ठः केशकण्ठस्थौ निवृत्तिश्च खरादिकः।
अ-कारो मातृकश्चेव वात इत्यपि कीर्त्तित ।।

(मातृका निघण्टुः)




१.   श्री अजामुखी देवी।




२. श्री अदर्वणी देवी।

## २. आकार मातृकापीठ रूपिणीः

### आं आकर्षिणी - अदर्वणि

### *आं*

१. आं ॐ ह्रीं श्रीं आं वाराणसी पीठाय नमः

ध्यानश्लोकः

२. आकाराख्याथर्विणी तु शयामशुक्लां बराशुगा।

धत्ते खड्गं च खेटं च क्रमेणैव वराऽभयौ।।

—सिद्धशाबरतन्त्रे।

३. आ प्रतिष्ठा मुखं दीर्घं नारायणोऽप्यनन्तकः।

(मन्त्राभिधानम्)

आ ।।३५।।

४. आकारो विजयाऽनन्तौ दीर्घच्छायो विनायकः ।
क्षीरोदधिः पयोदश्च पाशो दीर्घास्यवृत्तकौ ।।९।।
प्रचण्ड एकजो रुद्रो नारायण इभेश्वरः ।
प्रतिष्ठा मानदाकान्तो विश्वान्तकगजान्तकौ ।।१०।।
पितामहो द्विटान्तो भूः क्रिया कान्तिश्च सम्भवः ।
द्वितीया मानदा काशी विघ्नराजः कुजो वियत् ।
स्वरान्तकश्च हृदयमङ्गुष्टो भगमालिनी ।।११।।

(प्रकारान्तरमन्त्राभिधानम्।)

५. नारायणस्तथानन्ती मुखवृत्तो गुरुस्तथा ।
विष्णुशय्या तथा शेषो दीर्घ आ-कार एव च ।।

(मातृका निघण्टुः)

## ३. इ कार मातृकापीठ रूपिणीः

### इं इन्द्राणि इलादेवी

इं

इं ॐ ह्रीं श्रीं इं नेपाल पीठाय नमः

ध्यानश्लोकः

२. इकाराख्या त्विला देवी श्वेता मत्ते भगा शुभा।
चन्द्रहास वरौ दक्षे वामे धत्ते गदाऽभयौ।।

—सिद्धशाबरतन्त्रे।

३. इ-कारी माधवः सूक्ष्मो दक्षनेत्रश्च लोचनम्।।२।।

(मन्त्राभिधानम्)

इ ॥२८॥

४. इःसूक्ष्मा शाल्मली विद्या चन्द्रः पूषा मुगुह्यकः ।
सुमित्रं सुन्दरी वीरः कीटरः काटरः पयः ।।१२।।
भ्रूमध्यो माधवस्तुष्टिर्दृक्षनेत्रश्च नासिका ।
शान्तः कान्तः कामिनी च कामी विघ्नविनायकः ।
नेपाली भरणी रुद्रो नित्या क्लिन्ना च पावकः ।।१३।।

५. माधवः सूक्ष्मसंज्ञश्च विद्या दक्षिणलोचनम् ।
गन्धर्व्वः पाञ्चजन्यश्च इ-कारश्च मखाङ्कुरः ।।

(मातृका निघण्टुः)




४. श्री ईश्वरी देवी ।

## ४. श्री ईकार मातृकापीठ रूपिणी

### ई ईशिनी देवी - ईश्वरी

### ई

१. ई ॐ ह्रीं श्रीं ई पाड्रवर्धनी पीठाय नमः

ध्यनश्लोक:

२. ईश्वरी स्वर्णवर्णा भा वृषारूढा सितांशुका।
शारिकां च वरं दक्षे वाम धत्तें कुशाऽभयौ।

—सिद्धशाबरतन्त्रे।

३. ई-र्गोविन्दस्त्रिमूर्त्ति स्याद्वामाक्षी कमला कला।
माया लक्ष्मी रतिः शान्तिर्व्वैष्णवी विन्दुमालिनी।।३।।

(मन्त्राभिधानम्)

ई ॥२८॥

४. ई त्रिमूर्त्तिर्म्महामाया लोलाक्षी वामलोचनम् ।
गोविन्दः शेखरः पुष्टिः सुभद्रा रत्नसंज्ञकः ।।१४।।
विष्णुर्लक्ष्मीः प्रहासश्च वाग्विशुद्धः परापरः ।
कालोत्तरीयो भेरुण्डा रतिश्च पौण्ड्रवर्द्धनः ।।१५।।
शिवोत्तमः शिवा तुष्टिश्चतुर्थी विन्दुमालिनी ।
वैष्णवी वैन्दवी जिह्वा कामकला सनादका ।।१६।।
पावकः कोटरः कीर्त्तिर्म्मोहिनी कालकारिका।
कुचद्वन्द्वं तर्ज्जनी च शान्तिस्त्रिपुरसुन्दरी ।।१७।।

(प्रकारान्तर मन्त्राभिधानम्)

५. गोविन्दश्च त्रिमूर्त्तीशः शान्तिः स्याद्वामलोचनम्।
नृसिंहास्त्रं तथा माया ई-कारोऽपि सुरेश्वरः।।

(मातृका निघण्टुः)

# ५. श्री उकार मातृकापीठ रूपिणी

## उ उमादेवी - उग्रादेवी

### उ.

१. उं ॐ ह्रीं श्रीं उं पुरारीश्वर पीठाय नमः

ध्यानश्लोक:

| |
|---|
| २. उग्रादेवी ह्युकाराख्या षड्भुजासिंहगासिता।<br>दक्षेशूलांकुशवरान् वामे पाशगदाऽभयान्।। |

—सिद्धशाबर तन्त्रे

३. उः शिवः प्रणवं विष्णुर्दक्षकर्णोऽमरेश्वरि!।

(मन्त्राभिधानम्)

उ ॥३॥

४. उः शङ्करो वर्त्तुलाक्षी भूतः कल्याणवाचकः।
अमरेशो दक्षकर्णः षड्वक्त्रो मोहनः शिवः।।१८।।
उग्रप्रभुर्धृतिर्व्विष्णुर्व्विश्वकर्म्मा महेश्वरः।
शत्रुघ्नश्चेटिका पुष्टिः पञ्चमी वह्निवासिनी।।१९।।
कामघ्नः कामना चेशो मोहिनी विघ्नहृन्मही।
उटसूः कुटिला श्रोचं पारद्वीपो वृषो हरः।।२०।।

(प्रकारान्तरमन्त्राभिधानम्)

५. अमरेशस्तथा विष्णुरिन्धिका च गजाङ्कुशः।
दक्षकर्णश्च विजय उ-कारो मन्मथाभिधः।।

(मातृका निधण्टुः)




५. श्री उग्रा देवी ।




६. श्री ऊर्जस्वला देवी।

## ६. श्री ऊ कार मातृकापीठ रूपिणी:

### ॐ ऊर्ध्वकेशीदेवी-ऊर्जस्वलादेवी

ऊ

१. ॐ ॐ ह्रीं श्रीं ॐ कन्याकब्ज पीठाय नमः

ध्यान श्लोक:

२. ऊकारोर्जस्वला देवी शार्दूलवरवाहना।
रक्ता चतुर्भुजा धत्ते खड्ग खेट वराऽभयान्।।

—सिद्धशाबरतन्त्रे

३. ऊ-रर्घीशो वामकर्णः कथितो मधुसूदनः।।

(मन्त्राभिदानम्)

ऊ ॥२५॥

४. ऊः कण्टको रतिः शान्तिः क्रोधनो मधुसूदनः।
कामराजः कुजेशश्च महेशो वामकर्णकः ।।२१।।
अर्घीशो भैरवः सूक्ष्मो दीर्घघोणा सरस्वती।
विलासिनी विघ्नकर्त्ता लक्ष्मणो रूपकर्षिणी।
महाविद्येश्वरी षष्ठा षण्डो भूः कान्यकुब्जकः ।।२२।।

(प्रकारान्तरमन्त्राभिधानम्)

५. अर्घीशो दीपिका वामश्रवणो मधुसूदनः ।
इन्द्रश्चाद्यः षण्मुखश्च ऊ-कारो रक्षणाभिधः ।।

(मातृका निघण्टुः)

## ७. श्री ऋ कार मातृकापीठ रूपिणीः

### ऋ ऋद्धिदायीदेवी–ऋतुधामादेवी

### ऋ

१. ऋ ॐ ह्रीं श्रीं ऋ पर्वाचल पीठाय नमः उज्जैन हरसिद्धि पीठ प्रधान भण्डवसे

ध्यानश्लोक:

२. ऋतुधामा ऋकाराख्या रक्तवर्णा वृषस्थिता।
दक्षेपाशवरौधत्ते तथा वामें कुशाऽभयौ।।

—सिद्धशाबरतन्त्रे

३. ऋ-र्नासा दक्षनासा च भावभूतिस्त्रिविक्रमः।

(मन्त्राभिदानम्)

ऋ ॥२८॥

४. ऋः पुर्द्दीर्घमुखी रुद्रो देवमाता त्रिविक्रमः ।
भावभूतिः क्रिया क्रूरा रेचिका नासिका धृतः ।।२३।।
एकपादः शिरो माला मण्डला शान्तिनी जलम्।
कर्णः कामलभा मेदो निवृत्तिर्गणनायकः ।।२४।।
रोहिणी शिवदूती च पूर्णगिरिश्च सप्तमी ।।२५।।

(प्रकारान्तर मन्त्रामिधानम्)

५. रेचिका दक्षनासा चामरभूतस्त्रिविक्रमः।
देवमाता रिपुघ्नश्च ऋ-कारस्तपनः स्मृतः।।

(मातृका निघण्टुः)




७. श्री ऋतुधामा देवी ।




८. श्री रेणुका देवी ।

## ८. श्री ॠ कार मातृकापीठ रूपिणीः

### ॠकारादेवी–रेणुखादेवी

### ॠं

१. ॠ ॐ ह्रीं श्रीं ॠ अर्बुदाचला पीठाय नमः उज्जैन वरसिद्धि पीठ प्रधान मण्डप से

ध्यानश्लोकः

२. ॠकाराख्या रेणुकेयं षडास्थाषडभुजासितां
शूलं पाशं वरं दक्षे वामे खड्गगदाऽभयान्
दधाना रक्त सिंहस्था क्रूरा लोक भयंकरी।।

—सिद्धशाबरतन्त्रे

३. ॠ-कारो वामनासा च वामनोद्यदधीश्वरः।।

(मन्त्राभिधानम्)

ॠ ।।३१।।

४. ॠः क्रोधोऽतिथीशो वाणी वामनः श्रीश्च गोधृती।
ऊर्ध्वमुखी निशानाथः पद्ममाला विनष्टधीः ।।२६।।
शशिनी मोचिका श्रेष्ठा दैत्यमाता प्रतिष्ठिता ।
एकदन्ताह्वयो माता हरिता मिथुनोदया ।।२७।।
कोमलः श्यामला मेधी प्रतिष्ठा पतिरष्टमी ।
ब्रह्माख्यमपि कीलालं पावको गन्धकर्षिणी ।।२८।।

(प्रकारान्तर मन्त्राभिधानम्)

५. अतिथीशो वामनश्च मोचिका वामनासिका।
दैत्यमाता च दैवज्ञः ॠ-कारस्त्रिपुरान्तकः।।

(मातृका निघण्टुः)

## ९. श्री लृकार मातृकापीठ रूपिणीः

### लृं लृंकारदेवी–लुतुम्बरा देवा

### लृं

१. लृं ॐ ह्रीं श्रीं लृं आम्रातकेश्वर पीठाय नमः

ध्यानश्लोक:

२. लृतंभरा लृकाराख्या श्यामाव्याघ्रवरस्थिता।
चतुर्मुखाऽष्टा हस्तेयं धत्तेस्त्राणि करै परै।।
त्रिशूलं पाशडमरू वरान् वाम करें स्तथा।
खड्गं कपाल मुसलाऽभयान्पीताम्बर शुभा।।

—सिद्धशाबरतन्त्रे

३. लृः स्थाणुर्दक्षगुल्फस्थो गण्डाख्यः श्रीधरोऽपि च।

(मन्त्राभिधानम्)

लृ ॥३४॥

४. लृः स्थाणुः श्रीधरः शुंड्वो मेधा धूम्रो वको वियत्।
देवयोनिर्दक्षगण्डो वहेशः कौन्तरुद्रकौ ।।२९।।
विश्वेश्वरो दीर्घजिह्वा महेन्द्रो लाङ्गलिः परा ।
चन्द्रिका पार्थिवो धूम्रा द्विदन्तः कामवर्धनः ।।३०।।
शुचिस्मिता च नवमी कान्तिरावातकेश्वरः ।
चित्ताकर्षिणी काशश्च तृतीयः कुलसुन्दरी ।।३१।।

(प्रकारान्तर मन्त्राभिधानम्)

५. श्रीधरश्चामरः स्थाणुर्दक्षगण्डस्त्रिवेदकः।।
एकाङ्घ्रिर्व्वज्रदण्डश्च व्योमाद्र्ध्वं लृ-स्वरः स्मृतः।।

(मातृका निघण्टुः)




९.　श्री लुतुम्बरा देवी ।




१०. श्री लूञ्चिका देवी।

## १०. श्री लृकार मातृकापीठ रूपिणीः

### लृकारादेवी–लृञ्झिखादेवी

### लृं

१. लृ ॐ ह्रीं श्रीं लृं एक्राम पीठाय नमः

ध्यान श्लोक:

२. लृकारा लृञ्झिकारन्यैषा पुष्पदम्त गजास्थिता।
रक्तादश भुजाऽर्थेन दक्षादि क्रमशः करै।
त्रिशूलं पाशमुसलं चन्द्रहास वरान् शुभान्
वामैः करैः खड्गंखेट गदा शक्त्य भयांस्तथा।।

—सिद्धशाबरतन्त्रे

३. लृ-कारोऽपि हृषीकेशो हरोऽसौ वामगण्डकः।।

(मन्त्राभिधानम्)

लृ ।।३४।।

४. लृकारः कमला हर्षा हृषीकेशो मधुव्रतः।
सूक्ष्मा कान्तिर्व्वामगण्डोरुद्रः कामोदरी सुरा ।।३२।।
कान्तिकृत् स्वस्तिका शक्री मायावी लोलुपो वियत्।
कुशमी सुस्थिरो माता नीलपीतो गजाननः ।।३३।।
कामिनी विश्वपा कालो नित्या शुद्धा शुचिः कृती।
सूर्य्या धैर्य्या कर्षणी च एकाकी दनुजप्रसूः ।।३४।।

(प्रकारान्तर मन्त्राभिधानम्)

५. हृषीकेशो हरः सूक्ष्मी वामगण्डः कुवेरदृक्।
अर्द्धचर्व्वो नीलचरण लृ-कारश्च त्रिकण्ठकः।।

(मातृका निघण्टुः)

# ११. श्री एकार मातृकापीठ रूपिणीः

## एं एकपादादेवी–रेवतीदेवी

## एं

१. **एं ॐ ह्रीं श्रीं एंतीस्तोत पीठाय नमः**

उज्जैन वरसिद्धि पीठ प्रधान मण्डप से (---शितल्वे)

ध्यानश्लोकः

२. **एकारख्या रेवतीस्यात् दशास्या रूंडमालिनी ।**
**रक्ता विंशद् भुजा सिंहवाहना काल लोचना**
**करैधत्ते चक्र शूल पाश खड्ग कमण्डलान् ।**
**अक्षसूत्रं च चिन्मुद्रां शुशुण्डीं मुद्गर वरम् ।।**
**वामे धत्ते करैश्शंखं भिण्डीन्दुमृग श्वेटकान् ।**
**कपालं दहनं शोषं दण्डं चैव गदाऽभयौ ।।**

—सिद्धशाबरतन्त्रे

३. **ए-कारो विजया शक्तिर्भगसंज्ञाभिधायकः।**
**पद्मनाभी महेशानि! प्रोक्तो झिण्टीशनायकः।।**

(मन्त्राभिधानम)

ए ॥३३॥

४. **ए-कारो वास्तवः शक्तिर्झिण्टीशोऽष्ठो भगो मरुत्।**
**सूक्ष्मभूतोर्द्ध्वकेश्यौ च ज्योत्स्ना श्रद्धा प्रमर्द्दनः ।।३५।।**
**भयं ज्ञानं कृशा धीरा जङ्घा सर्व्वसमुद्भवः ।**
**वह्निर्विष्णुर्भगवती कुण्डली मोहिनी रसः ।।३९।।**
**योषिदाधारशक्तिश्च त्रिकोणा ईशसंज्ञकः ।**
**सन्धिरेकादशी भद्रा पद्मनाभः कुलाचलः ।।३७।।**

(प्रकारान्तर मन्त्राभिधानम्)।

५. **झिण्टीशः पद्मनाभश्च शक्तिर्दक्षः क्षमाऽमृतम्।**
**भग ऊर्ध्वं कामरूप ए-कारश्च त्रिकोणकः।।**

(मातृका निघण्टुः)




११. श्री रेवती देवी।




१२. श्री शुष्क रेवती देवी ।

## १२. श्री ऐंकार मातृकापीठ रूपिणीः

### ऐं ऐश्वर्यात्मिकादेवी--शुष्करेवतीदेवी

### ऐं

१. ऐं ॐ ह्रीं श्रीं ऐं कामकोटि पीठाय नमः

ध्यानश्लोकः

२. ऐकाराख्या शुष्कपूर्वा रेवति त्रिशिराहिता।
मयूरगा षड् भुजेयं रक्त केशैश्च संवृता।।
अर्धैधत्ते करैश्चक्रं त्रिशूलं चवरं तथा।
वामैः शंखं गदा गुर्वी करैर्धत्तेऽभयं तथा ।।

—सिद्धशाबरतन्त्रे

३. ऐ-कारो भौतिकश्चैव दामोदरोऽधराह्वयः।
अष्टस्वरोऽपि विज्ञेयो हिमपर्व्वतकन्यके!।।

(मन्त्राभिधानम्)

ऐं।।३६।।

४. ऐं-लर्ज्जा भौतिकः कान्ता वायवी मोहिनी विभुः।
दक्षा दामोदरः प्रज्ञाऽधरो विकृतमुख्यपि ।।३८।।
क्षमात्मको जगद्योनिः परः परनिबोधकृत् ।
ज्ञानामृता कपर्द्दिश्रीः पीठेशोऽग्निः समातृकः ।।३९।।
त्रिपुरा लोहिता राक्षी वाग्भवो भौतिकासनः।
महेश्वरी द्वादशी च विमलश्च सरस्वती।।४०।।
कामकोटी वामजानुरंसुमान् विजया जटा।।४१।।

(प्रकारान्तर मन्त्राभिधानम्)

५. ज्ञानामृतो भौतिकश्च धरा दामोदरस्तथा।
वागीशो वर्म्मेभरद ऐ-कारस्त्रिपुरस्तथा।।

(मातृका निघण्टुः)

## १३. श्री ओंकार मातृकापीठ रूपिणी:

### ओङ्कारा देवी–अश्ववि देवी

### ओ

१. ओं ॐ ह्रीं श्रीं ओं केलश पीठाय नमः

ध्यानश्लोक:

२. ओंकारात्वश्विनी देवी रक्तवर्णा षडानना ।
मयुरगाऽर्कबाहुः स्यात् धत्ते दक्षेंकुशंशरम् ।।
खडगंपाशं च चिन्मुद्रां दरं च केकरेक्षणा ।
वामे शूलं कोर्मुकं च खेटं मुसलमेव च ।।
पुस्तक चाभयं चैव सर्वशत्रु भयंकरी ।।

—सिद्धशाबरतन्त्रे

३. ओ-कारश्चैकदन्तश्च सद्योजातश्च सत्यकः ।
वासुदेवो महेशानि! दन्तो मे परिकीर्त्तितः ।।

(मन्त्राभिधानम्)

ओ ।।३२।।

४. ओ-कारः सत्यपीयूषौ पश्चिमास्यः श्रुतिः स्थिरा ।
सद्योजातो वासुदेवो गायत्री दीर्घजङ्घकः ।।४२।।
आप्यायनी चोड्र्ध्वदन्तो लक्ष्मीर्व्वाणी सुखी द्विजः ।
उद्देश्यदर्शकस्तीव्रः कैलासश्च सुधाकरः ।।४३।।
प्रणवांशो ब्रह्मसूत्रमजेशः सर्व्वमङ्गला ।
त्रयोदशी दीर्घनासा रतिनाथो दिगम्बरा ।।४४।।
त्रैलोक्यविजया प्रक्षा प्रीतिर्व्वीजादिकर्षिणी ।।४५।।

(प्रकारान्तर मन्त्राभिधानम्)

५. सद्योजातो वासुदेवो रुद्रोदन्तस्त्रिमात्रकः ।
आप्यायनी मन्त्रनाथ ओ-कारो नगसंज्ञकः ।।

(मातृका निघण्टुः)




१३. श्री अश्वनी देवी।




१४. श्री अघोरा देवी ।

# १४. श्री औंकार मातृकापीठ रूपिणी:

## औं औषधादेवी–अवोणदेवा

## *औं*

१. औं ॐ ह्रीं श्रीं औं भृगृनगर पीठाय नमः

ध्यानश्लोक:

२. औकाराख्या ह्यघोरेयंकराली दीर्घ जिह्विका।
एकवक्त्रा वक्रनेत्रा भ्रुकुटी कुटिलेक्षणा ।।
नीलमेघ निभा रौद्री भेरंडवर वाहना ।
षड्भुजार्धकरैधत्ते शूलं खड्गं वरं तथा ।।
गदो खेटाऽभयान् वामे दधाना च महोदरी ।।

—सिद्धशाबरतन्त्रे

३. औ-कारो मनुराख्यातो दन्तान्तोऽधोरदाह्वयः।
सङ्कर्षणोऽपि देवेशि! कथितोऽनुग्रहेश्वरः।।

(मन्त्राभिधानम्)

औ ।।३२।।

४. औ-कारः शक्तिको नादतेजसी वामजङ्घकः।
मणिवन्धो ग्रहेशश्च शङ्कुर्व्वर्णः सदाशिवः ।।४६।।
अधोदन्तश्च कण्ठोष्ठौ सङ्कर्षणः सरस्वती ।
आज्ञा चोर्ध्वमुखी शान्तो व्यापिनी प्रकृतः मयः।।४७।।
अनन्ता ज्वालिनी व्योमा चतुर्दशी रतिः प्रियः ।
नेत्रमात्माकर्षिणी च ज्वाला मालिनिका भृगुः ।।४८।।

(प्रकारान्तर मन्त्राभिधानम्)

५. अक्रूरो व्योमरूपश्च प्रद्युम्नश्चन्द्रसंज्ञकः।
अनुस्वारस्तथा विन्दुरङ्कारश्च शिरोगतः।।

(मातृका निघण्टुः)

# १५. श्री अंकार मातृकापीठ रूपिणीः

## अं अम्बिका देवी–अञ्जना देवी

## अं

१. अं ॐ ह्रीं श्रीं अं केदार पीठाय नमः

ध्यानश्लोकः

| |
|---|
| २. अञ्जनाभाञ्जनादेवी पञ्चास्या जीरला कुश । |
| महोदरी महाव्याघ्र वरवाहनमास्थिता ।। |
| चर्तुभुजा शूलपाश वराऽभय करा मता ।। |

—सिद्धशाबरतन्त्रे

३. अनुस्वारश्च विन्दुश्च दण्डो दण्डी वियद्विदुः।
प्रद्युम्नश्चाक्रूरश्चापि शीर्षश्च मरणं प्रिये!।।

(मन्त्राभिधानम्)

अं ।।३९।।

४. अ-ङ्कारश्चक्षुषी दन्तो घटिका समगुह्यकः ।
प्रद्युम्नः श्रीमुखी प्रीतिर्व्वीजयोनिर्वृषध्वजः ।।४९।।
परं शशी प्रमाणीशः सोमो विन्दुः कलानिधिः ।
अक्रूरश्चेतना नादः पूर्णा दुःखहरः शिवः।।५०।।
शिरः शम्भुर्नरेशश्च सुखदुःखप्रवर्त्तकः ।
पूर्णिमा रेवती शुद्धः कन्याचररविर्व्वियत् ।।५१।।
अमृताकर्षिणी शून्यं विचित्रा व्योमरूपिणी ।
केदारो रात्रिनाशश्च कुब्जिका चैव वुद्बुदः ।।५२।।

(प्रकारान्तर मन्त्राभिधानम्)

५. अनन्तश्च महासेनोऽनिरुद्धो रसवर्णकः।
कन्यास्तननिभः सर्गो विसर्गश्चान्तिमस्वरः।।

(मातृका निघण्टुः)




१५. श्री अञ्जना देवी।




१६. श्री अजा देवी।

## १६. श्री अःकार मातृकापीठ रूपिणीः

### अः अक्षरादेवी–अजादेवी

### *अः*

**१. अः ॐ ह्रीं श्रीं अः चन्द्रपुर पीठाय नमः**

ध्यानश्लोकः

**२. अःत्याख्या त्वजा देवी त्रिशिरा च त्रिलोचना ।**
**रक्त पीताम्बरा क्रूरतरक्षुवरवाहना ।।**
**षड् भुजा शूल पट्टासि वरदान करान्विता ।**
**वामेंकुश महाखेटा भयान्धत्ते करैः क्रमात् ।।**

—सिद्धशाबरतन्त्रे

**३. विसर्गः सर्ग आख्यातो विषद्विषमभानसः ।**
**अनिरुद्धो महासेनः कलाज्ञोऽपि रमापि च ।**

(मन्त्राभिधानम्)

अः ॥३०॥

**४. अः कण्ठको महांर्णासेनः कला पूर्णमृता हरिः ।**
**इच्छा भद्रा गणेशश्च रतिर्व्विद्या सुखं मुखम् ।।५३।।**
**द्विविन्दूरसना सोमोऽनिरुद्धो दुःखसूचकौ ।**
**द्विजिह्वः कुण्डलं वक्तं सर्गः शक्तिर्निशाकरः ।।५४।।**
**सुन्दरी सुयशा नन्दा गणनाथो महेश्वरः ।।५५।।**

(प्रकारान्तर मन्त्राभिधानम्)

**५. क्रोधीशो धातृसंज्ञश्च चक्री सृष्टिकरादिगः ।**
**वर्गादिर्म्मायी देवेशः क-कारः कामगः स्मृतः ।।**
**एतानि स्वरनामानि । मातृकाव्यञ्जननामानि वच्मि ।।**

(मातृका निघण्टुः)

# १७. श्री ककार मातृकापीठ रूपिणीः

## कं कालरात्री देवी–भूतबिन्यासिनी

## कं

१. कं ॐ ह्रीं श्रीं कं श्री पीठाय नमः

ध्यानश्लोकः

२. भूताविन्यासिनी देवीशुभ्रागजारूढा चतुर्भुजा।
त्रिशूलं च वरं दक्षे वामें कुशमथाऽभयम्।।

—सिद्धशाबरतन्त्रे

३. कः क्रोधीशो मुखं चक्री व्रतदेवः सुरो रविः।

(मन्त्राभिधानम्)

क ।।४२।।

४. कः क्रोधीशो महाकाली कामदेवः प्रकाशकः।
कपालतेजसी शान्तिर्व्वासुदेवो जयाऽनलः।।५६।।
चक्री प्रजापतिः सृष्टिर्द्दक्षस्कन्दो विशाम्पतिः।
अनन्तः पार्थिवो विन्दुस्तापिनीः परमार्थकः।।५७।।
वर्गाद्यश्च सुखं ब्रह्मा सखाम्भोधिः शिरो जलम्।
माहेश्वरी तुलापुष्पं मङ्गलश्चरणं करः।।५८।।
नित्या कामेश्वरी मुख्यः कामरूपो गजेन्द्रकः।
श्रीपुरं रमणो वङ्गकुसुमा परात्मकः।।५९।।

(प्रकारान्तर मन्त्राभिधानम्)

५. ऋद्धिर्गदी च चण्डेशः खेटो दक्षिणकूर्परः।
कैटभश्चैव मातङ्गः संहारः खार्णकः स्मृतः।।

(मातृका निघण्टुः)




१७. श्री भूतविन्यासिनी देवी।




१८. श्री स्वात्योनिधि देवी ।

## १८. श्री खकार मातृकापीठ रूपिणीः

### खं खण्डिता देवी–खत्योनिधिदेवी

### खं

१. खं ॐ ह्रीं श्रीं खं ओमकार पीठाय नमः

उज्जेन के हरसिद्धि पीठ के प्राधान मण्डव से

ध्यानश्लोक:

२. खञ्जरीरस्थिता पीता त्रिशिरा च त्रिशूलिनी।
खाख्या खद्योतिनी खड्ग वराऽभयाकरामतो।।

—सिद्धशाबरतन्त्रे

३. खश्चण्डो देवि! चण्डेश ऋण्डेश ऋद्धिश्चैव तथा गदी।।

(मन्त्राभिधानम्)

ख ।।२६।।

४. खः प्रचण्डः कामरूपी ऋद्धिर्व्वक्तिः सरस्वती।
आकाशमिन्द्रियं दुर्गा चण्डीशस्तापिनी गुरुः ।।६०।।
शिखण्डी दन्तजातीशः कफोनिर्गरुतो यतिः ।
शून्यं कपाली कल्याणी सूर्पकर्णोऽजरामरः ।।६१।।
श्वभ्रग्नेया चण्डलिङ्गो जनव्याहारखड्गकौ ।।६२।।

(प्रकारान्तर मन्त्राभिधानम्)

५. स्मृतिः पञ्चान्तकःशार्ङ्गी गणेशी मणिबन्धगः।
गोमुखो गजकुम्भश्च ग-कारः सिंहसंज्ञकः।।

(मातृका निघण्टुः)

## १९. श्री गकार मातृकापीठ रूपिणीः

### गं गायत्री देवी–धूमा देवी

### *गं*

१. गं ॐ ह्रीं श्रीं गं जालन्धर पीठाय नमः

उज्जैन के हर सिद्धि पीठ के प्रधान मण्डप से

ध्यानश्लोक:

२. गाख्या धूम्रा चतुर्वक्त्रा सिंहस्थाष्ट भुजा
धूम्राभादक्षिणे धत्तेशूलंपाक्षंसुववरम्।
वामेतु पुस्तकं कुडीम् कपालं भयं क्रमात्।।

—सिद्धशाबरतन्त्रे

३. ग-कारो देवि! शारङ्गी स्मृतिः पञ्चान्तकोऽपि च।

(मन्त्राभिधानम्)

ग ॥३३॥

४. गो गौरी गौरवो गङ्गा गणेशो गोकुलेश्वरः ।
शार्ङ्गी पञ्चान्तको गाथा गन्धर्व्वः सव्गः स्मृतिः।।६३।।
सर्व्वसिद्धिः प्रभा धूम्रा द्विजाख्यः शिवदर्शनः।
विश्वात्मा गौः पृथग्रूपा बालबद्धस्त्रिलोचनः ।।६४।।
गीतं सरस्वती विद्या भोगिनी नन्दनो धरा।
भोगवती च हृदयं ज्ञानं जालन्धरो लवः ।।६५।।

(प्रकारान्तर मन्त्राभिधानम्)

५. खड्गी शिवोत्तमो मेधा दक्षिणाङ्गुलिमूलकम्।
घनो घनस्वरश्चैव घ-कारोडादिमः स्मृतः।।

(मातृका निघण्टुः)




१९. धूम्रा देवी।




२०. (मूल में नाम दिया नही गया)

## २०. श्री घंकार मातृकापीठ रूपिणीः

### घं घण्टाकर्षिणी देवी

### घं

१. घं ॐ ह्रीं श्रीं घं मालव पीठाय नमः

ध्यानश्लोक:

२. कृष्ण वर्णा धरूपाच सुकरास्या कृशोदरी।
षडभुजा शूलखट्वांगवरान् दक्ष भुजैः क्रमात् ।
वामे खड्गं तथा खेटं अभयं शत्रुभाञ्जनी ।।

—सिद्धशाबरतन्त्रे

३. घ-कारश्च महेशानि! खड्गौ चैव शिवोत्तमः।

(मन्त्राभिधानम्)

घ ।।२५।।

४. घः खड्गी घुघुरो घण्टी घण्टीशस्त्रिपुरान्तकः ।
वायुः शिवोत्तमः सत्यं किङ्किणी गोरनादकः ।।६६।।
मरीचिर्व्वरुणो मेधा कालरूपी च दाम्भिकः ।
लम्बोदरा ज्वालमूलं नन्देशो हननं ध्वनिः ।।६७।।
त्रैलोक्यविद्या संहर्त्ता कामाख्यमनघामयः ।।५८।।

(प्रकारान्तर मन्त्राभिधानम्)

५. मूलेन उबलब्तनास्ती

(मातृका निघण्टुः)

## २१. श्री ङकार मातृकापीठ रूपिणीः

### ङं ङार्णी देवी–अरून्ध शक्ति

ङ

१. ङं ॐ ह्रीं श्रीं ङ कुलात पीठाय नमः

ध्यानश्लोक:

२. अनन्त शक्ति-र्देवेशी रक्ता वर्हिण वाहना।
षड़ाननेषुचापासि खेट् दानाभयान्विता।।

—सिद्धशाबरतन्त्रे

३. ङ-कारश्चेव रुद्रश्च शङ्खौ चैव वरानने!।।

(मन्त्राभिधानम्)

ङ ॥३०॥

४. ङः शङ्खी भैरवश्चण्डो विन्दूत्तंसः शिशुप्रियः ।
एकरुद्रो दक्षनखः खर्परो विषयस्पृहा ।।६९।।
कान्तिः श्वेताह्वयो धीरो द्विजात्मा ज्वालिनी वियत्।
मन्त्रशक्तिश्च मदनो विघ्नेशी चात्मनायकः ।।७०।।
एकनेत्रो महानन्दो दुर्द्धरश्चन्द्रमा यतिः ।
शिवयोषा नीलकण्ठः कामेशी च मयांशुकौ ।।७१।।

(प्रकारान्तर मन्त्राभिधानम्)

५. शङ्खको रुद्रकान्तिश्च दक्षाङ्गुल्यग्रसंस्थितः।
क्लीववक्तश्च भद्रेशो ङ-कारश्चानुनासिकः।।

(मातृका निघण्टुः)




२१. श्री अरुन्ध शक्ति देवी ।

## २२. श्री चकार मातृकापीठ रूपिणीः

### चं चण्डा देवी–सुशुमा देवी

### चं

१. चं ॐ ह्रीं श्रीं चं देवकोट पीठाय नमः

ध्यानश्लोक·

२. सुषुमाचैक वक्त्रैषा ह्यारूढा चतुर्भुजा।
खड्गखेट धराचाख्या वराभयकराशुभा।

--सिद्धशाबरतन्त्रे

३. च-कारः कूर्च्चसंज्ञः स्यात् कथितश्च प्रिये! हली।।

(मन्त्राभिधानम्)

च ॥३६॥

४. चः पुष्करो हली वाणी चात्मशक्तिः सुदर्शनः ।
चतुर्म्मुण्डधरश्चैव महिषाचारसम्बिनी ।।७२।।
एकरुपो रुचिः कुर्म्मश्चामुण्डा दीर्घबाहुकः ।
वामवाहुर्म्मूलमांया चतुर्म्मूर्त्तिस्वरूपिणी ।।७३।।
दयितश्च द्विनेत्रश्च लक्ष्मीस्त्रितयलोचनः ।
चन्दनं चन्द्रमा दैवश्चेतना वृश्चिको वुधः ।।७४।।
देवी कीटमुखीच्छात्मा कौमारी पूर्व्वफल्गुणी ।
अनङ्गमेखलावायुर्म्मेदिनी च कुलावती ।।७५।।

(प्रकारान्तर मन्त्राभिधानम्)

५. हली कुर्म्मेश्वरो लक्ष्मीर्व्वामबाहुर्द्दिशस्तथा।
चित्ताचारी चञ्चलश्च च-कारः स स्मृतो बुधैः।।

(मातृका निघण्टुः)

# २३. श्री छकार मातृकापीठ रूपिणीः

## छं छयार्ता देवी–निर्जरा देवी

## छं

**१. छं ॐ ह्रीं श्रीं छं गोकर्ण पीठाय नमः**

ध्यानश्लोकः

**२. छनिर्झरा रूधतीयं पीतामर्कटवाहना।**
**त्रिशूलं क्षुरिकां पाशं खेटं च दधती शुभा।।**

—सिद्धशाबरतन्त्रे

**३. छ-कारो मुषली ज्ञेय एकनेत्रश्च शैलजे!।**

(मन्त्राभिधानम्)

छ ॥२५॥

**४. छ-श्छन्दनं सुषुम्ना च पशुः पशुपतिर्म्मृतिः ।**
**निर्म्मलं तरलं वक्तिर्भूतमात्रा विलासिनी ।।७६।।**
**एकमात्रा च वृषली द्विशिरा वामकुर्परः ।**
**गोकर्णा लाङ्गली वामः कामकर्त्ता सदाशिवः ।।७७।।**
**माता निशाचरः पायुर्व्विक्षतः स्थितिशब्दकः ।।७८।।**

(प्रकारान्तर मन्त्राभिधानम्)

**५. एकनेत्रश्च मुषली वामकूर्परगोद्युतिः।**
**त्रिविन्दुकस्तथाचारी छ-कारः प्रेक्षकाभिधः।।**

(मातृका निघण्टुः)




२३. श्री निर्जलरुन्धति देवी।




२४. श्री भोगदा देवी ।

## २४. श्री जकार मातृकापीठ रूपिणीः

### जं जया देवी–भोगदा देवी

### जं

१. जं ॐ ह्रीं श्रीं जं मारूतेश्वर पीठाय नमः

ध्यानश्लोक:

२. जो भोगदा हिरक्तास्यात् त्रिणेत्रा सिंहवाहना।
चतुर्भुजा खड्ग खेट वराऽभय करान्विता।।

—सिद्धशाबरतन्त्रे

३. जः शिवोऽर्च्चिर्महेशानि! शूली च चतुराननः।

(मन्त्राभिधानम्)

ज ॥३५॥

४. जः शवो वानरः शूली भोगदा विजया स्थिरा।
ललदेवो जयो जेता धतकी सुमुखी विभुः ।।७९।।
लम्बोदरी स्मृतिः शाखा सुप्रभा कर्त्तृका धरा ।
दीर्घवाहूरुचिर्हंसो नन्दी तेजः सुराधिपः ।।८०।।
जवनो वेगिता वामो मानवाक्षः सदात्मकः ।
ह्नन्मारुतेश्वरो वेगी चामोदो मदविह्वलः ।।८१।।

(प्रकारान्तर मन्त्राभिधानम्)

५. स्थिरो जयन्तो जयजः शूली च चतुराननः।
मणिबन्धगतो वामो ज कारो जपको मतः।।

(मातृका निघण्टुः)

## २५. श्री झकार मातृकापीठ रूपिणीः

### झं झङ्कारिणी देवी–निर्झरनदी देवी

### झं

१. झं ॐ ह्रीं श्रीं झं अट्टहास पीठाय नमः

ध्यानश्लोकः

| |
|---|
| २. झोनिर्झरनदी देवी शरन्मेघनिभांबुजा<br>पाशंवराऽभयौ धत्ते नक्रस्था शुभदानृणाम्। |

—सिद्धशाबरतन्त्रे)

३. झः पाशी स्यादजेशश्च ञ-कारः सर्व्वकोऽङ्कुशी।

(मन्त्राभिधानम्)

झ ॥३५॥

४. झो झङ्कारी गुहो झञ्झावायुः सत्यः षडुन्नतः ।
अजेशो द्राविणी नादः पाशी जिह्वा जलं स्थितिः।।८२।।
विराजेन्द्रो धनुर्हस्तः कर्कशो नादजः कुजः।
दीर्घवाहुर्व्वलो रूपमाकन्दितः सुचञ्चलः ।।८३।।
दुर्म्मुखो नष्ट आत्मा च विकटाकुचमण्डलम् ।
कलहंसप्रिया वामा अङ्गुलोमध्यपर्व्वकः ।।८४।।
दक्षहा साट्टहासश्च पापात्मा व्यञ्जनं स्वरः।।८५।।

(प्रकारान्तर मन्त्राभिधानम्)

५. स्थितिः पाशी तथाहेशो वामाङ्गुलितलस्थितः।
स्वस्तिकं खण्डसंज्ञश्च झ-कारो जान्तसंज्ञकः।।

(मातृका निघण्टुः)




२५.  श्री निर्जरनदी देवी ।




२६. श्री प्रबोधिनी देवी ।

## २६. श्री ञकार मातृकापीठ रूपिणीः

### ञं ञानरूपा देवी–प्रभोधिनी देवी

### ञ.

१. ञं ॐ ह्रीं श्रीं ञं विस्चा पीठाय नमः

ध्यानश्लोकः

२. ञांख्या प्रबोधनीशुभ्रा सिंहस्था चित्स्वरूपिणी।
त्रिशूलांबुज चिन्मुद्राऽभयान्वित कराशुभा।

—सिद्धशाबरतन्त्रे

३. मूलेन उपलब्ध नास्तिः।

(मन्त्राभिधानम्)

ञ ॥२४॥

४. ञ-कारो वोधिनी विश्वा कुण्डली मखदी वियत् ।
कौमारी नागविज्ञानी सव्याङ्गुलनखो वकः ॥८९॥
सर्व्वेशश्चूर्णिता बुद्धिः स्वर्गात्मा घर्घरध्वनिः ।
धर्म्मैकपादौ सुमुखी विरजा चन्दनेश्वरी ॥८७॥
गायनः पुष्पधन्वा च वागात्मा च वराक्षिणी ॥८८॥

(प्रकारान्तर मन्त्राभिधानम्)

५. वामाङ्गुल्यग्रतः सिद्धिरङ्कुशः सर्व्वसंक्षकः।
क्षप्रियोह्यनुनासश्च ञ-कारश्च निरञ्जनः॥

(मातृका निघण्टुः)

## २७. श्री टकार मातृकापीठ रूपिणीः

### टं टङ्कहस्ता देवी–धारिणी देवी

### टं

१. टं ॐ ह्रीं श्रीं टं राजगृह पीठाय नमः

ध्यानश्लोकः

| |
|---|
| २. टाख्या च धारिणी देवी शूल टंकवराऽ भयान्।<br>धत्ते मतमतंग स्थापाटला भा सितांशुका।। |

—सिद्धशाबरतन्त्रे

३. ट-कारी देवि! सोमेशो मुकुन्दश्च प्रकीर्त्तितः।।

(मन्त्राभिधानम्)

ट ॥२७॥

४. ट-ष्टङ्कारः कपाली च सोमजा खेचरी ध्वनिः ।
मुकुन्दो विनदा पृथ्वी वैष्णवी वारुणी नवः ।।८९।।
दक्षाङ्गकार्द्धचन्द्रौ च जरा भूतिः पुनर्भवः ।
वृहस्पतिधनुश्चित्रा प्रमदा विमला कटिः ।।९०।।
राजगिरिर्म्महाधनुर्ध्राणात्मा सुमुखो मरुत् ।।९१।।

(प्रकारान्तर मन्त्राभिधानम्)

५. जरा मुकुन्दः सोमेशो दक्षपादादिगोमुखम्।
गजाङ्कुशश्च बालेन्दुरमृताद्यष्ट-कारकः।।

(मातृका निघण्टुः)




२७. श्री धारिणी देवी।




२८. श्री क्रिया सरस्वती देवी।

# २८. श्री ठकार मातृकापीठ रूपिणीः

## ठं ठङ्कारिणी देवी–क्रिया सरस्वती देवी

## ठं

१. ठं ॐ ह्रीं श्रीं ठं महापथ पीठाय नमः

ध्यानश्लोकः

२. क्रिया सरस्वती ठाख्या टंकांकुश वराऽभयान्।
धत्ते सिंह वरारूढा चैकवक्त्रारूणामता।।

—सिद्धशाबरतन्त्रे

३. ठ-कारो लाङ्गली चन्द्रो नन्दयोनिर्निगात्मजे!।

(मन्त्राभिधानम्)

ठ ॥३१॥

४. ठः शून्यं मञ्जरी वीजं पाणिनी लाङ्गली क्षयः ।
वनजो नन्दनो जिह्वा सुमञ्जुघूर्णनं सुधा ।।९२।।
वर्त्तुलः कुण्डलं वक्तिरमृतं चन्द्रमण्डलः ।
दक्षजानूरुभावश्च देवभक्षो वृहद्ध्वनिः ।।९३।।
एकपादो विभूतिश्च ललाटं सर्व्वमित्रकः ।
वृषघ्नो नलिनी विष्णुर्म्महेशो ग्रामणीः शशी ।।९४।।

(प्रकारान्तर मन्त्राभिधानम्)

५. लाङ्गलीशो नदज्ञश्च पालिनी च कमण्डलुः।
दक्षजानुरतः स्थायी ठ-कारः स्थविरः स्मृतः।।

(मातृका निघण्टुः)

# २९. श्री डकार मातृकापीठ रूपिणीः

## डं डार्मया देवी–डकारिणी देवी

## डं

१. डं ॐ ह्रीं श्रीं डं कोल्लगिरी पीठाय नमः

ध्यानश्लोकः

२. डकारिणी पंचवक्त्रा सिता टंक गदा धरा।
चतुर्बाहुः कुक्कुटस्था वराऽभयकराचसा।।

—सिद्धशाबरतन्त्रे

३. ड-कारश्च महेशानि! खड्गार्द्धाकारसंज्ञकः।।

(मन्त्राभिधानम्)

ड ॥२४॥

४. डः स्मृतिर्द्दारुको नन्दिरूपिणी योगिनी प्रियः ।
कौमारी शङ्करस्त्रासस्त्रिवक्त्री नदको ध्वनिः ।।९५।।
दुरूहो जटिलो भीमा द्विजिह्वः पृथिवी सती ।
कोलगिरिः क्षमा शान्तिर्नाभिः स्वाती च लोचनम्।।९६।।

(प्रकारान्तर मन्त्राभिधानम्)

५. नन्दी क्षान्तिर्द्धारकश्च चामरी दक्षगुलफगः।
व्याघ्रपादः शुभाङ्घ्रिश्च ड-कारो भौमजः स्मृतः।।

(मातृका निघण्टुः)




२९. श्री डकारिणी देवी ।




३०. श्री घना देवी ।

# ३०. श्री ढकार मातृकापीठ रूपिणीः

## ढं ढङ्कारिणी देवी–श्री घना देवी

## ढं

१. ढं ॐ ह्रीं श्रीं ढं एलापुर पीठाय नमः

ध्यानश्लोकः

२.ढरूपिणी श्रीधनाख्या पञ्चवक्त्रा मयूरगा।
तटित्गौरी करैर्धत्ते शूल ढंकवरा भयान्।।

—सिद्धशाबरतन्त्रे

३. ढ-कारश्चार्द्धनारीशो नवश्च परमेश्वरि!।

(मन्त्राभिधानम्)

ढ ।।३१।।

४. ढो ढक्का निर्णयः पूर्व्वो यक्षेशश्च नदेश्वरः।
अर्द्धनारीश्वरस्तोयमीश्वरी त्रिशिखी नवः ।।९७।।
दक्षपादाङ्गुलेर्म्मूलं सिद्धिदण्डो विनायकः।
ग्रहासस्विभवा ऋद्धिर्निर्गुणो निधनं ध्वनिः ।।९८।।
विघ्नेशः पालिनी त्वक् कधारिणी क्रोड़पुच्छकः।
एलापुरं त्वगात्मा च विशाखा श्रीर्म्मनो रतिः ।।९९।।

(प्रकारान्तर मन्त्राभिधानम्)

५. ईश्वरश्चार्द्धनारीशो नरः शङ्खान्तराकृतः।
दायादोऽङ्गुलमूलश्च ढ-श्च सङ्कोचकारकः।।

(मातृका निघण्टुः)

## ३१. श्री णकार मातृकापीठ रूपिणीः

### णं णार्णा देवी—अनन्दशक्तिः देवी

### णं

१. णं ॐ ह्रीं श्रीं णं कालेश्वर्र पीठाय नमः

ध्यानश्लोक:

२. णो नन्त शक्ति र्देवेशी रक्ता बर्हिण वाहना।
एक वक्त्रा शूल शक्ति वराऽ भय कराशुभा।।

—सिद्धशाबरतन्त्रे

३. ण-कारश्चाप्युमाकान्तो विज्ञेयो नरजित् प्रिये!।।

(मन्त्राभिधानम्)

ण ॥२२॥

४. णो निर्गुणो रतिर्ज्ञानं जृम्भनः पक्षिवाहणः।
जया शम्भुर्नरकजित् निष्कला योगिनी प्रियः।।१००।।
द्विमुखं कोटवी श्रोत्रं समृद्धिर्बोधिनी मता।
राघवः शङ्खिनी वीरो नारायणश्च निर्णयः।।१०१।।

(प्रकारान्तर मन्त्राभिधानम्)

५. उमाकान्तो नरकजिद्रतिर्दक्षपदाग्रगः।
निर्व्वाणस्त्रिगुणाकारस्त्रिरेखो णः समीरितः।।

(मातृका निघण्टुः)




३१. श्री अनन्द शक्ति देवी।

# ३२. श्री तकार मातृकापीठ रूपिणीः

## तं तमस्या देवी–सरस्वती देवी

## तं

१. तं ॐ ह्रीं श्रीं तं जयंतिका पीठाय नमः

ध्यानश्लोक:

२. ताख्या सरस्वती शुभ्रा सित पद्माननांशुका।
एक वक्त्रा करैर्धत्ते वीणा तन्त्री वराऽभयान्।।

—सिद्धशाबरतन्त्रे

३. त-कारी हरिराख्यात आपटी च वरानने!।

(मन्त्राभिधानम्)

त ॥३१॥

४. तः पूतना हरिः शुद्धिः शक्तिः शक्तिजटाध्वजा ।
वामस्फिग्वामकट्यौ च कामिनी मध्यकर्णकः ।।१०२।।
आषाढ़ी तण्डतुस्नश्च कामिका पृष्ठपुच्छकः ।
रत्नकश्च श्याममुखी वाराही मकरोऽरुणः ।।१०३।।
सुगतोऽर्ध्वमुखी बुद्धजानुश्च क्रोड़पुच्छकः ।
गन्धो विम्बं मरुच्छत्रश्चानुराधा च सौरकः ।।१०४।।
जयन्ती पुलको भ्रान्तिरनङ्गमदनातुरा ।।१०५।।

(प्रकारान्तर मन्त्राभिधानम्)

५. वामोरुर्म्मीननिलय आषाढ़ी कामिको हरिः।
तीव्रश्च तरलो नीलस्त-कारः कीर्त्तितो बुधैः।।

(मातृका निघण्टु:)




३४.   श्री भोगदायिनी देवी ।

## ३४. श्री दकार मातृकापीठ रूपिणीः

### दं दाक्षायण्या देवी–भोगदायिनी देवी

### दं

१. दं ॐ ह्रीं श्रीं दं चरित्र पीठाय नमः

ध्यानश्लोक:

| | |
|---|---|
| २. | एक वक्त्रारूणा दाख्याऽ षृभुजा भोगदायिनी।<br>धत्तेब्जं शारिकां वीणाडमर्वण वराऽ भयान्।। |

—सिद्धशाबरतन्त्रे

३. द-कारः सत्यसंज्ञः स्याददद्रिश्च परमेश्वरि!।

(मन्त्राभिधानम्)

द ।।३९।।

४. दोऽद्रीशो धानकिर्धाता दाता दलं कलत्रकम् ।
दीनं ज्ञानञ्च दानञ्च भक्तिराहवनी धरा ।।१०९।।
सुषुम्ना योगिनी सद्यः कुण्डलं वामगुल्फकः ।
कात्यायनी शिवा दुर्गा लङ्गना ना त्रिकण्टकी ।।११०।।
स्वस्तिकः कुटिलारूपः कृष्णश्चोमा जितेन्द्रियः।
धर्म्महृद्वामदेवश्च भ्रमिर्व्वाहुः सुचञ्चला ।।१११।।
हरिद्रा पूरमद्रिश्च दक्षपाणिस्त्रिरेखकः ।।११२।।

(प्रकारान्तर मन्त्राभिधानम्)

५. शसः श्रीशो ह्लादिनी च वामगुल्फगतस्तथा।
शूलः कुवेरी दाता च द-कारो धादिमः स्मृतः।।

(मातृका निघण्टुः)

## ३५. श्री धकार मातृकापीठ रूपिणीः

### धं धत्तया देवी–अमला देवी

### धं

१. धं ॐ ह्रीं श्रीं धं क्षीरक पीठाय नमः

ध्यानश्लोक:

२. श्यामला चामला धाख्या हलेकवक्त्रा चतुर्भुजा।
वृषस्था शारिका मब्ज करै र्धत्ते वराऽभयौ।

—सिद्धशाबरतन्त्रे

३. ध-कारश्च महेशानि! मीनः सानुग एव च।।

(मन्त्राभिधानम्)

ध ।।३४।।

४. धो धनार्थो रुचिः स्थाणुः शाश्वतो योगिनीप्रियः ।
मीनेशः शङ्खिनी तोयं नागेशो विश्वपावनी ।।११३।।
धिषणा धारणा चिन्ता नेत्रयुग्मं प्रियो मतिः।
पीतवासास्त्रिवर्णा च धाता धर्म्मप्लवङ्गमः ।।११४।।
सन्दर्शो मोहनो लज्जा वज्रतुण्डाधरो धरा ।
वामपादाङ्गुलेर्म्मूलं ज्येष्ठा सुरपुरं भवः ।।११५।।
स्पर्शात्मा दीर्घजङ्घा च धनेशो धनसञ्चयः ।।११६।।

(प्रकारान्तर मन्त्राभिधानम्)

५. मीनेशः सात्वतः प्रीतिर्व्वामपादाङ्गुलीगतः।
धर्म्मेशो धरणीशश्च ध-कारो दान्तिमो मतः।।

(मातृका निघण्टुः)




३५.  श्री अमला देवी ।




३६. श्री अनन्द शक्ति देवी।

# ३६. श्री नकार मातृकापीठ रूपिणीः

## नं नार्या देवी–अनतत्रशक्तिः

### नं

१. नं ॐ ह्रीं श्रीं नं हस्तीनापुर पीठाय नमः

ध्यानश्लोक:

२. नोनन्तशक्ति र्देशी मत्तमातंग संस्थिता।
एक वक्त्रा तटिद्गौरी धत्ते पद्म वराऽयाम्।।

—सिद्धशाबरतन्त्रे

३. न-कारो मेषसंज्ञः स्याद्दीर्घी सौरिश्च कीर्त्तितः।

(मन्त्राभिधानम्)

न ॥३५॥

४. नो गर्ज्जिनी क्षमा सौरिर्व्वारुणी विश्वपावनी ।
मेषश्च सविता नेत्रं दन्तुरा नारदोऽञ्जनः ।।११७।।
ऊर्ध्ववासी द्विरण्डश्च वामपादाङ्गुलेर्म्मुखम् ।
वैनतेयस्तुतिर्व्वर्त्म तरणिर्व्वालिरागमः ।।११८।।
वामनी ज्वालिनी दीर्घो निरीहः सुगतिर्व्वियत् ।
शब्दात्मा दीर्घघोणा च हस्तिनापुरमेचकौ ।।११९।।
गिरनायकनीलौ च शिवोऽनादिर्म्महामतिः ।।१२०।।

(प्रकारान्तर मन्त्राभिधानम्)

५. शर्व्वोमन्त्रेश्वरो दीर्घो वामपादाङ्गुलाग्रगः।
नरो नदी च नादी च न-कारश्चानुनासिकः।।

(मातृका निघण्टुः)

## ३७. श्री पकार मातृकापीठ रूपिणीः

### पं पार्वती देवी–इच्चा शक्ति

### पं

**१. पं ॐ ह्रीं श्रीं पं उडीश पीठाय नमः**

ध्यानश्लोकः

**२. पाख्येच्छा शक्ति रूपेयं शूल शक्ति वराऽभयान्।**
**धत्ते करैः पञ्चवक्त्रा फुल्लपद्मासनारूणा ।।**

—सिद्धशाबरतन्त्रे

**३. प-कारो लोहितः पार्श्वं शूरश्च परमेश्वरि!।।**

(मन्त्राभिधानम्)

प ॥३८॥

**४. पः पूरप्रियता तीक्ष्णा लोहितः पञ्चमो रमा ।**
**गुह्यकर्त्ता निधिः शेषः कालरात्रिः सुवाहिता ।।१२१।।**
**तपनः पालनः पाता पद्मरेणुर्निरञ्जनः ।**
**सावित्री पातिनी पानं नीरतत्त्वं धनुर्द्धरः ।।१२२।।**
**दक्षपार्श्वश्च सेनानीर्म्मरीचिः पवनः शनिः ।**
**उड्डीशं जयिनी कुम्भोऽलसो रेखा च मोहकः ।।१२३।।**
**मूला द्वितीयमिन्द्राणी लोकाक्षी मनतात्मनः ।।१२४।।**

(प्रकारान्तर मन्त्राभिधानम्)

**५. तीक्ष्णा च लोहितः शूरो दक्षपाणिश्च पार्थिवः।**
**पद्मेशो नान्तिमः फादिः प-कारोऽपि प्रकीर्त्तितः।।**

(मातृका निघण्टुः)




३७. श्री इच्छा शक्ति देवी।




३८. श्री आतपकोमला देवी ।

# ३८. श्री फकार मातृकापीठ रूपिणीः

## फं फदकारिणी देवी–आतपकोमलादेवी

**फं**

**१. फं ॐ ह्रीं श्रीं फं प्रयाग पीठाय नमः**

उज्जैन के हरिसिद्धि पीठ के प्रधान मण्डप से

ध्यानश्लोकः

**२. पञ्चवक्त्रोग्रसिंहस्था पाटला तपकोमला।**
**फाख्याशुकैणासिखेट वराभयधराशरान् ।।**
**पाशं च डमरू धत्ते क्रमेणा दशभि करैः।**

—सिद्धशाबरतन्त्रे

**३. फ-कारश्च महेशानि! शिखौ चैव जनार्दनः।**

(मन्त्राभिधानम्)

फ ॥३२॥

**४. फः सखी दुर्गिणी धूम्रा वामपार्श्वी जनार्दनः ।**
**जयापादः शिखा रौद्री फेत्कारः शाखिनीप्रियः।।१२५।।**
**उमा विहङ्गमः कालकुब्जिनी प्रियपावकौ ।**
**प्रलयाग्निर्नीलपादोऽक्षरः पशुपतिः शशी ।।१२६।।**
**फुत्कांरो यामिनी व्यक्ता पावनी मोहवर्द्धनः ।**
**निष्फला वागहङ्कारः प्रयागो ग्रामणीः फलम ।।१२७।।**

(प्रकारान्तर मन्त्राभिधानम्)

**५. जनार्द्दनः शिखी रौद्री वामपार्श्वकृतालयः।**
**फट्कारः प्रोच्वते सद्भिः फ-कारः पान्तिमस्तथा।।**

(मातृका निघण्टुः)

## ३९. श्री बकार मातृकापीठ रूपिणीः

### बं बन्धिनी देवी–चित्श्यामला देवी

### बं

१. बं ॐ ह्रीं श्रीं बं षष्ठीश पीठाय नमः

ध्यानश्लोक:

२. तिच्छयामलाबभ्रुवर्णा सिंहारूढा वरूपिणी।
धत्ते क्रमेण दशभिः करैः पूर्व वदायुधान।।

—सिद्धशाबरतन्त्रे

३. ब-कारो भूधरश्चैव दशो गण्डी वरानने!।।

(मन्त्राभिधानम्)

ब ।।४५।।

४. बोऽवनी भूधरो मार्गो घर्घरी लोचनप्रियः ।
प्रचेताः कलसः पक्षी छगलण्ड स्थलगण्डः कपर्द्दिनी।।१२८।।
पृष्ठवंशोऽभया माता शिखिवाहो युगन्धरः।
मुखविन्दुर्व्वली घण्टा योद्धा त्रिलोचनप्रियः।।१२९।।
क्लेदिनी तापिनी भूमिः सुगन्निन्द्रोबलिः प्रियः ।
सुरभिर्म्मुखविष्णू च संहारो वसुधाधिपः।।१३०।।
षष्ठी पुरं च पेटा च मोदको गगनं प्रति।
पूर्व्वाषाढ़ा मध्यलिङ्गे शनिः कुम्भतृतीयकौ ।।१३१।।

(प्रकारान्तर मन्त्राभिधानम्)

५. छगलण्डो भूधरश्चाभया पृष्ठं गतस्तथा।
सुरसी बज्त्रमुष्टिश्च ब-कारी भादिमोऽपि च।।

(मातृका निघण्टुः)




३९. श्री चित्श्यामला देवी।




४०. श्री श्यामला देवी ।

## ४०. श्री भकार मातृकापीठ रूपिणीः

### भं भद्रकाली देवी–श्यामला देवी

**भं**

१. भं ॐ ह्रीं श्रीं भं मायापुरी पीठाय नमः

ध्यानश्लोकः

२. भारूपातुश्या भला चैक वक्रा भद्रासनेस्थिता।
उद्यद्रवि निभा धत्ते शरचाप वराऽभर्यान।।

—सिद्धशाबरतन्त्रे

३. भ-कारश्च द्विवचनो विश्वमूर्त्तिश्च कीर्त्तितः।

(मन्त्राभिधानम्)

भ ।।३३।।

४. भः क्लिन्ना भ्रमरो भीमो विश्वमूर्त्तिर्निशाह्वयः ।
द्विरण्डो भूषणं मूलं यक्षसूत्रस्य वाचकः ।।१३२।।
नक्षत्रं भ्रमणा दीप्तिर्व्वयो भूमिः पयो नभः ।
नाभिर्भद्रं महावाहुर्व्विश्वमूर्त्तिर्व्विभाण्डकः ।।१३३।।
प्राणात्मा तापिनी वज्रा विश्वरूपी च चन्द्रिका ।
भीमसेनः सुधासेनः सुखं माया पुरं हरः ।।१३४।।

(प्रकारान्तर मन्त्राभिधानम्)

५. विश्वमूर्त्तिर्द्विरण्डेशो निद्रा नाभिगतस्तथा।
भृकुटी च भरद्वाजो भ-कारश्च भयावहः।।

(मातृका निघण्टुः)

# ४१. श्री मकार मातृकापीठ रूपिणीः

## मं महामाया देवी–विद्याश्यामल देवी

## मं

१. **मं ॐ ह्रीं श्रीं मं जलेश्वर पीठाय नमः**

उज्जैन के हरसिद्धि पीठ के प्रधान मण्डप से

ध्यानश्लोक:

२. **मो विद्या-श्यामला देवी ह्यास्या व स्फटिक प्रभा।**
**वीणावादन तत्त्वज्ञावराऽज्ञयकराशुभा**

—सिद्धशाबरतन्त्रे

३. **म आदित्यो महाकालो वैकुण्ठोऽपि विषं प्रिये!।।**

(मन्त्राभिधानम्)

म ।।३८।।

४. **मः काली क्लेशितः काली महाकालो महान्तकः ।**
**वैकुण्ठो वसुधा चन्द्रो रविः पुरुषवाचकः ।।१३५।।**
**कालभद्रो जया मेधा विश्वदा दीप्तसंज्ञकः ।**
**जठरश्च भ्रमा मानं लक्ष्मीर्म्मातोग्रबन्धने ।।१३६।।**
**विषं शिवो महावीरः शशिपुत्रो जनेश्वरः ।**
**प्रमत्तः प्रियसूरुद्रः सर्व्वाङ्गं वक्तिमण्डलम् ।।१३७।।**
**मातङ्गमालिनी विन्दुः श्रवणाभं रथो वियत् ।।१३८।।**

(प्रकारान्तर मन्त्राभिधानम्)

५. **वैकुण्ठश्च महाकालस्तन्द्री जठरसंस्थितः।**
**मन्त्रेशो मण्डलो मानी विषं सूर्य्यो म-कारकः।।**

(मातृका निघण्टुः)




४१. श्री विद्या श्यामला देवी।




४२. श्री दीबिनी देवी ।

# ४२. श्री यकार मातृकापीठ रूपिणीः

## यं यशस्विनी देवी–दीपिनी देवी

### यं

१. यं ॐ ह्रीं श्रीं यं मलयगिरी पीठाय नमः

ध्यानश्लोकः

| | |
|---|---|
| २. | याख्यैमं दीपिनी देवी सिंहस्थाष्टभुजा सिता। |
| | शूल चापेषु पाशासि खेटदानाऽभयान्विता।। |

—सिद्धशाबरतन्त्रे

३. य-कारः पवनः काली पुरुषोत्तम एव च।

(मन्त्राभिधानम्)

य ।।४९।।

४. यो वाणी वसुधा वायुर्व्विकृतिः पुरुषोत्तमः ।
युगान्तश्वसनः शीघ्रं धूम्रार्च्चिः प्राणिसेवकः ।।१३९।।
शङ्खभ्रमो जटी लोला वायुवेगी यशस्करः ।
सङ्कर्षणः क्षपा वाली हृदयं कपिला प्रभा ।।१४०।।
आग्नेयो व्यापकस्त्यागो होमो यानं प्रमा सुखम्।
चण्डः सर्व्वेश्वरी धूमश्चामुण्डा सुमुखेश्वरी ।।१४१।।
त्वगात्मा मलयो माता हंसिनी भृङ्गनायकः ।
चेतना शोषको मीनो धनिष्ठानङ्गवेदिनी ।।१४२।।
मेषः सोमः पङ्क्तिनामा पापहा प्राणसंक्षकः ।।१४३।।

(प्रकारान्तर मन्त्राभिधानम्)

५. क्षुधा वाली च वायुस्त्वगहृद्गतः पुरुषोत्तमः।
यमुना यामुनेयश्च य-कारो मान्तिमः स्मृतः।।

(मातृका निघण्टुः)

## ४३. श्री रकार मातृकापीठ रूपिणीः

### रं रक्ता देवी–रेचिश्वा देवी

### रं

१. रं ॐ ह्रीं श्रीं रं शैल पीठाय नमः

ध्यानश्लोकः

२. रंफारूपा रेचिका श्यामा सिंहस्था लोहितां शुका।
पंञ्चाम्याष्टकरैधत्ते दक्ष वामा क्रमेणासा
खडगखेटां कुश गदा पाशंशूल वराऽ भायान्मयान्।।

—सिद्धशाबरतन्त्रे

३. रोऽसुः पञ्चकसीशोऽग्निरङ्कुशं परगुर्व्विणी।।

(मन्त्राभिधानम्)

र ॥४२॥

४. रो रक्तः क्रोधिनी रेफः पावकस्त्वौजसी मतः ।
प्रकाशो दर्शनो दीपो वत कृष्णः परं वली ।।१४४।।
भुजङ्गेसो मतिः सूर्य्यो धातुरक्तप्रकाशकः ।
व्यापको रेवती दाम क्रौञ्चांशौ वक्तिमण्डलम् ।।१४५।।
उग्ररेखा स्थूलदण्डो वेदकण्ठकला पुरा ।
प्रकृतिः सुगतो ब्रह्मशब्दश्च गायको धनम् ।।१४६।।
श्री कण्ठ उष्मा हृदयं सुण्डी त्रिपुरसुन्दरी ।
सविन्दुर्योनिजो ज्वाला श्रीशैलो विश्वतोमुखी ।।१४७।।

(प्रकारान्तर मन्त्राभिधानम्)

५. क्रोधिनी च भुजङ्गेशो वाली रुधिरपावकौ।
रो विम्बं दक्षिणांशश्च रुचिरो रेफ ईरितः।।

(मातृका निघण्टुः)




४३. श्री रेचिका देवी।




४४. श्री मोहिनी देवी ।

# ४४. श्री लकार मातृकापीठ रूपिणीः

## लं लम्बोष्ठि देवी–मोहिनी देवी

## लं

१. लं ॐ ह्रीं श्रीं लं मेरुगिरी पीठाय नमः

ध्यानश्लोक:

२. लत्मिका मोहिनी देवी स्वर्णामा गजसिंहस्थिता।
षड्भुजां कुशशूलासि खेटदानाऽभयान्विता ।।

(सिद्धशाबरतन्त्रे)

३. ल-कारश्च पिणाकीश इन्द्रांशांशं बलानुजः।।

(मन्त्राभिधानम्)

ल ।।३५।।

४. लश्चन्द्रः पूतना पृथ्वी माधवः शक्रवाचकः ।
बलानुजः पिनाकीसो व्यापको मांससंज्ञकः ।।१४८।।
खड्गी नादोऽमृतं देवी लवणं वारुणी पतिः ।
शिखा वाणी क्रिया माता भामिनी कामिनीप्रिया।।१४९।।
ज्ञानिनी वेगिनी नाथः प्रद्युम्नः शोषणो हरिः ।
विश्वात्ममन्दौ बलवान् मेरुर्गिरिः कलारसः ।।१५०।।

(प्रकारान्तर मन्त्राभिधानम्)

५. क्रिया ककुदो मांसश्च पिनाकी भूर्व्वलानुजः।
नयश्च शठसंज्ञश्च वायवीयो ल-कारकः।।

(मातृका निघण्टुः)

## ४५. श्री वकार मातृकापीठ रूपिणीः

### वं वरदा देवी–पारायणी देवी

### वं

१. वं ॐ ह्रीं श्रीं वं गिरीवर पीठाय नमः

ध्यानश्लोकः

| |
|---|
| २. वाख्या नारायणी देवी स्फटिकाभारूणांशुका।<br>स्फुट पद्मासना धत्ते पद्मद्वय वराऽभयान् ।। |

—सिद्धशाबरतन्त्रे

३. व-कारी वरुणी वालो मेदः खड्गीश्वरोऽजरः।।

(मन्त्राभिधानम्)

व ॥२१॥

४. वो वालो वारुणी सूक्ष्मा वरुणो मेदसंज्ञकः।
खड्गीशो ज्वालिनी वक्षः कलसध्वनिवाचकः।।१५१।।
उत्कारीशस्तु नीवीको वज्रं स्फिक् सागरः शुचिः।
त्रिधातुः शङ्करः श्रेष्ठो विशेषो यमसादनम्।।१५२।।

(प्रकारान्तर मन्त्राभिधानम्)

५. बाली वामांसनिलयो मेदो वारिदवारुणी।
हत्कारी जलसंज्ञश्च चण्डीशोऽपि व-कारकः।।

(मातृका निघण्टुः)




४५. श्री पारायणी देवी ।




४६. श्री मंगला गौरी देवी ।

# ४६. श्री शकार मातृकापीठ रूपिणीः

## शं श्रिं देवी–मंगलगौरी देवी

## शं

१. शं ॐ ह्रीं श्रीं शं महेन्द्रगिरी पीठाय नमः

ध्यानश्लोकः

२. शाख्या मंगलगौरीतु तप्तजाम्बूनदप्रभा
सहस्त्रपद्मपीठस्था दिव्याऽभरण भूषिता।।
चतुर्भुजा करैर्धति पद्म द्वयवराऽभयान्

—सिद्धशाबरतन्त्रे

३. श-कारश्च महेशानि! वृषघ्नः कथितो वकः।

(मन्त्राभिधानम्)

श ॥३०॥

४. शः सव्यश्च कामरूपी कामरूपो महामतिः।
सौख्यनामा कुमारोऽस्थि श्रीकण्ठो वृषकेतनः।।१५३।।
वृषघ्नः शयनं शान्तः सुभगा विस्फुलिङ्गिनी।
मृत्युदेवो महालक्ष्मीर्म्महिन्द्रः कुलकौलिनी।।१५४।।
वाहुर्हंसी वियद्वक्त्रं हृदनङ्गाङ्कुशः खलः।
वामोरुः पुण्डरीकात्मा कान्तिः कल्याणवाचकः।।१५५।।

(प्रकारान्तर मन्त्राभिधानम्)

५. मृत्युर्व्वको वृषघ्नश्च हृदो दक्षकरस्थितः।
शङ्कुकर्णोऽस्थिसंक्षज्ञ श-कारो विद्धिरीरितः।।

(मातृका निघण्टुः)

## ४७. श्री षकार मातृकापीठ रूपिणीः

### षं षण्डा देवी–अनुक्रिया देवी

### षं

१. षं ॐ ह्रीं श्रीं षं वामनपुर पीठाय नमः

ध्यानश्लोक:

| | |
|---|---|
| २. | रक्ता भानुक्रिया देवी राजहंस वरस्थिता।<br>पीताम्बरा करैधत्ते पद्मद्वय वराऽभयान्।। |

—सिद्धशाबरतन्त्रे

३. ष-कारः श्वेत आख्यातो मूर्द्धन्यो वृषसंज्ञकः।।

(मन्त्राभिधानम्)

ष ॥३१॥

४. षः श्वेतो वासुदेवश्च पीतं प्रज्ञा विनायकः।
परमेष्ठी वामबाहुः श्रेष्ठो गर्भविमोचनः।।१५९।।
लम्बोदरो यमोऽजेशः कामधुक् कामधूमकः।
सुश्रीरुष्मा वृषो लज्जा मरुद्धक्ष्यः प्रियः शिवः।।१५७।।
सूर्य्यात्मा जठरः कोषो मत्ता वक्षोविदारिणी।
कलकण्ठो मध्यभिन्ना युद्धात्मा खलपूः शिरः।।१५८।।

(प्रकारान्तर मन्त्राभिधानम्)

५. वृष श्वेतेश्वरः पीता मज्जा तृड्वामबाहुगः।
षड़ाननः षड़ाकारः ष-कारः कीर्त्तितो बुधैः।।

(मातृका निघण्टुः)




४७. श्री अनुक्रिया देवी ।




४८. श्री सिध्दिक्रिया देवी ।

## ४८. श्री सकार मातृकापीठ रूपिणीः

### सं सरस्वती देवी–सिद्धक्रिया देवी

### सं

१. सं ॐ ह्रीं श्रीं सं रण्यपुर पीठाय नमः

ध्यानश्लोक:

२. सिद्धक्रिया सकाराख्या सिताम्बुज निवासिनी।
पाटलाभा करै र्धत्ते चिदं बुजवराऽभयान्।।

—सिद्धशाबरतन्त्रे

३. सः कुली शक्तिराख्यातो हंसो दुःखीशसंज्ञकः।
भृगुर्देवी च परमा चन्द्रोऽपि परमेश्वरि!।।

(मन्त्राभिधानम्)

स ।।३९।।

४. सो हंसः सुयशा विष्णुर्भृग्वीशश्चन्द्रसंज्ञकः।
जगद्बीजं शक्तिनामा सोऽहं वेगवती भृगुः।।१५९।।
प्रकृतिरीश्वरः शुद्धः प्रभा श्वेतः कुलोज्ज्वलः।
दक्षपादोऽमृतं ब्राह्मी परमात्मा परोऽक्षरः।।१६०।।
सुरूपश्च गुणेशो गौः कलकण्ठो वृकोदरः।
प्राणाद्यश्च पुरादेवी लक्ष्मीः सोमो हिरण्यभूः।।१६१।।
दुर्गोत्तारिणी सम्मोहा जीवो मूर्त्तिर्म्मनोहरः।।१६२।।

(प्रकारान्तर मन्त्राभिधानम्)

५. भृगुः श्वेतस्तथा हंसो हृदो दक्षिणपादगः।
समयः सामगः शुक्रः सङ्गतिः सार्णकः शशी।।

(मातृका निघण्टुः)

# ४९. श्री हकार मातृकापीठ रूपिणीः

## हं हंसवत्या देवी–आध्यायिनी देवी

## हं

१. हं ॐ ह्रीं श्रीं हं महालक्ष्मी पीठाय नमः

ध्यानश्लोक:

२. आध्यायिनी हकाराख्या मत्तमातंग वाहना।
पाटलभा करैर्धत्ते चिदं बुज वराऽमयान्।

(सिद्धशाबरतन्त्रे)

३. ह-कारो नकुलीशोऽपि हंसः प्राणोऽङ्गुलं प्रिये!।
महेशो नकुली चैर वराहो गगनं रविः।।

(मन्त्राभिधानम्)

ह ॥३८॥

४. हः शिवो गगनं हंसी नागलोकोऽम्बिकापतिः।
नकुलीशो जगत्प्राणः प्राणेशः कपिलाऽमलः।।१६३।।
परमात्मात्मजो जीवो यवाकः शान्तिदोऽङ्गनम्।
मृगोभयाऽरुणाः स्थाणुः क्रोष्टुः कूपविरावणः।।१६४।।
लक्ष्मीर्ब्रह्मा हरिः शम्भुः प्राणशक्तिर्ललाटजः।
स्वकोपवारणः शूली चैतन्यं पादपूरणः।।१६५।।
महालक्ष्मीः परं शम्भुः शाखोटः सोममण्डलम्।।१६६।।

(प्रकारान्तर मन्त्राभिधानम्)

५. नभो वराहो नकुली हृदो वामपदः स्थितः।
सदाशिवोऽरुणः प्राणी हयग्रीवो ह-कारकः।।

(मातृका निघण्टुः)

## श्री भगवान धन्वन्तरी






५०. श्री बन्धमोचिनी देवी।

## ५०. श्री ळकार मातृकापीठ रूपिणीः

### ळं बन्धमोचिनी देवी--बन्धमोचिनी देवी

ळं

१. ळं ॐ ह्रीं श्रीं ळं उड्यान पीठाय नमः

ध्यानश्लोक:

२. ळोबंध मोहिनी देवी स्वर्णाभा गजसंस्थिता।
षड्भुजां कुश शूलासि खेट दानाऽभयान्विता।।

—सिद्धशाबरतन्त्रे

३. ळकारो विमलो जीवः शिवो भूमिर्व्वराननेे!।

(मन्त्राभिधानम्)

ळ ।।२७।।

४. लः पृथ्वी विमला मेघोऽनन्तों हव्यवहः सिता।
व्यापिनी शिवदा केतुर्ज्जगत् सारतरं हठः।।१६७।।
ग्लौर्मृड़ानी च वेदार्थसारो नारायणः स्वयम्।
जठरो नकुलिः पीतः शिवेशोऽनङ्गमालिनी।।१६८।।

(प्रकारान्तर मन्त्राभिधानम्)

५. हृदयान्नाभिसंस्थानः शिवेशो कमलोऽसितः।
लघुप्रयत्नश्चोपात्यो ल-कारः प्रोच्यते बुधैः।।

(मातृका निघण्टुः)



द्वितीयं श्री ब्रह्मचारिणी




तृतीयं श्री चन्द्रघण्टेति



नवरात्री दिवसे नब श्रृंगार ।




चतुर्थकम श्री कूष्माण्डेति ॥



नवरात्री दिवसे नव श्रृंगार ।




पंञ्चमं श्री स्कन्दमातेति ।



नवरात्री दिवसे नब श्रृंगार।

तेजकी झलक दसों दिशाओंमें व्याप्त है। इनकी आठ भुजाएँ हैं। सात भुजाओंमें सात प्रकारके अस्त्र चमक रहे हैं तथा दाहिनी भुजामें जपमाला है। सिंहपर आसीन होकर ये देदीप्यमान हैं। कुम्हड़ेकी बलि इन्हें अती  प्रिय है। अतएव इस शक्तिका 'कूष्माण्डा' यह नाम विश्वमें प्रसिद्ध हो गया— ऐसी व्याख्या रुद्रयामल एवं कुब्जिकागमतन्त्रमें उपोद्बलित है।

**कूष्माण्डादुर्गाका ध्यान**

**सुरासम्पूर्णकलशं रुधिराप्लुतमेव च।**
**दधाना हस्तपद्माभ्यां कूष्माण्डा शुभदास्तु मे।।**

रुधिरसे परिप्लुत एवं सुरासे परिपूर्ण कलशको दोनों करकमलोंमें धारण करनेवाली कूष्माण्डा दुर्गा मेरे लिये शुभदायिनी हों।

***स्कन्दमातेति***— पाँचवीं दुर्गाकां नाम स्कन्दमाता है। शैलपुत्रीने ब्रह्मचारिणी बनकर तपस्या करनेके बाद भगवान् शिवसे विवाह किया। तदनन्तर स्कन्द उनके पुत्ररूपमें उत्पन्न हुए। उनकी माता होनेसे ये 'स्कन्दमाता' कहलाती हैं। ये स्कन्द देवताओंकी सेनाका संचालन करनेसे सेनापति हैं। ये स्कन्दमाता अग्निमण्डलकी देवता हैं, स्कन्द इनकी गोदमें बैठे हैं। इनकी तीन आँखें और चार भुजाएँ हैं। ये शुभ्रवर्णा हैं तथा पद्मके आसनपर विराजमान हैं।

**स्कन्ददुर्गाका ध्यान**

**सिंहासनगता नित्यं पद्माञ्चितकरद्वया।**
**शुभदास्तु सदा देवी स्कन्दमाता यशस्विनी।।**

जो नित्य सिंहासनपर विराजमान रहती हैं तथा जिनके दोनों हाथ कमलोंसे सुशोमित होते हैं, के पशस्विनी दुर्गादेवी स्कन्दमाता सदा कल्याणदायिनी हों।

***षष्ठं कात्यायनीति च***— कात्ययनी यह छठी दुर्गाशक्तिका नाम है। 'कत' का पुत्र 'कात्य' है। इस कात्यक गोत्रमें पैदा होनेवाले ऋषि कात्यायन हुए। इसी नामके कात्यायन आचार्य हुए  हैं, जिन्होंने पाणिनिकी अष्टाध्यायीकी पूर्ति करनेके लिये 'वार्तिक' बनाये हैं। इन्हींको 'वररुचि'[1] भी कहते हैं। इन कात्यायन ऋषिने इस धारणासे भगवती पराम्बाकी तपस्या की कि आप मेरी पुत्री हो जायँ। भगवती ऋषिकी भावनाकी पूर्णताके लिये उनके यहाँ ये पुत्रीके रूपमें अवतीर्ण हुईं। इससे इनका नाम 'कात्यायनी' पड़ा। वृन्दावनका गोपेयोने श्रीकृष्णको पति-रूपमें पानेके लिये मार्गशीर्षके महीने में कालिन्दी— यमुना नदीके तटपर 'कात्यायनी' की पूजा की थी। इससे सिद्ध है कि यह ब्रजमण्डलकी अधीश्वरी देवी हैं। इतका स्वर्णमय दिव्य स्वरूप है। इनके तीन नेत्र तथा आठ भुजाएँ हैं। इन आठ भुजाओंमें आठ प्रकारके अस्त्र-शस्त्र हैं। इनका बाहन सिंह है

## कात्यायनीदुर्गाका ध्यान

**चन्द्रहासोज्ज्वलकरा शार्दूलवरवाहना।**
**कात्यायनी शुभं दद्याद् देवी दानवघातिनी।।**

जिनका हाथ उज्ज्वल चन्द्रहास (तलवार) से सुशोभित होता है तथा सिंहप्रवर जिनका वाहन है, वे दानवसंहारिणी दुर्गादेवी कात्यायनी मङ्गल प्रदान करें।

***सप्तमं कालरात्रीति***— सावतीं दुर्गा-शक्तिका नाम 'कालरात्रि' है। इनके शरीरका रंग अन्धकारकी तरह गहरा काला है। इनके सिरके केश बिखरे हुए हैं। इनके गलेमें विद्युत्-सदृश चमकीली माला है। इनके तीन नेत्र हैं जो ब्रह्माण्डकी तरह गोल हैं। इन तीनों नेत्रोंसे विद्युत्की ज्योति चमकती रहती है। नासिकासे श्वास-प्रश्वास चोड़नेपर हजारों अग्निकी ज्वालाएँ निकलती रहती हैं। ये गदहेकी सबारी करती हैं। ऊपर उठे हुए दाहिने हाथमें चमकती तलवार है। उसके नीचेवाले हाथमें वरमुद्रा है, जिससे भक्तोंको अभीष्ट वर देती हैं। बाँयें हाथ में जलती हुई मसाल है और उसके नीचेवाले बाँयें हाथमें अभय-मुद्रा है, जिससे एपने सेवकोंको अभयदान करती और अपने भक्तोंको सब प्रकारके कष्टोंसे मुक्त करती हैं। अतएव शूभ करनेसे यह 'शभंकरी' भी हैं।

## कालरात्रिदुर्गाका ध्यान

**करालरूपा कालाब्जसमानाकृतिविग्रहा।**
**कालरात्रिः शुभं दद्याद् देवी चण्डाट्टहासिनी।।**

जिनका रूप विकराल है, जिनकी आकृति और विग्रह कृष्ण कमल-सदृश है तथा जो भयानक अट्टहास करनेवाली हैं, वे कालरात्रिदेवी दुर्गा मङ्गल प्रदान करें।

***महागौरीति चाष्टमम्***— आठवीं दुर्गा-शक्तिका नाम 'महागौरी' है। इनका वर्ण शङ्ख, इन्दु एवं कुन्दके सदृश गौर है। इनकी अवस्था आठ वर्ष है— **'अष्टवर्षा भवेद् गौरी।'** इनके वस्त्र एवं आभूषण सभी श्वेत्, स्वच्छ हैं। इनके तीन नेत्र हैं। ये वृषभवाहिनी और चार भुजाओंवाली हैं। ऊपरवाले वामहस्तमें अभय-मुद्रा और नीचेके बायेंहाथमें त्रिशूल है। ऊपरके दक्षिण हस्तमें जमरू वाद्य और नीचेवाले दक्षिण हस्तमें वरमुद्रा है। ये सुवासिनी, शान्तमूर्ति और शान्त-मुद्रा हैं।

'नारद-पाञ्चरात्र' में लिखा है कि **'व्रियेऽहं वरदं शम्भुं नान्यं देवं महेश्वरात्।'** इस प्रतिज्ञाके अनुसार शम्भुकी प्राप्तिके लिये हिमालयमें तपस्या करते समय गौरीका शरीर धूल-मिट्टीसे ढँककर मलिन हो गया था। जब शिवजीने गङ्गाजलसे मलकर उसे धोया, तब महागौरी और विद्युत्के सदृश कान्तिमान् हो गया— हो गया। इसीसे ये विश्वमें 'महागौरी' नाम से प्रसिद्ध हुईं।



नवरात्री दिवसे नव श्रृंगार ।




सप्तमं श्री कालरात्रि च ।



नवरात्री दिवसे नब श्रृंगार ।




श्री महा गौरीति चाष्टमम् ॥



नवरात्री दिवसे नब श्रृंगार ।



नवरात्री दिवसे नव श्रृंगार ।

## महागौरीदुर्गाका ध्यान

**श्वेतहस्तिसमारूढा श्वेताम्बरधरा शुचिः। महागौरी शुभं दद्यान्महादेवप्रमोददा।।**

जो श्वेत हाथीपर आरूढ़ होती हैं, श्वेत वस्त्र धारण करती हैं, सदा पवित्र रहती हैं तथा महादेवजीको आनन्द प्रदान करती हैं, वे महागौरी दुर्गा मङ्गल प्रदान करें।

***नवमं सिद्धिदात्री च***— नवीं दुर्गा-शक्ति 'सिद्धि-दात्री' हैं। मार्कण्डेयपुराणमें अणिमा, महिमा, गरिमा, लघिमा, प्राप्ति, प्राकाम्य, ईशित्व एवं वशित्व— ये आठ सिद्धियाँ बतलायी गयी हैं। इन सबको देनेवाली ये महाशक्ति हैं। ब्रह्मवैवर्तपुराणके श्रीकृष्ण-जन्मखण्डमें १-अणिमा, २-लघिमा, ३-प्राप्ति, ४-प्राकाम्य, ५-महिमा, ६-ईशित्र, वशित्व, ७-सर्वकामावसायिता, ८-सर्वज्ञत्व, ९-दूरश्रवण, १०-परकायप्रवेशन, ११-वाक्सिद्धि, १२-कल्पवृक्षत्व, १३-सृष्टि, १४-संहारकरणसामर्थ्य, १५-अमरत्व, १६-सर्वन्यायकत्व, १७-भावना, १८-सिद्धि सिद्धयोऽष्टादश स्मृताः' इन अठारह सिद्धियों का उल्लेख है। इन सबकोये देती हैं। देवीपुराणमें कहा गया है कि भगवान् शिवने इनकी आराधना करके सब सिद्धियाँ पायीं और इनकी कृपासे उनका आधा अङ्ग देवीका हो गया, जिससे उनका नाम जगत्में 'अर्द्धनारीश्वर' प्रसिद्ध हो गया। ये देवी सिंहवाहिनी तथा चतुर्भुजा और सर्वदा प्रसन्नवदना हैं। दुर्गाके इस स्वरूपकी देव, ऋषि-मुनि, सिद्ध, योगी साधक और भक्त— सभी सर्वश्रेयकी प्राप्तिके लिये आराधना-उपासना करते हैं।

## सिद्धिदायिनीदुर्गाका ध्यान

**सिद्धगन्धर्वयक्षाद्यैरसुरैरमरैरपि।**
**सेव्यमानासदा भूयात् सिद्धिदा सिद्धिदायिनी।।**

सिद्धों, गन्धवों, यक्षों, असुरों और देवोंद्वारा भी सदा सेवित होनेवाली सिद्धिदायिनी दुर्गा सिद्धि प्रदान करनेवाली हों।

## *अष्टमहालक्ष्मीके स्वरूप और ध्यान*

**(१)** ***द्विभुजा लक्ष्मीका ध्यान***

**हरेः समीपे कर्तव्या लक्ष्मीस्तु द्विभुजा नृप। दिव्यरूपाम्बुजकरा सर्वाभरणभूषिता।।**

**(२)** ***गजलक्ष्मीका ध्यान***

**लक्ष्मीः शुक्लाम्बरा देवी रूपेणाप्रतिमा भुवि। पृथक् चतुर्भुजा कार्या देवी सिंहासने शुभा।।**
**सिंहासनेऽस्याः कर्तव्यं कमलं चारुकर्णिकम्। अष्टपत्रं महाभागा कर्णिकायां सुसंस्थिता।।**

विनायकवदासीना देवी कार्या चतुर्भुजा। बृहन्नालं करे कार्ये तस्याश्च कमलं शुभम्।। दक्षिणे यादवश्रेष्ठ केयूरप्रान्तसंस्थितम्। वामेऽमृतघटः कार्यस्तथा राजन् मनोहरः।। तस्या-अन्यौ करौ कार्यौ विल्वशङ्खधरौ द्विज। आवर्जितकरं कार्ये तत्पृष्ठे कुञ्जरद्वयम्।। देव्याश्च मस्तके कार्ये पद्मं चापि मनोहरम्।

(३) *महालक्ष्मीका ध्यान*

कोल्हापुरं विनान्यत्र महालक्ष्मीर्यदोच्यते। लक्ष्मीवत्सा तदा कार्या सर्वाभरमणभूषिता।। दक्षिणाधःकरे पात्रमूर्ध्वे कौमोदकीं ततः। वामाध्वे खेटकं चैव श्रीफलं तदधःकरे।। बिभ्रती मस्तके लिङ्गं पूजनीया विभूतये।

(४) *श्रीदेवीका ध्यान*

पाशाक्षमालिकाम्भोजसृणिभिर्वामसौम्ययोः। पदमासनस्थां ध्यायेत श्रियं त्रैलोक्यमातरम्।।

(५) *वीरलक्ष्मीका ध्याम*

वीरलक्ष्मीरितिख्याता वरदाभयहस्तिनी। ऊर्ध्यपद्मद्वयौ हस्तौ तथा पद्मासने स्थिता।।

(६) *द्विभुजा वीरलक्ष्मीका ध्यान*

दक्षिणे त्वभयं विद्धि ह्यत्तरे वरदं, तथा। ऊरू पद्मदलाकारौ वीरश्रीमूर्तिलक्षणम्।।

(७) *अष्टभुजा वीरलक्ष्मीका ध्यान*

पाशाङ्कुशाक्षसूत्रवराभयगदापद्मपात्रहस्ता कार्या।।

(८) *प्रसन्नलक्ष्मीका ध्यान*

वन्दे लक्ष्मीं परशिवमयीं शुद्धजाम्बूनदाभां तेजोरूपां कनकवसनां सर्वभूषोज्ज्वलाङ्गीम्।
बीजापूरं कनककलशं हेमपद्मं दधांनामाद्यां शक्तिं सकलजननीं विष्णुवामाङ्कसंस्थाम्।।

## *चतुःषष्टियोगिनीका ध्यान*

अष्टाष्टकं प्रक्ष्यामि योगिनीनां समासतः। आद्यष्टकं सुवर्णाभं त्रिशूलं डमरुं तथा।। पाशं चासिं दधानं तद्ध्यायेत् सर्वाङ्गसुन्दरम्। अथ द्वितीयकं ध्यायेदक्षमालामथांकुशम्।। दधानं पुस्तकं वीणां सुश्वेतमणिभूषणम्। ज्वालां शक्तिं गदां कुन्तं दधातं नीलवर्णकम्।। ध्यायेत्तृतीयं शुभदमष्टकं शुभलक्षणम्। खङ्गं खेटं पट्टिशं च दधानं परशुं तथा।। धूम्रवर्णं चतुर्थं तद्ध्यायेदष्टकमादरात्। कन्तं खेटं च परिघं भिंदिपालं तथैव च।।

पञ्चमाष्टकमेतद्धि श्वेतं स्यात्सुमनोहरम्। पीतं षष्ठमृपी रक्तमष्टमं च तडित्प्रभम्।।
कुन्तादिकं समं प्रोक्तं षडारभ्याष्टमान्तकम्। दिव्ययोगा महायोगा सिद्धयोगा महेश्वरी।।
पिशाचिनी डाकिनी च कालरात्री निशाचरी। कंकाली रौद्रवेताली हुंकारी भुवनेश्वरी।।
ऊर्ध्वकेशी विरूपाक्षी शुष्काङ्गी नरभोजिनी। फटकारी वीरभद्रा च धूम्राक्षी कलहप्रिया।।
रक्ताक्षी राक्षसी घोरा विश्वरूपा भयंकरी। कामाक्षी चोग्रचामुण्डा भीषणा त्रिपुरान्तका।।
वीरकौमारिका चण्डी वाराही मुण्डधारिणी। भैरवी हस्तिनी क्रोधदुर्मुखी प्रेतवाहिनी।।
खट्वाङ्गदीर्घलम्बोष्टी मालती मन्त्रयोगिनी। अस्थिनी चक्रिणी ग्राहा कंकाली भुवनेश्वरी।।
कंटकी काटकी शुभ्रा क्रियादूती करालिनी। शङ्खिनी पद्मिनी क्षीरा ह्यसंधा च प्रहारिणी।।
लक्ष्मीश्च कामुकी लोला काकदृष्टिरधोमुखी। धूर्जटी मालिनी घोरा कपाली विषभोजिनी।।
चतुष्षष्टिस्समाख्याता योगिन्यो वरसिद्धिदाः।।

### *षोडशमातृकाओंका स्मरण*

गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः।।
धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता। गणेशेनाधिका ह्येता वृद्धौ पूज्याश्च षोडश।।

### *सप्तघृतमातृकाओंका स्मरण*

श्रीर्लक्ष्मीश्च धृतिर्मेधा पुष्टिः श्रद्धा सरस्वती। मङ्गल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः।।

### *सप्तमातृकाओंके ध्यान*

**(१)** *ब्राह्मीका ध्यान*

तत्र ब्राह्मी चतुर्वक्त्रा षड्भुजा हंससंस्थिता। पिङ्गाभा भूषणोपेता मृगचरमोत्तरीयका।।
वरं सूत्रं स्रुवं धत्ते दक्षबाहुत्रये क्रमात्। वामे तु पुस्तकं कुण्डीं बिभ्रती चाभयंकरम्।।

**(२)** *माहेश्वरीका ध्यान*

माहेश्वरी वृषारूढा पञ्चवक्त्रा त्रिलोचना। श्वेतवर्णा दशभुजा चन्द्ररेखाविभूपिता।।
खड्गं वज्रं त्रिशूलं च परशुं चाभयं वरम्। पाशं घण्टां तथा नागमंकुशं बिभ्रती करैः।।

**(३)** *कौमारीका ध्यान*

षडानना तु कौमारी पाटलाभा सुशीलका। रविबाहुर्मयूरस्था वरदा शक्तिधारिणी।।
पताकां बिभ्रती दण्डं पात्रं बाणं च दक्षिणे। वामे चापमथो घण्टां कमलं कुक्कुटं तथा।
परशुं बिभ्रती चैव तदधस्त्वभयान्विता।।

(४) *वैष्णवीका ध्यान*

वैष्णवी ताक्ष्यर्गा श्यामा षड्भुजा वनमालिनी। वरदा गदिनी दक्षे विभ्रती च करेऽम्बुजम्।
शङ्खचक्राभयान् वामे सा चेयं विलसद्भुजा।।

(५) *वाराहीका ध्यान*

कृष्णवर्णा तु वाराही महिषस्था महोदरी। वरदा दण्डिनी खङ्गं विभ्रती दक्षिणे करे।।
खेटपात्राभयान् वामे सूकरास्या लसद्भुजा।।

(६) *ऐन्द्रीका ध्यान*

ऐन्द्री सहस्रदृक् सौम्या हेमाभा गजसंस्थिता। वरदा सूत्रिणी वज्रं विभ्रत्युर्ध्वंतु दक्षिणे।।
वामे तु कमलं पात्रं ह्यभयं तदधःकरे।।

(७) चामुणअडाका ध्यान्

चामुण्डा प्रेतगा कृष्णा विकृता चाहिभूषणा। द्रंष्ट्राली क्षीणदेहा च गर्ताक्षी कामरूपिणी।।
दिग्बाहुः क्षामकुक्षिश्च मुसलं चक्रचामरे। अंकुशं बिभ्रती खड्गं दक्षिणे चाथ वामके।।
खेटं पाशं धनुर्दण्डं कुठारं चापि बिभ्रती।।

## दशमहाविद्या ध्यान

दश महाविद्याके नाम ये है— १. काली, २. तारा, ३. षोडशी (त्रिपुरसुन्दरी), ४. भुवनेश्वरी, ५. छिन्नमस्ता, ६. त्रिपुरभैरवी, ७. धूमावती, ८. बगला, ९. मातङ्गी और १०. कमला। कहते हैं कि जब सतीने दक्षयज्ञमें जाना चाहा तब शिवजीने निषेध किया। इसपर भगवतीने पहले कालीमूर्ति प्रकट की फिर दशों दिशाओंमें दश मूर्तियोंमें आरिर्भूत होकर अपना प्रभाव दिखलाया। यही दश महाविद्या हैं। इनकी उत्पत्ति में मतभेद भी है।

### ध्यान

(१) शवारूढां महाभीमां घोरदंष्ट्रां वरप्रदाम्। हास्ययुक्तां त्रिनेत्रां च कपालकर्त्रिकाकराम्।।
मुक्तकेशीं ललज्जिह्वां पिबन्तीं रुधिरं मुहुः। चतुर्बाहुयुतां देवीं वराभयकरां स्मरेत्।।

(२) प्रत्यालीढपदार्पिताङ्घ्रि शवहृद्घोराट्टहासा परा खड्गेन्दीवरकर्त्रिस्वर्प्पर भुजा हुङ्कारबीजोद्भवा।
स्वर्वा नीलविशालपिङ्गलजटाजूटै कनागैर्युता जाड्यन्न्यस्य कपालके त्रिजगतां हन्त्युग्रतारा स्वयम्।।

(३) बालार्कमण्डलाभासां चतुर्बाहां त्रिलोचनाम्। पाशाङ्कुशशरांश्चापान् धारयन्तीं शिवां भजे।।

(४) उद्यादिनद्युतिमिन्दुकिरीटां तुङ्गकुचां नयनत्रययुक्ताम्।
स्मेरमुखीं वरदाङ्कुशपाशाभीतिकरां प्रभजे भुव नेशीम्।।

(५) छिन्नमस्तां करे वामे धारयन्तीं स्वमस्तकम्। प्रसारितमुखीं भीमां लेलिहानाग्रजिह्विकाम्।।
पिबन्तीं रौधिरीं धारां निजकण्ठविनिर्गताम्। विकीर्णकेशपाशाञ्च नानापुष्पसमन्विताम्।।
दक्षिणे च करे कर्त्री मुण्डमालाविभूषिताम्। दिगम्बरीं महाघोरां प्रत्यालीढपदे स्थिताम्।।
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम् डाकिनीवर्णिनीयुक्तां वामदक्षिणयोगतः।।
(६) उद्यद्भानुसहस्त्रकान्तिमरुणक्षौमां शिरोमालिकां रक्तालिप्तपयोधरां जपवटी विद्यामभीतिं वरम्।
हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविन्दश्रियं देवी बद्धहिमांशुरत्नमुकुटां वन्दे समन्दस्मिताम्।।
(७) विवर्णा चञ्चला दुष्टा दीर्घा च मलिनाम्बरा। विवर्णकुण्डला रूक्षा विधवा विरलद्विजा।।
काकध्वजरथारूढा विलम्बितपयोधरा। सूपहस्तातिरूक्षाक्षी धृतहस्ता वरान्विता।।
प्रवृद्धघोणा तु भृशं कुटिला कुटिलेक्षणा। क्षुत्पिपासार्दिता नित्यं भयदा कलहप्रिया।।
(८) मध्येसुधाब्धिमणिमण्डपरत्नवेदी सिंहासनोपरिगतां परिपीतवर्णाम्।
पीताम्बराभरणमाल्यविभूषिताङ्गी देवीं स्मरामि धृतमुद्गरवैरिजिह्वाम्।
जिह्वाग्रमादाय करेण देवीं वामेन शत्रून् परिपीडयन्तीम्।
गदाभिघातेन च दक्षिणेन पीताम्बराढयां द्विभुजां नमामि।।
(९) श्यामाङ्गीं शशिशेखरां त्रिनयनांरवसिंहासनस्थिताम्। वेदैर्बाहुदण्डैरसिखेटकपाशाङ्कुशधराम्।।
(१०)कान्त्या काञ्चनसन्निभां हिमगिरिप्रख्यैश्चतुर्भिर्गजैर्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियन्।
बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वला क्षौमाबद्धनितम्बबिम्बललितां वन्देऽरविन्दस्थिताम्।।

## *एकावन शक्तिपीठाः*

भगवान शिव सदैव पार्वती से ही विवाह करते हैं। हिमालय की पुत्री पार्वती से पूर्व उन्होंने दक्ष प्रजापति की कन्या सती से विवाह किया था। पार्वती के पूर्वजन्मों के मुण्ड की माला शिव अपने गले में धारण करते हैं। पार्वती अपने पूर्व जन्म में दक्ष कन्या सती थी।

दक्ष प्रजापति ब्रह्मा के पुत् हैं। एक बार जब वे देव-सभा में गये तो सभी देवताओं ने उनका सम्मान किया और आसन से खड़े हो गए परंतु दक्ष के जामाता भगवान शिव आदर देने हेतु खड़े नहीं हुए। प्रजापति दक्ष ने इसे अपना अपमान समझा और वे अपने जामाता से रूष्ट हो गए।

इसके पश्चात् दक्ष प्रजापति ने हरिद्वार के पास कनखल में 'बृहस्पति सव' नामक यज्ञ किया। उसमें सब देवताओं को बुलाया परंतु शिव को निमंत्रित नहीं किया। पिता के यहाँ यज्ञ होने का समाचार पाकर सती कनखल जाने को तैयार हुई। शिवजी ने मना किया और समझाया कि उन्हें निमंत्रित नहीं किया

गया है। परंतु सती ने पितृ-गृह जाने का हठ नहीं छोड़ा। शिव जी ने तब क्रुद्ध होकर अपनी जटा फटकारी। उसमें से वीरभद्र प्रकट हुए। साथ ही करोड़ों भूतों स धिरी काली भी प्रकट हुई। शिव ने काली और वीरभद्र को कुछ गणों के साथ सती के साथ जाने का आदेश दिया।

यज्ञ-स्थल में पहुँचने पर दक्ष ने सती का स्वागत नहीं किया। उलटे शिवजी की निंदा की। यज्ञ में शिव जी का कोई स्थान नहीं था। माँ ने भी सती से कोई प्रेम नहीं जताया। इस पर क्रुद्ध होकर सती यज्ञ-वेदी में कूद पड़ी। सभी ऋत्विज, देव, मुनि भयभीत हो उठे। वीरभद्र, काली और अन्य गण हाहाकार कर उठे। वीरभद्र ने देवताओं को पीटा दक्ष को पकड़कर उसका सिर काट डाला। सारे यज्ञ का विध्वंश कर दिया।

नारदजी ने यह वृत्तांत शिवजी को सुनाया। शिवजी बहुत क्रुद्ध हुए। स्तुति सुनकर शिव कनखल आए। वहाँ ब्रह्मा के कहने पर दक्ष को जीवित करना चाहा परंतु उसका सिर नहीं मिला। उसे यज्ञ की अग्नि में फेंक दिया गया था। तब यज्ञ पशुबकरे का सिर दक्ष की गरदन पर जोड़ दिया गया। दक्ष बकरे की आवाज में बाऽबाऽ करने लगे। यह सुनकर शिव बहुत प्रहन्न हुए। आज भी दक्ष की भांति शिवलिंग के सामने बकरे की भांति बाऽबाऽ करने पर शिव प्रसन्न होते हैं।

तत्पश्चात् भगवान शंकर सती की प्राणहीन देह कंधे पर लादकर भयंकर नृत्यकर त्रिलोकी में घूमने लगे। संसार काँप उठा। इस पर विष्णु भगवान ने अपने चक्र से सती के शरीर के टुकड़े-टुकड़े कर गिरा दिए। सती के शरीर के खण्ड तथा आभूषण ५१ स्थानों पर गिरे। उन स्थानों पर एक-एक शक्ति और एक-एक और एक-एक भैरव नाना प्रकार के रूप धारण कर स्थित हुए। उन स्थानों को शक्ति-पीठ कहा जाता है। इसका तंत्र चूड़ामणि में वर्णन दिया गया है। तंत्र चूड़ामणि में स्थान, सती का अंग या आभूषण, शक्ति और भैरव के नाम दिये गये हैं। देवी भागवत में भी एकसौ आठ शक्ति पीठ के नाम है। उसमें महर्षि वेद व्यास ने जनमेजय के प्रश्नानुसार पीठ स्थान और वहाँ के अधि देवता का नाम बतलाया है। परंतु उनमें से कुछ स्थानों के नाम केवल भावात्मक हैं, उनका भौगोलिक चित्रण नहीं किया जा सकता है।

**पंचाशदेकपीठानि एवं भैरवदेवताः। अङ्ग प्रत्यङ्गपातेन विष्णुचक्रक्षतेन च।।**
**ब्रह्मरन्ध्रं हिङ्गुलायां भैरवो भीमलोचनः। कोट्टरी सा महामाया त्रिगुणा या दिगम्बरी।।**
**करवीरे त्रिनेत्रं मे देवी महिषमर्दिनी। क्रोधीशो भैरवस्तत्र सुगन्धायां च नासिका।।**
**देवस्त्र्यम्बकनामा च सुनन्दा तत्र देवता। काश्मीरे कण्ठदेशश्च त्रिसंध्येश्वरभैरवः।।**
**महामाया भगवती गुणातीता वरप्रदा। ज्वालामुख्यां महाजिह्वा देव उन्मत्तभैरवः।।**
**अम्बिका सिद्धिदानाम्नी स्तनो जालन्धरे मम। भीषणो भैरवस्तत्र देवी त्रिपुरमालिनी।।**
**हृद्यपीठं वैद्यनाथे वैद्यनाथस्तु भैरवः। देवता जयदुर्गाख्या नेपाले जानुनी शिव।।**

मानसे दक्षहस्तो मे देवी दाक्षायणी हर।।
कपालो भैरवः श्रीमान् महामाया च देवता। उत्कले नाभिदेशस्तु विरजाक्षेत्रमुच्यते।।
अमरो भैरवस्तत्र सर्वसिद्धिविधायकः। गण्डक्यां गण्डपातश्च तत्र सिद्धिर्न संशयः।।
विमला सा महादेवी जगन्नाथस्तु भैरवः। बहुलायां बामबाहुर्बहुलाख्या च देवता।।
तत्र सा गण्डकी चण्डी चक्रपाणिस्तु भैरवः। उज्जयिन्यां कूर्परं च माङ्गल्यकपिलाम्बरः।।
भीरुको भैरवस्तत्र, सर्वसिद्धिप्रदायकः। चट्टले दक्षबाहुर्मे भैरवश्चन्द्रशेखरः।।
भैरवः सिद्धिदः साक्षाद देवी मङ्गलचण्डिका। विशेषतः कलियुगे वसामि चन्द्रशेखरे।।
व्यक्त रूपा भगवती भवानी तत्र देवता। भैरवस्त्रिपुरेशश्च सर्वाभीष्टप्रदायकः।।
त्रिपुरायां दक्षपादो देवी त्रिपुरसुन्दरी। योनिपीठं कामगिरौ कामाख्या तत्र देवता।।
त्रिस्त्रोतायां वामपादो भ्रामरी भैरवेश्वरः। सर्वदा विहरेद देवी तत्र मुक्तिर्न संशयः।।
यत्रास्ते त्रिगुणातीता रक्तपाषाणरूपिणी। प्रचण्डचण्डिका तत्र मातङ्गी त्रिपुरात्मिका।।
यत्रास्ते माधवः साक्षादुमानाथोऽथ भैरवः। एतानि नव पीठानि शंसन्ति नवभैरवाः।।
तत्र श्रीभैरवी देवी तत्र च क्षेत्रदवता। गौरीशिखरमारूह्य पुनर्जन्म न विद्यते।।
बगला कमला तत्र भुवनेशी सुधूमिनी। देवा मरणमिच्छन्ति किं पुनर्मानवादयः।।
सर्वत्र विरला चाहं कामरूपे गृहे गृहे। जयन्त्यां वामजङ्घा च जयन्ती क्रमदीश्वरः।।
करतोयां समासाद्य यावच्छिखरवासिनीम्। युगाद्यायां महामाया दक्षाङ्गुष्ठः पदो मम।।
शतयोजनविस्तीर्णं त्रिकोणं सर्वसिद्धिदम्। सर्वसिद्धिकरी देवी कालिका तत्र देवता।।
अङ्गुल्यश्चैव हस्तस्य प्रयागे ललिता भवः। देवता विमलानाम्नी संवर्तो भैरवस्तथा।।
भूतधात्री महामाया भैरवः क्षीरकण्टकः। मणिकर्णीति विख्याता कुण्डलं च मम श्रुतेः।।
नकुलीशः कालिपीठे दक्षपादाङ्गुली च मे। शर्वाणी देवता तत्र कुरूक्षेत्रे च गुल्फतः।।
भुवनेशी सिद्धिरूपा किरीटस्था किरीटतः। मणिबन्धे च गायत्री शर्वानन्दस्तु भैरवः।।
वाराणस्यां विशालाक्षी देवता कालभैरवः। भैरवः संवरानन्दो देशे देशे व्यवस्थितः।।
कन्याश्रमे च मे पृष्ठं निमिषो भैरवस्तथा। देवता देवगर्भाख्या नितम्बः कालमाधवे।।
स्थाणुर्नाम च सावित्री मणिवेदिकदेशतः। दृष्ट्वा प्रदक्षिणीकृत्य मन्त्रसिद्धिमवनामप्रुयात्।।
श्रीशैले च मम ग्रीवा महालक्ष्मीस्तु देवता। रामगिरौ स्तनान्यं च शिवानी चण्डभैरवः।।
काञ्चीदेशे च कङ्कालो भैरवो रूरूनामकः।
भैरवश्चासिताङ्गश्च देवी काली सुसिद्धिदा।
शोणाख्ये भद्रसेनस्तु नर्मदाख्ये नितम्बकम्।

वृन्दावने केशजालउमानाम्नी च देवता। भूतेशो भैरवस्तत्र सर्वसिद्धिप्रदायकः।।
संहाराख्य ऊर्ध्वदन्ते देवी नारायणी शुचौ। अधोदन्ते महारूद्रो वाराही पञ्चसागरे।।
करतोयातटे तल्पं वामे वामनभैरवः। अपर्णा देवता तत्र ब्रह्मरूपा करोद्भवा।।
श्री पर्वते दक्षतल्पं तत्र श्रीसुन्दरी परा। सर्वसिद्धीश्वरी सर्वा सुन्दरानन्दभैरवः।।
कपालिनी भीमरूपा वामगुल्फं विभाषके। भैरवश्च महादेव सर्वानन्दः शुभप्रदः।।
उदरं च प्रभासे मे चन्द्रभागा यशस्विनी। वक्रतुण्डो भैरवश्चोर्ध्वोष्ठो भैरवपर्वते।।
अवन्ती च महादेवी लम्बकर्णस्तु भैरवः। चिबुके भ्रामरी देवी विकृताक्ष जनस्थले।।
भैरवः सर्वसिद्धीशस्तत्र सिद्धिरनुत्तमा। गण्डो गोदावरीतीरे विश्वेशी विश्वमातृका।।
दण्डपाणिर्भैरवस्तु वामगण्डे तु रूक्मणि। भैरवो वत्सनाभस्तु तत्र सिद्धिर्न संशयः।।
रत्नावल्यां दक्षस्कन्धः कुमारी भैरवः शिवः। मिथिलायां महादेवी वामस्कन्धे महोदरः।।
नलहाट्यां नलपातो योगीशो भैरवस्तया। तत्र सा कालिका देवी सर्वसिद्धिप्रदायिका।।
कर्णाटे चैव कर्णो मे त्वभीरूर्नाम भैरवः। देवता जयदुर्गाख्या नानाभोगप्रदायिनी।।
वक्त्रेश्वरे मनःपातो वक्त्रनाथस्तु भैरवः। नदी पापहरा तत्र देवी महिषमर्दिनी।।
यशोरे पाणिपद्मं च देवता यशोरेश्वरी। चण्डश्च भैरवस्त यत्र सिद्धिमवाप्नुयात्।।
अट्टहासे चौष्ठपातो देवी सा फुल्लरा स्मृता। विश्वेशो भैरवस्तत्र सर्वाभीष्टप्रदायकः।।
हारपातो नन्दिपुरे भैरवो नन्दिकेश्वरः। नन्दिनी सा महादेवी तत्र सिद्धिर्न संशयः।।
लङ्कायां नूपुरं चैव भैरवो राक्षसेश्वरः। इन्द्राक्षी देवता तत्र इन्द्रेणोपासिता पुरा।।
विराटदेशमध्ये तु पादाङ्गुलिनिपातनम्। भैरवश्चामृताख्यश्च देवी तत्राम्बिका स्मृता।।
मागधे दक्षजङ्घा मे व्योमकेशस्तु भैरवः। सर्वानन्दकरी देवी सर्वानन्दफलप्रदा।।

(तन्त्रचूड़ामणिः)

## *शक्तिपीठ*

| *स्थान* | *अङ्ग तथा अङ्गभूषण* | *शक्ति* | *भैरव* |
|---|---|---|---|
| १- हिङ्गुला | ब्रह्मरन्ध्र | कोट्टधीशा | भीमलोचन |
| २- शर्करार | तीन चक्ष | महिषमदिंनी | क्रोधीश |
| ३- सुगन्धा | नासिका | सुनन्दा | त्र्यम्बक |

| | | | |
|---|---|---|---|
| ४- काश्मीर | कण्ठदेश | महामाया | त्रिसन्ध्येश्वर |
| ५- ज्वालामुखी | महाजिह्वा | सिद्धिदा | उन्मत्त भैरव |
| ६- जलन्धर | स्तन | त्रिपुरमालिनी | भीषण |
| ७- वैद्यनाथ | हृदय | जयदुर्गा | वैद्यनाथ |
| ८- नेपाल | जानु | महामाया | कपाली |
| ९- मानस | दक्षिणहस्त | दाक्षायणी | अमर |
| १०- उत्कलमें विरजाक्षेत्र | नाभिदेश | विमला | जगन्नाथ |
| ११- गण्डकी | गण्डस्थल | गण्डकी | चक्रपाणि |
| १२- बहुला | वाम बाहु | बहुलादेवी | भीरुक |
| १३- उजयिनी | कूर्पर | मङ्गलचण्डिका | कपिलाम्बर |
| १४- त्रिपुरा | दक्षिणपाद | त्रिपुरसुन्दरी | त्रिपुरेश |
| १५- चहल | दक्षिणबाहु | भवानी | चन्द्रशेखर |
| १६- त्रिस्रोता | यामपाद | भ्रामरी | भैरवेश्वर |
| १७- कामगिरि | योनिदेश | कामाख्या | उमानन्द |
| १८- प्रयाग | हस्ताङ्गुलि | ललिता | भव |
| १९- जयन्ती | वाम जङ्घा | जयन्ती | क्रमदीश्वर |
| २०- युगाद्या | दक्षिणाङ्गुष्ठ | भूतधात्री | क्षीरखण्डक |
| २१- कालीपीठ | दक्षिणपादाङ्गुलि | कालिका | नकुलीश |
| २२- किरीट | किरीट | विमला | संवर्त्त |
| २३- वाराणसी | कर्णकुण्डल मणिकर्णी | विशालाक्षी | कालभैरव |
| २४- कन्याश्रम | पृष्ठ | सर्वाणी | निमिष |
| २५- कुरुक्षेत्र | गुल्फ | सावित्री | स्थाणु |

| | | | |
|---|---|---|---|
| २६- मणिबन्ध | दो मणिबन्ध | गायत्री | सर्वानन्द |
| २७- श्रीशैल | ग्रीवा | महालक्ष्मी | शम्बरानन्द |
| २८- काञ्ची | अस्थि | देवगर्भा | रुरु |
| २९- कालमाधव | नितम्ब | काली | असिताङ्ग |
| ३०- शोणदश | नितम्बक | नर्मदा | भद्रसेन |
| ३१- रामगिरि | अन्य स्तन | शिवानी | चण्डभैरव |
| ३२- वृन्दावन | केशपाश | उमा | भूतेश |
| ३३- शुचि | ऊर्ध्वदन्त | नारायणी | संहार |
| ३४- पञ्चसागर | अधोदन्त | बाराही | महारुद्र |
| ३५- करतोयातट | तल्प | अर्पणा | वामनभैरव |
| ३६- श्रीपर्वत | दक्षिण गुल्फ | श्रीसुन्दरी | सुन्दरानन्दभैवर |
| ३७- विभाष | वाम गुल्फ | कपालिनी | सर्वानन्द |
| ३८- प्रभास | उदर | चन्द्रभागा | वक्रतुण्ड |
| ३९- भैरवपर्वत | ऊर्ध्व ओष्ठ | अवन्ती | लम्बकर्ण |
| ४०- जनस्थल | दोनों चिबुक | भ्रामरी | विकृताक्ष |
| ४१- सर्वशैल | वाम गण्ड | राकिनी | वत्सनाभ |
| ४२- गोदावरीतीर | गण्ड | विश्वेशी | दण्डपाणि |
| ४३- रत्नावली | दक्षिण स्कन्ध | कुमारी | शिव |
| ४४- मिथिला | वाभ स्कन्ध | उमा | महोदर |
| ४५- नलहाटी | नला | कालिकादेवी | योगेश |
| ४६- कर्णाट | कर्ण | जयदुर्गा | अभीरु |
| ४७- वक्रेश्वर | मनः | महिषमर्दिनी | वक्रनाथ |
| ४८- यशोर | पाणिपद्म | यशोरेश्वरी | चण्ड |
| ४९- अट्टहास | ओष्ठ | पुल्लरा | विश्वेश |

| | | | |
|---|---|---|---|
| ५०- नन्दिपुर | कण्ठहार | नन्दिनी | नन्दिकेश्वर |
| ५१- लङ्का | नूपुर | इन्द्राक्षी | राक्षसेश्वर |
| विराट | पादाङ्गुलि | अम्बिका | अमृत |
| मगध | दक्षिणजङ्घा | सर्वानन्दकरी | व्योमकेश |

किसी-किसी ग्रन्थमें शेषोक्त दो पीठोंका उल्लेख नहीं है। इक्यावन पीठ ही अनेक पुस्तकोमें गृहीत हुए है। देवीभागवतमें एकसौ आठ पीठस्थानोंका उल्लेख देखने में आता है। तन्त्रचूडामणिमें स्थान, अङ्ग, भैरव और शक्ति नामका जैसा विशेषरूपसे उल्लेख किया गया है, देवी भागवतमें वैसा नहीं है। इसमें महर्षि वेदव्यासने जनमे जयके प्रश्यानुसार पीठस्थान और वहाँके अधिदेवताका नाम उल्लेक किया है, जो इस प्रकार है—

| *स्थान* | *देवता* | | |
|---|---|---|---|
| १- वाराणसी | विशालाक्षी | १६- केदार | सन्मार्गदायिनी |
| २- नैमिषारण्य | लिङ्गधारिणी | १७- हिमवतपृष्ठ | मन्दा |
| ३- प्रयाग | ललिता | १८- गोकर्ण | भद्रकर्णिका |
| ४- गन्धमादन | कामुकी | १९- स्थानेश्वर | भवानी |
| ५- दक्षिणमानस | कुमुदा | २०- बिल्वक | बिल्वपत्रिका |
| ६- उत्तरमानस | विश्वकामा | २१- श्रीशैल | माधवी |
| ७- गोमन्त | गोमती | २२- भद्रेश्वर | भद्रा |
| ८- मन्दर | कामचारिणी | २३- वराहशैल | जया |
| ९- चैत्ररथ | मदोत्कटा | २४- कमलालय | कमला |
| १०- इस्तिनापुर | जयन्ती | २५- रुद्रकोटि | रुद्राणी |
| ११- कान्यकुब्ज | गौरी | २६- कालञ्जर | काली |
| १२- मलय | गम्भा | २७- शालग्राम | महादेवी |
| १३- एकाग्र | कीर्तिमती | २८- शिवलिङ्ग | जलप्रिया |
| १४- विश्व | विश्वेश्वरी | २९- महालिङ्ग | कपिला |
| १५- पुष्कर | पुरुहूता | ३०- माकोट | मुकुटेश्वरी |

| | | | |
|---|---|---|---|
| ३१- मायापुरी | कुमारी | ५५- मथुरा | देयकी |
| ३२- सन्तान | ललिताम्बिका | ५६- पाताल | परमेश्वरी |
| ३३- गया | मङ्गला | ५७- चित्रकूट | सीता |
| ३४- पुरुषोत्तम | विमला | ५८- विन्ध्य | विन्ध्ययासिनी |
| ३५- सहस्राक्ष | उत्पलाक्षी | ५९- करवीर | महालक्ष्मी |
| ३६- हिरण्याक्ष | महोत्पला | ६०- विनायक | उमादेवी |
| ३७- विपाशा | अमोघाक्षी | ६१- वैद्यनाथ | आरोग्या |
| ३८- पुण्ड्रवर्द्धन | पाटला | ६२- महाकाल | महेश्वरी |
| ३९- सुपार्श्व | नारायणी | ६३- उष्णतीर्थ | अभया |
| ४०- त्रिकटु | रुद्रसुन्दरी | ६४- विन्ध्यपर्वत | नितम्बा |
| ४१- विपुल | विपुला | ६५- माण्डव्य | माण्डवी |
| ४२- मलयाचल | कल्याणी | ६६- माहेश्वरीपुर | स्वाहा |
| ४३- सह्याद्रि | एकवीरा | ६७- छगलण्ड | प्रचण्डा |
| ४४- हरिश्चन्द्र | चन्द्रिका | ६८- अमरकण्टक | चण्डिका |
| ४५- रामतीर्थ | रमणी | ६९- सोमेश्वर | वरारोहा |
| ४६- यमुना | मृगावती | ७०- प्रभास | पुष्करावती |
| ४७- कोटितीर्थ | कोटवी | ७१- सरस्वती | देयमाता |
| ४८- मधुवन | सुगन्धा | ७२- तट | पारावारा |
| ४९- गोदावरी | त्रिसन्ध्या | ७३- महालय | महाभागा |
| ५०- गङ्गाद्वार | रतिप्रिया | ७४- पयोष्णी | पिङ्गलेश्वरी |
| ५१- शिवकुण्ड | शुभानन्दा | ७५- कृतशौच | सिंहिका |
| ५२- देविकातट | नन्दिनी | ७६- कार्त्तिक | अतिशाङ्करी |
| ५३- द्वारावती | रुक्मिणी | ७७- उत्पलावर्त्तक | लीला (लोला) |
| ५४- वृन्दावन | राधा | ७८- शोणसङ्गम | सुभद्रा |

| | | | |
|---|---|---|---|
| ७९- सिद्धवन | लक्ष्मी | ९४- कुशद्वीप | कुसोदका |
| ८०- भरताश्रम | अनङ्गा | ९५- हेमकूट | मन्मथा |
| ८१- जालन्धर | विश्वमुखी | ९६- कुमुदं | सत्यवादिनी |
| ८२- किष्किन्दापर्वत | तारा | ९७- अश्वत्य | वन्दनीया |
| ८३- देवदारुवन | पुष्टि | ९८- कुबेरालय | निधि |
| ८४- काश्मीरमण्डल | मेधा | ९९- वेदवदन | गायत्री |
| ८५- हिमाद्रि | भीमादेवी | १००- शिवसन्निधि | पार्वती |
| ८६- विश्वेश्वर | तुष्टि | १०१- देवलोक | इन्द्राणी |
| ८७- शङ्खोद्धार | धरा | १०२- ब्रह्मामुख | सरस्वती |
| ८८- पिण्डारक | धृति | १०३- सूर्यविम्ब | प्रभा |
| ८९- चन्द्रभागा | कला | १०४- मातृमध्य | वैष्णवी |
| ९०- अच्छोद | शिवधारिणी | १०५- सतीमध्य | अरुन्धती |
| ९१- वेणा | अमृता | १०६- स्त्रीमध्य | तिलोत्तमा |
| ९२- बदरी | उर्वशी | १०७- चित्रमध्य | ब्रह्मकला |
| ९३- उत्तरकुरु | ओषधि | १०८- सर्वप्राणीवर्ग | शक्ति |

देवीगीतामें देवीपीठोंकी संख्या ७२ दी गयी है, कुछ अन्य ग्रन्थोंमें भी पीठोंकी संख्या भिन्न-भिन्न दी गयी है।

## मुद्रानिघण्टः।

### *द्वादशमुद्राकलपतरङ्गः*

**अथ मुद्राः प्रवक्ष्यामि सर्व्वतन्त्रेषु गोपिताः। याभिर्व्विरचिताभिश्च मोदन्ते मन्त्रदेवताः।।१।।**
**अर्च्चने जपकाले च ध्याने काम्ये च कर्म्मणे।।२।।**
**नैवेद्ये च तथान्ने च तत्तत्कर्म्मप्रकशने। स्थाने मुद्राः प्रकर्त्तव्याः स्वस्वलक्षणसंयुताः।।३।।**
**आवाहनादिका मुद्रा नव साधारणा मताः। तता षड़ङ्गमुद्राश्च सर्व्वतन्त्रे नियोजयेत्।।४।।**
**एकोनविंशतिर्म्मुद्रा विल्वाह्वया मनोषिभिः। शङ्खचक्रगदापद्मवेणुश्रीवत्सकौस्तुभाः।।५।।**

वनमाला तथा ज्ञानमुद्रा विद्याह्वया तथा। गरुड़ाख्या तथा मुद्रा विष्णोः सन्तोषदायकाः।।६।।
नारसिंही च बाराही हयग्रैवी धनुस्तथा। काममुद्रा समाख्याता शिवस्य दशमुद्रिकाः।।७।।
लिङ्गयोनित्रिशूलाक्षमालेष्टाभोमृगाह्वयाः। खट्वाङ्गा च कपालाख्या जमरुः शिवतोषदाः।।८।।
सूर्य्यस्यैकैव पद्माख्या सप्तमुद्रा गणेशितुः। दन्तपाशाङ्कुशाविघ्नपरशुर्लड्डुकस्तथा।।९।।
वीजपूराह्वया मुद्रा विज्ञेया शक्तिपूजने। पाशङ्कुशवराभीतिखड्गचर्म्मधनुःशराः।।१०।।
मुषली मुद्रिका दौर्गी सुद्राः शक्तेः प्रियङ्कराः। मुद्गरः पाशवज्वाख्या जिह्वा ब्राह्मी तथैव च।।११।।
पञ्चमुद्राः समाख्याता ब्रह्मास्त्रजपपूजने। लक्ष्मीमुद्रार्च्चने लक्ष्म्या वाग्वादिन्यास्तु पूजने।।१२।।
अक्षमाला तथावीणा व्याख्यापुस्तकमुद्रिके। सप्तजिह्वाह्वया मुद्रा विज्ञेया वह्निपूजने।।१३।।
दशमुद्राः समाख्यातास्त्रिपुरायाः प्रपूजने। संक्षोभद्रावणाकर्षवश्योन्मादमहाऽङ्कुशाः।।१४।।
खेचरी विजयिन्याख्या त्रिखण्डा दश कीर्त्तिताः। कुम्भसुद्राभिषेके स्यात् पद्ममुद्रा तथासने।।१५।।
कालकर्णी प्रयोक्तव्या विघ्नशमकर्म्मणि। गालिनी च प्रयोक्तव्या जलशोधनकर्म्मणि।।१६।।
श्रीगोपालार्च्चने वेणुर्नृहरेनरिसिंहिका। वराहस्य च पूजायां वाराहाख्यां प्रदर्शयेत्।।१७।।
हयग्रीवार्च्चने चैव हयग्रैवीं प्रदर्शयेत्। रामार्च्चने धनुर्व्वाणमुद्रा पर्शुस्तथार्च्चने।।१८।।
पर्शुरामस्य विज्ञेया जगन्मोहनसंज्ञिका। जगन्मोहनपूजायां काममुद्रा तदर्च्चने।।१९।।
वासुदेवाह्वयाह्वाने कुञ्चमुद्रा तु रक्षणे। सर्व्वत्र प्रार्थने चैव प्रार्थनाख्यां प्रदर्शयेत्।।२०।।
उद्देशानुक्तमादायोच्यन्ते तल्लज्ञणानि च। हस्ताभ्यामञ्जली कृत्वाऽनामिकामूलपर्व्वणोः।।२१।।
अङ्गुष्ठौ निःक्षिपेत् सेयं मुद्रा त्वावाहनी स्मृता। अधोमुखी त्वियं चेत् स्यात् स्थापनी मुद्रिका स्मृता।।२२।।
उच्छ्रिताङ्गुष्ठमुष्ट्योश्च संयोगात् सन्निधापनी। अन्तःप्रवेशिताङ्गुष्ठा सैव संवोधिनी मता।।२३।।
उत्तानमुष्टियुगला सम्मुखीकरणी मता। देवताङ्गे षड़ङ्गानां न्यासःस्यात् सकलीकृतिः।।२४।।
सव्यहस्तवक्रमुष्टिर्दीर्घाधोमुखतर्ज्जनी। अवगुण्ठनमुद्रेयमभितो मुष्टिचञ्चला।।२५।।
अन्योन्याभिमुखाश्लिष्टकनिष्ठे नामिके पुनः। तथैव तर्ज्जनीमध्ये धेनुमुद्रेयमीरिता।।२६।।
अमृतीकरणं कुर्य्यात्तया साधकसत्तमः। अन्यीन्यग्रथिताङ्गुष्ठप्रसारितकराङ्गुली।।२७।।
महामुद्रेयमुदिता परमीकरणी बुधैः। प्रयोजयेदिमा मुद्रा देवताह्वानखर्म्मणि।।२८।।
अङ्गन्यासक्षमा मुद्रास्तासां लक्षणमुच्यते।
अनङ्गुष्ठाऽऽर्जवा हस्तशाखा भवेन्मुद्रा हृदये शीर्षके च।
अदोङ्गुष्ठा खलु मुष्टिः शिखायां करद्वन्द्वाङ्गुल्यो वर्म्मणि स्युः।।२९।।
नाराचमुक्तपृथगुद्धतवाहुयुग्मकाङ्गुष्ठतर्ज्जमुदितोर्द्धनिविष्टदृक्षु।
कथितास्त्रमुद्रा यत्राक्षिणी तर्ज्जनिमध्यमे स्तः।।३०।।
नेत्रत्रयं यत्र भवेदनामा षड़ङ्गमद्रा कथिता विधिज्ञैः।
वैष्णवानान्तु मुद्राणां कथ्यन्ते लक्षणानि तु।।३१।।

वामाङ्गुष्ठं तु संगृह्य दक्षिणेन तु मुष्टिना। कृत्वोत्तानां ततो मुष्टिमङ्गुष्ठन्तु प्रसारयेत्।।३२।।
वामाङ्गुल्यस्तथाश्लिष्टाः संयुक्ताः सुप्रसारिताः। दक्षिणाङ्गुष्ठसंस्पृष्टाः शङ्खमुद्रेयमभीरिता।।३३।।
हस्तौ तु सम्मुखौ कृत्वा संलग्नौ सुप्रसारितौ। कनिष्ठाङ्गुष्ठसंलग्नौ मुद्रैषा चक्रसंज्ञिका।।३४।।
अन्योन्याभिमुखौ हस्तौ कत्वा तु ग्रथिताङ्गुली। अङ्गुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते।।३५।।
गदा मुद्रेयमाख्याता विष्णोः सन्तोषवर्द्धनी। हस्तौ तु सम्मुखौ कृत्वा सन्नतावुन्नताङ्गुली।।३६।।
तलान्तर्म्मिलिताङ्गुष्ठौ मुद्रैषा पद्मसंज्ञिका। ओष्ठे वामकराङ्गुष्ठो लग्नस्तत्र कनिष्ठिका।।३७।।
दक्षिणाङ्गुष्ठसंलग्ना तत्कनिष्ठाप्रसारिता। तर्ज्जनीमध्यमानामाः किञ्चित् सङ्कोच्य चालिताः।।३८।।
वैणुमुद्रा भवेदेषा मुगुप्ता प्रेयसी हरेः। अन्योन्यस्पृष्टकरयोर्म्मध्यमानामिकाङ्गुली।।३९।।
अङ्गुष्ठेन तु बध्नीयात् कनिष्ठामूलसंश्रिते। तर्ज्जन्यी वक्रयेदेषा मुद्रा श्रीवत्ससंज्ञिका।।४०।।
अनामिकापृष्ठलग्नां दक्षिणस्य कनिष्ठिकाम्। कनिष्ठया दृढ़ं वद्धा तर्जन्या दक्षया तथा।।४१।।
वामामनामां बध्नीयाद्दक्षिणाङ्गुष्ठमूलके। अङ्गुष्ठानामे वामे संयोज्य सरलमायतम्।।४२।।
चलश्रोणवग्रसंलग्ना मुद्रा कौस्तुभसंज्ञिका। स्पृशेत् कण्ठादिपादान्तं तर्जन्याङ्गुष्ठनिष्ठया।।४३।।
करद्वयेन माला च मुद्रेयं बनमालिका। तर्ज्जन्यङ्गुष्ठके सक्ता वक्रतो हृदि विन्यसेत्।।४४।।
वामहस्तानुजं वामजानुमूर्द्धनि विन्यसेत्। ज्ञानमुद्रा भवेदेषा रामचन्द्रस्य वल्लभा।।४५।।
अङ्गुष्ठं वामसंज्ञं तदितरकरकाङ्गुष्ठकेनापि बद्धा तस्याङ्गं पीठयित्वाङ्गुलीभिरपि पुनर्व्वामहस्ताङ्गुलीभिः।
वद्धा गाढ़ं हृदिस्था यजतु विमलधीर्व्याहरन्मारवीजं
विल्वाख्या मुद्रिकैषा स्फुटमिह कथिता गोपनीया विधिज्ञैः।।४६।।
हस्तौ तु विमुखौ कृत्वा ग्रथयित्वा कनिष्ठके।
मिथस्तर्ज्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा।।४७।।
मध्यमानामिके द्वे तु द्वौ पक्षाविव चालयेत्।
एषा गरुड़मिद्रा स्याद्विष्णोः सन्तोषवर्द्धनी।।४८।।
जानुमध्ये शिरः कृत्वा चिवुकोष्ठौ समाकृतौ।
हस्तौ तु भूमिसंलग्नौ कम्पमानौ पुनः पुनः।।४९।।
मुखं विवृत्तकं कृत्वा लेलिहानं च जिह्विकाम्। नारसिंही भवेदेषा मुद्रा तत्प्रीतिबर्द्धिनी।।५०।।
अङ्गुष्ठाभ्याञ्च करयोरथाक्रम्य कनिष्ठिके। अधोमुखीभिः सर्व्वाभिम्मुद्रियं नृहरेः स्मृता।।५१।।
दक्षोपरि करं वामं कृत्वोत्तानमधः सुधीः। भ्रामयेदिति संप्रोक्ता मुद्रा वाराहसंज्ञिका।।५२।।
दक्षहस्तञ्चोर्द्धमुखं वामहस्तमधोमुखम्। अङ्गुल्यग्रन्तु संयुक्तं मुद्रा वाराहसंज्ञिका।।५३।।

वामहस्ततले कृत्वा दक्,ाङ्गुलिमधोमुखीम्। संरोप्य मध्यमानामे मुखस्याधो विकुञ्चयेत्।।५४।।
हयग्रीवप्रिया भुद्रा तम्मूर्त्तिरनुकारिणी। वामस्य मध्यमाग्रन्तु तर्ज्जन्यग्रे तु योजयेत्।।५५।।
अनामिकां कनिष्ठाञ्च तस्याङ्गुष्ठेन पीड़येत्। स्पर्शयेद्वामके स्कन्धे धनुर्म्मुद्रियमीरिता।।५६।।
दक्षमुष्टिस्तु तर्ज्जन्या दीर्घया वाणमुद्रिका। तले तलन्तु करयोस्तिर्य्यक् संयोज्य चाङ्गुलीः।।५७।।
संहताः प्रसृताः कुर्य्यान्मुद्रेयं पर्शुसंज्ञिका। मूर्द्धस्थाङ्गुष्ठमुष्टी द्वे मुद्रा त्रैलोक्यमोहिनी।।५८।।
हस्तौ तु सम्पुटौ कृत्वा प्रसृताङ्गुलिकौ तथा। तर्ज्जन्यौ मध्यमापृष्ठे अङ्गुष्ठौ मध्यमाश्रितौ।।५९।।
काममुद्रेयमुदिता सर्व्वदेवप्रियङ्करी। सदाशिवप्रियाणाञ्च कथ्यन्ते लक्षणानि च।।६०।।
उच्छ्रितं दक्षिणआङ्गुष्ठं वामाङ्गुष्ठेन बन्धयेत्। वामाङ्गुलार्द्दक्षिणाभिरङ्गुलीभिश्च बन्धयेत्।।६१।।
लिङ्गमुद्रेयमाख्याता शिवसान्निध्यकारिणी। मिथः कनिष्ठिके बद्धा तर्ज्जनीभ्यामनामिके।।६२।।
अनामिकोर्द्धसंश्लिष्टदीर्घमध्यमयोरधः। अङ्गुष्ठाग्रद्वयं न्यस्येद्योनिमुद्रेयमीरिता।।६३।।
अङ्कुष्ठेन कनिष्ठान्तु बद्ध्वा दक्षाङ्गुलीत्रयम्। प्रसारयेत्रिशूलाख्या मुद्रैषा परिकीर्त्तिता।।६४।।
अधःकृतदक्षहस्तप्रसृतो वरमुद्रिका। ऊर्द्धकृतवामहस्तप्रसृतोऽभयमुद्रिका।।६५।।
मिलितानामिकाङ्गुष्ठे मध्यमाग्रन्तु योजयेत्। शिष्टाङ्गुल्युच्छ्रिते कुर्य्यान्मृगमुद्रेयमीरिता।।६६।।
पञ्चाङ्गुल्यो दक्षिणास्तु मिलिता ऊर्द्धमुन्नताः। खट्वाङ्गमुद्रा विख्याता शिवस्यातिप्रिया मता।।६७।।
पात्रवद्वामहस्तञ्च कृत्वा वामांसके तथा। निधायोच्छ्रितवत् कुर्य्यान्मुद्रा कापालकी मता।।६८।।
मुष्टिञ्च शिथिलां वद्धा ईषदुच्छ्रितमध्यमाम्। दक्षिणामूर्द्धमुत्तोल्य कर्णदेशे प्रचालयेत्।।६९।।
एषा मुद्रा जमरुका सर्व्वविघ्नविनाशिनी। ततो गणएशमुद्राणामुच्यन्ते लक्षणानि च।।७०।।
उत्तानोर्द्धमुखी मध्या सरलावद्धमुष्टिका। दन्तमुद्रा समाख्याता सर्व्वागमविशारदैः।।७१।।
वाममुष्टिस्थतर्ज्जन्या दक्षमुष्टिस्थतर्ज्जनीम्। संयोज्याङ्गुष्ठकाग्राभ्यां तर्ज्जन्यग्रे स्वके क्षिपेत्।।७२।।
एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्त्तिता। ऋज्वीञ्च मध्यमां कृत्वा तर्ज्ज्नीं मध्यपर्व्वणि।।७३।।
संयोज्याकुञ्चयेत् किञ्चिन्मुद्रैषाङ्कुशसंज्ञिका। तर्ज्जनीमध्यमासन्धिनिःसृताङ्गुष्ठमुष्टिका।।७४।।
अधोमुखी दीर्घरूपा मध्यमा विघ्नमुद्रिका। परशुमुद्रा गदिता प्रसिद्धा लड्डुमुद्रिका।।७५।।
वीजपूराह्वयामुद्रा प्रसिद्धत्वादुपेक्षिता। शक्तेयानाञ्च मुद्राणां कथ्यन्ते लक्षणानि च।।७६।।
पाशाङ्कुशवराभीतिधनुर्व्वाणाः समीरिताः। कनिष्ठानांमिके बद्धा स्वाङ्गुष्ठेनैव दक्षिणः।।७७।।
श्लिष्टाङ्गुली च प्रष्टन्ते सम्मुखः खण्डमुद्रिका। वामहस्तं तथा तिर्य्यक् कृत्वा चैव प्रसारयेत्।।७८।।
आकुञ्चिताङ्गुली कुर्य्याच्चवर्म्ममुद्रेयमीरिता। मुष्टिं कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणाम्।।७९।।
कुर्य्यान्मूषलमुद्रेयं सर्व्वविघ्नविनाशिनी। मुष्टिं कृत्वा कराभ्याञ्च वामस्योपरिदक्षिणाम्।।८०।।

कृत्वा शिरसि संयोज्य दुर्गामुद्रेयमीरिता।
चक्रमुद्रा तथा कृत्वा मध्यमे द्वे प्रसार्य्य च।।८१।।
कनिष्ठिके तथानीय तदग्रेऽङ्गुष्ठकौ क्षिपेत्।।८२।।
लक्ष्मीमुद्रा तथाह्येषा सर्व्वसम्पत्तिकारिणी।।
मुद्गरं पाशजिह्वेच प्रसिद्धत्वादुपेक्षिते। वामाङ्गुष्ठमधःकृत्वा अङ्गुलीभिर्निरुध्य च।।८३।।
ब्राह्मीमुद्रेति विख्याता ब्रह्मास्त्रजपकर्म्मणि। वीणा मुद्रा समाख्याता सरस्वत्याः प्रियङ्करी।।८४।।
वामाङ्गुष्ठं स्वाभिमुखं कृत्वा पुस्तकमुद्रिका। दक्षिणाङ्गुष्ठतर्ज्जन्यावग्रलग्ने तथाङ्गुलीः।।८५।।
प्रसार्य्य संहतोत्ताना एषा व्याख्यानमुद्रिका। रामस्य च सरस्वत्या अत्यन्तप्रेयसी मता।।८६।।
मणिबन्धस्थितौ कृत्वा प्रसृताङ्गुलिकौ करौ। कनिष्ठाङ्गुष्ठयुगले मिलित्वाथ प्रसारयेत्।।८७।।
सप्तजिह्वाख्यमुद्रेयं वैश्वानरप्रियङ्करी। कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेऽन्तरे।।८८।।
तर्ज्जनीमद्यमानामाः संहता बुग्नवर्ज्जिताः। मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता।।८९।।
दक्षाङ्गुष्ठं पराङ्गुष्ठे क्षिप्त्वा हस्तद्वयेन तु। सावकाशात्मकां मुष्टिं कुर्य्यात् सा कुम्भमुद्रिका।।९०।।
मुष्ट्योरूर्द्धकृताङ्गुष्ठौ तर्ज्जन्यग्रे सुविन्यसेत्। सर्व्वरक्षाकरी ह्येषा कुम्भमुद्रा समीरिता।।९१।।
प्रसृताङ्गुलिकौ हस्तौ मिथः शिलष्टौ च सम्मुखौ। कुर्य्याच्च हृदये चेदं मुद्रा प्रार्थनसंज्ञिका।।९२।।
अञ्जल्याञ्जलिमुद्रा स्यात् वासुदेवप्रियैव सा। अङ्गुष्ठावुन्नतौ कत्वा मुष्ट्योः संलग्नयोर्द्वयोः।।९३।।
तावेवाभिमुखौकृत्वा मुद्रैषा कामवर्षिणी। दक्षिणाङ्गुष्ठनिविड़ा नासिकार्पिततर्ज्जनी।।९४।।
मुद्रा विम्मयसंज्ञा स्याद्विस्मयावेषकारिणी। मुष्टिरूर्द्धकृताङ्गुष्ठा दक्षिणोदयमुद्रिका।।९५।।
तर्ज्जन्यङ्गुष्ठसंयोगादग्रतो विन्दुमुद्रिका।।९६।।
अधोमुखं वामहस्तं ऊर्द्धं दक्षिणहस्तकम्।
क्षिप्त्वाङ्गुलीभिः संयोज्य हस्तौ तु परिवर्त्तयेत्।
एषा संहारमुद्रा स्याद्विसर्ज्जनविधौ मता।।९७।।
वामकेश्वरत्रन्त्रोक्ताः प्रकाश्यन्तेऽच मुद्रिकाः।।९८।।

श्रीशिव उवाच।

शृणु देवि प्रवक्ष्यामि मुद्राः सर्व्वार्थसिद्धिदाः। याभिर्व्विरंचिताभिस्तु सान्निध्या त्रिपुरा भवेत्।।९९।।
परिवृत्तकरौ स्पृष्ट्वा अङ्गुष्ठौ कारयेत् समौ। अनामान्तगति कृत्वा तर्ज्जन्यौ कुटिलाकृती।।१००।।
कनिष्ठिकेन युञ्जीत निजस्थाने महेश्वरि। त्रिखण्डेयं समाख्याता त्रिपुराह्वानकर्म्मणि।।१०१।।

मध्यमामध्यगे कृत्वा कनिष्ठाङ्गुष्ठयोरधः।
तर्ज्जन्यौ दण्डवत्कृत्वा मध्यमापर्व्वनामिके।
एषा तु प्रथमा सुद्रा सर्व्वसंक्षोभकारिणी।।१०२।।
तस्या एव तु मुद्राया मध्यमे सरले यदा।
क्रियते परमेशानि तदा विद्राविणी भवेत्।।१०३।।
मध्यमा तर्ज्जनीभ्यान्तु कनिष्ठानामिके समे।
अङ्कुशाकाररूपाभ्यां मध्यमे परमेश्वरि।
दूयमाकर्षणी मुद्रा त्रैलोक्याकर्षणी मता।।१०४।।
यूपाकारौ करौ कृत्वा तर्ज्जन्यावङ्कुशाकृती।
परिवर्त्य क्रमेणैव मध्यमे तदधोगते।।१०५।।
क्रमेण देवि तेनैव कनिष्ठानामिकादयः।
संयोज्या निविड़ाः सर्व्वा अङ्गुष्ठस्याग्रदेशतः।
मुद्रेयं परमेशानि सर्व्ववश्यकरी मता।।१०६।।
सम्मुखौ तु करौ कृत्वा मध्यमा मध्यगं त्यजेत्।
अनामिके तु सरले तद्बहिस्तर्ज्जनीद्वयम्।।१०७।।
दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमानखदेशगौ।
मुद्रैषोन्मादिनी नाम क्लेदिनी सर्व्वयोषिताम्।।१०८।।
अस्यान्त्वनामिकायुग्ममधःकृत्वाङ्गुशाकृति।
तर्ज्जन्यावपि तेनैव क्रमेण विनियोजयेत्।
दूयं महाङ्कुशा मुद्रा सर्व्वकामार्थसाधिनी।।१०९।।
सव्यं दक्षिणहस्ते तु सव्यहस्ते तु दक्षिणम्।
वाहुं कृत्वा महादेवि हस्तौ संपरिवर्त्य च।।११०।।
कनिष्ठानामिके देवि युक्ते तेन क्रमेण च।
तर्ज्जनीभ्यां समाक्रान्ते सर्व्वोर्द्ध्वमपि मध्यमे।।१११।।
अङ्गुष्ठौ तु महेशानि सरलावपि कारयेत्।
दूयं सा खेचरी नाम मुद्रा सर्व्वोत्तमा मता।।११२।।
परिवर्त्य करौ स्पृष्टा अर्द्धचन्द्राकृती प्रिये।
तर्ज्जन्याङ्गुष्ठयुगलं युगपत् कारयेत्ततः।।११३।।

अधः कनिष्ठिकाङ्गुष्ठौ तदधो विनियोजयेत्।
तथैव कुटिले योज्य सर्व्वसम्पद्विवर्द्धनी।।११४।।

मध्यमे कुटिले कृत्वा तर्ज्जन्युपरि संस्थिते।
अनामिकामध्यगते तथैवहि कनिष्ठिके।।११५।।

सर्व्वा एकत्र संयोज्य अङ्गुष्ठपरिपीड़िताः।
एषा तु प्रथमा मुद्रा योनिमुद्रेयमीरिता।।११६।।

अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुली।
अङ्गुष्ठमध्यमे भूयः संलग्ने सुप्रसारिते।
महामुद्रेति विख्याता परामुक्तिकरी तथा।।११७।।

एता मुद्रा महेशानि त्रिपुराया मयोदिताः।
पूजाकाले प्रयोक्तव्या यथानुक्रमयोगतः।।११८।।

दूतीदं कथितं भद्रे मुद्राणां लक्षणं स्फुटम्।
पूजाकाले जपे स्नाने देवतासन्निधायकम्।
गोप्यंकुरु महादेवि न देयं कितवे शठे।।११९।।

।।इति श्रीवामकेश्वरतन्त्रे उमामहेश्वसंवादे मुद्रानिघण्टुः समाप्तः।।

## षडत्व शाम्भवी विद्या (मयूखा) के कतिपय लक्ष्मीधर व्याख्या प्रमाणम्

### आनन्दलहरीटीका

त्वत्कृपा असंभावितार्थसाधिकेति भूयेऽपि दार्ढ्यार्थं दर्शयति-नरमिति-वर्षायांसं वृद्धतमं, नयनयोर्विरसं अप्रियं, नर्मसु क्रीडासु जडं अशक्तं अनभिज्ञं वा, तब अपांगालोके नेत्रान्तदर्शने, पतितं विषयीभूतं चेत्, तदा ईदृशमपि नरं शतशो युवतयः अनुधावन्ति, स्वपतित्वेन वरयितुं यान्ति, हठात् मयैवायं वरणीय इति परस्परकलहेनेत्यर्थः। कीदृशः गलन्तः शिथिलीभवन्तो वेणीनां संयतकेशानां बन्धाः बन्धनानि यासां तास्तथा, कुचरूपा ये कलशाः कुम्भाः, तेभ्यो विस्रस्तानि भ्रष्टानि सिचयानि वसनानि यासां ताः, त्रट्यन्त्यो गलन्त्यः काञ्च्यो मेखला यासां ताः, विगलितनि पतितानि दुकूलानि अधःपरिधानवस्त्राणि यासां ताः। कुचकलशेत्यादिना तु उत्तरीयवस्त्रपतनाभिधानमिति न पौनरुत्तयम्। एतेन त्वत्कृपायाः किमप्यसाध्यं नास्तीति दर्शितम्। सिचयो लक्तवसनं स्त्रीवासश्चैव शाटके इति विश्वप्रकाशः।।१३।।

क्षितौ षट्पञ्चाशद्द्विसमधिकपञ्चाशदुदके हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले।
दिवि द्विष्षट्त्रिंशन्मनसि च चतुष्षष्टिरिति ये मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम्।।१४।।

भूमितत्व मे छप्पन, उदकतत्व में बावन, स्वाधिष्ठान-
अनलतत्व में बासठ, अनिलतत्व में चौवन, तथा महान्
गगनतत्त्व में किरण बहत्तर, मनस्तत्त्व में फिर चौसट
ज्वालाओं के उपर, बर सहस्रार में, हन सब से हट
तेरे चरणाम्बुज शोभित हैं सुधासिंधु में सुपुमावट!।।

लक्ष्मीधरा

क्षितौ पृथिवीतत्त्वयुक्ते मूलाधारे षट्पञ्चाशत् षडुत्तरपञ्चाशत्संख्याकाः, द्विसमधिकपञ्चाशत् द्वाभ्यां समधिका पञ्चाशत् उदके उदकतत्त्वयुक्ते मणिपूरस्थाने, हुताशे वह्नितत्त्वयुक्ते स्वाधिष्ठानचक्रे द्वाषष्टिः द्वौ च षष्टिश्च द्वाषष्टिः। 'विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्' इति सूत्रेण द्विशब्दादिकारस्य आकारः। चतुरधिकपञ्चाशत् चतुःसंख्यया अधिका पञ्चाशत् अनिले रायुतत्वयुक्ते अनाहतचक्रे, दिवि आकाशतत्त्वयुक्ते विशुद्धिचक्रे द्विःषट्त्रिंशत् द्विरावृत्तषट्त्रिंशत्संख्याकाः द्विसप्ततिसंख्याका इत्यर्थः, मनसि मनस्तत्त्वयुक्ते आज्ञाचक्रे चतुःषष्टिः, इति एवं प्रकारेण ये प्रसिद्धाः शास्त्रेषु आगमेषु, स्वसंवेद्यत्रेन च योगिनां प्रसिद्धाः मयूखाः सन्ति तेषां मयूखानामप्युपरि सहस्रदलमध्यवर्तिचन्द्रबिम्बातत्मके बैन्दवापरनामके सुधासिन्धौ तव भगवत्याः पादाम्बुजयुगं वर्तते विद्यते। एवं समयसंप्रदाय इति शेषः।।

अत्रेत्थं पदयोजना— हे भगवति, ये मयूस्वाः क्षितौ षट्पञ्चाशत्, उदके द्विसमधि कपञ्चाशत्, हुताशे द्वाषष्टिः, अनिले चतुरधिकपञ्चाशत्, दिवि द्विःषट्त्रिंशत्, मनसि चतुः-षष्टिः इति तेषामुपरि तव पादाम्बुजयुगं वर्तत इति शेषः।।

अत्र षट्पञ्चाशदित्यादिसंख्याशब्दानां संखेयपरत्वात् संख्येयानां मयूखानां बहुत्वेऽपि एकवचनान्तत्वमेव। यथा "विंशत्याद्याः सदेकत्वे सर्वाः संख्येयसंख्ययोः। संख्यार्थे द्विबहुत्वे स्तः"।। न तु संख्येये इति नियमात्, संख्येयानां मयूखानां नियमाप्रसक्तेर्बहुवचनत्वं सिद्धम्। अत्रेदं तत्त्वम्— षट्पञ्चाशदित्यादिसंख्यानां संख्येयविशेषणत्वेऽपि न शुक्लादिगुणतौल्यम्; यथाऽऽह पदमञ्जरीकारः— 'विंशत्यादयो गुणाः न शुक्लादिभिर्गुणैः समानधर्माणो भवितुमर्हन्ति। विंशत्यादयो हि तावत् पृथक्त्वयोगिषु द्रव्येषु वर्तन्त इति व्यासज्यवृत्तयः, शुक्लादयस्तु प्रत्येकपर्यवसायिनः' इति। अत्रेदमतिरहस्यम्— संख्येयपराणां संख्याशब्दानां बहुवचने षट्पञ्चाशतो मयूखा इति प्राप्तौ षट्त्रिंशदुत्तरशतोत्तरत्रिसहस्रसंख्याकाः भवेयुः। अतो न विवक्षितार्थसिद्धिरिति नियमफलमिति।।

अत्रेदमनुसंधेयम्— आधारस्वाधिष्ठानमणिपूरानाहतविशुद्ध्याज्ञाचक्रात्मकं श्रीचक्रं त्रिखण्डं सोमसूर्यानलात्मकम्। मूलाधारस्वाधिष्ठानचक्रद्वयमेकं खण्डम्। मणिपूरानाहतचक्रद्वयमेकं खण्डम्। विशुद्ध्याज्ञाचक्रद्वयमेकं खण्डम्। अत्र प्रथमखण्डोपरि अग्निस्थानम्। तदेव रुद्रग्रन्थिरित्युच्यते। द्वितीयखण्डोपरि सूर्यस्थानम्। तदेव विष्णुग्रन्थिरित्युच्यते। तृतीयखण्डोपरि चन्द्रस्थानम्। तदेव ब्रह्मग्रन्थिरित्युच्यते। 'सोमसूर्यानलात्मकम्' इति अवरोहणक्रमेणावगन्तव्यम्। तत्र प्रथमखण्डोपरि स्थितो वह्निः स्वज्वालादिभिः प्रथमखण्डमावृणोति। द्वितीयखण्डोपरि स्थितः सूर्यः स्वकीयैः किरणैः द्वितीयखण्डमावृणोति। तृतीयखण्डोपरि स्थितः चन्द्रः स्वकलाभिः तृतीयखण्डमावृणोति। आधारचक्रे महीतत्त्वात्मके वह्नेः षट्पञ्चाशज्ज्वालाः, मणिपूरके उदकतत्वात्मके स्वोपरिस्थिते द्विपञ्चाशज्ज्वालाः। एवमष्टोत्तरशतं वह्नेः ज्वालाः। सूर्यस्य अग्नितत्त्वात्मके स्वाधिष्ठाने द्वाषष्टिकिरणाः, अनिलतत्त्वात्मके चतुःपञ्चाशत्किरणाः। सूर्यकिरणानां मणिपूरं विहाय स्वाधिष्ठानप्रवेशः सूर्याग्न्योरेकत्वात्, सूर्यान्तर्भावादग्नेश्च। स्वाधिष्ठानमणिपूरयोस्तु सूर्याग्निस्थानयोः मध्ये अग्निस्थाने सूर्यप्रवेशः सूर्यस्थाने अग्निप्रवेशः। [1]जगद्दहनाग्निशामकसंवर्तमेघात्मकसूर्यकिरणजनितवर्षोत्पत्त्यर्थम्। एतत्तु 'तटित्वन्तं शक्त्या' इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः। एवं सूर्यस्य षोडशोत्तरशतं किरणा भवन्ति। चन्द्रस्य कलाः वियत्तत्त्वात्मके विशुद्धिचक्रे द्विसप्ततिः, मनस्तत्त्वात्मके आज्ञाचक्रे चतुःषष्टिः। एवं चन्द्रस्य षट्त्रिंशदुत्तरशतं कलाः भवन्ति। यतोक्तं भैरवयामले बैरवाष्टकप्रस्तावे— 'अष्टोत्तरशतं वह्नेः षोडशोत्तरकं रवेः। षट्त्रिंशदुत्तरशतं चन्द्रस्य च विनिर्णयः।।' इति। एवं सोमसूर्यानलाः पिण्डाण्डब्रह्माण्डे आवृत्य वर्तन्ते। पिण्डाण्डब्रह्माण्डयोरैक्यात् पिण्डाण्डावृतिरेव ब्रह्माण्डावृतिरिति रहस्यम्। एवं [2]पिण्डाण्डमतीत्य वर्तते सहस्रकमलम्। तच्च ज्योत्स्नामयो लोकः। तत्रत्यश्चन्द्रमा नित्यकलः। एतच्च 'तवाज्ञाचक्रस्थम्' इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः। 'आज्ञाचक्रोपरिस्थितश्चन्द्रः' इति यदुक्तं तत्तु चन्द्रकलावस्थानमात्रम्, न तु चन्द्रस्य स्थानमिति। यदुक्तं सुभगोदये— षोडशकलानां षोडशनित्यात्मकत्वात्। तासां प्रतिपदादिशुक्लपक्षकृष्णपक्षतिथ्यात्मकतया वृद्धिपक्षसद्भावात्, चन्द्रस्यापि सहस्रकमलगतस्य वृद्धिक्षयौ भवत एवेति,तत्तु चन्द्रमसः वृद्धिक्षयौ न भरतः, किंतु पोडशनित्यात्मकाः षोडश [3]चन्द्रकलाः प्रतिपदादिपौर्णमास्यन्ततिथिप्रवर्तिकाः, तथैव कृष्णप्रतिपदमारभ्य अमावास्यान्ततिथिप्रवर्तिकाः स्वात्मतिरोधानातिरोधानाभ्यामिति मन्त्रविद्रहस्यम्।।

इदमत्रानुसंधेयम्— श्रीविद्यायाः चन्द्रकलाविद्यापरनामधेयायाः पञ्चदशतिथिरूपत्वात् षष्ट्युत्तरत्रिशतं मयूखाः दिवसात्मकाः, तेन संवत्सरो लक्ष्यते। तस्य कालशक्त्यात्मकस्य संवत्सरस्य प्रजापतिरूपत्वात्,

---

१. जगद्दहनाग्निनामक० २. पिण्डाण्डमातृत्य ३. चन्द्राः

प्रजापतेः जगत्कर्तृत्वात्, मरीचीनां जगदुत्पत्तिस्थितिलयकरत्वम्। ते च मरीचयः अस्मिन्ब्रह्माण्डे पिण्डाण्डे च षष्ट्युत्तरत्रिंशतसंख्याकाः। एवमनन्तकोटिपिण्डाण्डब्रह्माण्डेषु। एवमेव प्रतिब्रह्माण्डं प्रतिपिण्डाण्डं षष्ट्युत्तरारत्रिं शतसंख्याकाः मयूखाः। अतश्चानन्तमयूखाः। ते च मयूखाः सूर्यचन्द्राग्निसंपृक्ताः भगवतीपादारविन्दजन्मानः तांस्तान् लोकान् प्रकाशयन्ति। अयं च 'लोकस्य द्वारमर्चिमत्पवित्रम्' (तै. ब्रा. ३. १२. ३) इति श्रुत्या मयूखानां भगवतीपादारविन्दसंभव उक्तः। तथैव च 'मरीचयः स्वायंभुवाः' (तै. आ. १. २७) इति श्रुत्या तेषां मरीचीनां सृष्टिस्थितिलयकरत्वमुक्तम्। एतदुक्तं भवति— सूर्यचन्द्राग्नयः भगवतीपादारविन्दोद्भूतानन्तकोटिकिरणमध्ये कतिपयान् किरणानाहृत्य भगवतीप्रसादसमासादितजगत्प्रकाशनसामर्थ्यात् जगन्ति प्रकाशयन्तीति। अतश्च सर्वलोकातिक्रान्तं चन्द्रकलाचक्रं बैन्दवस्थानमिति। तत्र वर्तमानं चरणाम्बुजम्। अनेककोटिब्रह्माण्डपिण्डाण्डावच्छिन्नमयूखानां उपर्येव वर्तमानत्वात् 'तेषामप्युपरि तब पादाम्बुजं वर्तते' इति सिद्धानुवादः, न त्वारोपस्तुतिरित्यनुसंधेयम्। यथोक्तं भैरवयामले चन्द्रज्ञानविद्यायां गौरीं प्रति महेश्वरेण— 'साधु साधु महाभागे पृष्टं त्रैलोक्यसुन्दरि। गुह्याद्गुह्यतमं ज्ञानं न कुत्रापि प्रकाशितम्।। कलाविद्या पराशक्तेः[१] श्रीचक्राकाररूपिणी। तन्मध्ये बैन्दवस्थानं तत्रास्ते परमेश्वरी।। सदाशिवेन संपृक्ता सर्वतत्त्वातिगा सती। चक्रं त्रिपुरसुन्दर्याः ब्रह्माण्डाकारमीश्वरि।। पञ्चभूतात्मकं चैव तन्मात्रात्मकमेव च। इन्द्रियात्मकमेवं च मनस्तत्त्वात्मकं तथा।। मायादितत्त्वरूपं च तत्त्वातीतं च बैन्दवम्। बैन्दरे जगदुत्पत्तिस्थितिसंहारकारिणी।। सदाशिवेन संपृक्ता तत्त्वातीता महेश्वरी। ज्योतीरूपा पराकारा यस्या देहोद्भवाः शिवे।। किरणाश्च सहस्रं च द्विसहस्रं च लक्षकम्। कोटिरर्बुदमेतेषां परा संख्या न विद्यते।। तामेवानुप्रविश्यैव भाति लोकं चराचरम्। यस्या देव्या महेशानि भासा सर्वं विभासते।। तद्भासा रहितं किंचिन्न च यच्च प्रकाशते। तस्याश्च शिवशक्तेश्च चिद्रूपायाश्चितिं विना।। आन्ध्यमापद्यते नूनं जगदेतच्चराचरम्। तेषामनन्तकोटीनां मयूखानां महेश्वरि।। मध्ये षष्ट्युत्तरं तेऽमी त्रिशतं किरणाः शिवे। ब्रह्माण्डे व्यश्नुवानास्ते सोमसूर्यानलात्मना। अग्नेरष्टोत्तरशतं षोडशोत्तरकं रवेः। षट्त्रिंशदुत्तरशतं चन्द्रस्य किरणाः शिवे।। ब्रह्माण्डं भासयन्तस्ते पिण्डाण्डमपि शांकरि। दिवा सूर्यस्तथा रात्रौ सोमो वह्निश्च सन्ध्ययोः।। प्रकाशयन्तः कालांस्ते तस्मात्कालात्मकास्त्रयः। (षष्ट्युत्तरं) च त्रिशतं दिनान्येव च हायनम्।। हायनात्मा महादेवः प्रजापतिरिति श्रुतिः प्रजापतिर्लोककर्ता मरीचिप्रमुखान्मुनीन्।। सृजत्येते लोकपालान् ते सर्वे लोकरक्षकाः। संहारश्च हरायत्तः उत्तर्त्तिभवनिर्मिता।। रक्षा तु मृडसंलग्ना सृष्टिस्थितिलये शिवः। नियुक्तः परमेशान्या जगदेवं प्रवर्तते।।' इति। 'तामेवानुप्रविश्य' इत्यादिना 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (कठ. ५. १५) इति श्रुत्यर्थोऽनूदितः। अत्र बहु वक्तव्यमस्ति, तदुत्तरत्र सम्यङ्निरूपयिष्यामः।। १४।।

---

१. पराशक्तिः

## सौभाग्यवर्धनी

अपाङ्गमहिमानमभिधाय चरणमहिमानमाह- क्षिताविति। अत्रैव व्यवस्ता। अत्र पूर्वतन्त्रमुत्तरतन्त्रमित द्वैविध्यम्। पूर्वतन्त्रं शक्तिपुरःसरम्; उत्तरतन्त्रं शिवपुरस्सरम्। शक्तिपुरस्सरं शाक्तमुच्यते; शिवपुरस्सरं शांभरमुच्यते। शांभवे शिवशक्त्यस्तेजोभिरेरोत्पन्ना आवरणदेवता रश्मय उच्यन्ते। शांभवं षडन्वयात्मकं तन्त्रम्। षडन्वयास्तु मानसनाभसवायव्यतैजसाप्यपार्थिवाः। एतेषामुत्पत्तिक्रम उच्यते। निर्गुणस्य सकलप्रपञ्चसाक्षिणः सच्चिदानन्दरूपस्य शिवस्य विश्वोत्पादनलीलासमुल्लसितस्फुरणविशेषादिनेशशक्तेः सकाशात् परा नाम शक्तरुत्पद्यते। सा च प्रपञ्चोन्मीलनलीलानुग्राहकमनोऽधिष्ठात्री सती ब्रह्मरन्ध्रादिभ्रूमध्यान्तव्यापिनीमुपाधिसरणिं समासाध्य मज्जादिदेवतेति निगद्यते। तथा चेच्छाज्ञानक्रियाकुण्डलिनीमातृकेति देवता उत्पन्नाः, नबोवायुतेजोजलभूमिस्थानेषु कण्ठहृदयनाभिलिङ्गगुदोर्ध्वविभागेषु विशुद्ध्यनाहतस्वाधिष्ठानमणिपूरमूलाधारसंज्ञेषु विलसन्ति। ताश्च त्वगसृङ्मांसमेदोऽस्थिदेवताः। तथा चैताभिर्देवताभिः सचराचरं विश्वं समुज्जृम्भते। तन्मध्ये कुण्डलिनीमातृकाभ्यां षडन्वयं तन्त्रमेतच्छांभवमुत्पन्नं सर्गादौ; पश्चात्सकलः प्रपञ्च उत्पन्नः। तदुक्तं कुब्जिकातन्त्रे— 'शिवस्य निष्प्रपञ्चस्यपरमारअथसवीरिणः। चिदुल्लासात्परा जाता पञ्चानां मातृरूपिणी।। अन्वयानां मार्गयोगात्सैका षोढा प्रजायते। परा चेच्छा तथा ज्ञानक्रियाकुण्डलिनीति च।। मातृका चाष्टधा प्रोक्ता पराभेदास्ततः स्मृताः। कुण्डलिनीमातृकाभ्यां च षोढा भिन्नं मयूखकम्।। नानाविधं सुविततं तन्त्रमेतत् षडन्वयम्। उत्पन्नं शांभवं पश्चाज्जगदेतच्चराचरम्।।' इति। तता च श्रुतिः— 'इयमेव सा या प्रथमा व्यौच्छत्। सा रूपाणि कुरुते पञ्च देवी। द्वे स्वसारौ वयतस्तन्त्रमेतत्। सनातनं विततं षण्मयूखम्' इति। अस्यार्थः— सा या प्रथमा व्यौच्छत् सा प्रसिद्धा इयमेव या प्रथमा जगदादिः व्यौच्छत् प्रकटीवभूव, परेति यावत्। सा रूपाणि पञ्च देवी दीव्यतीति देवी स्वलीलया इच्छाज्ञानक्रियाकुण्डलिनीमातृकेति पञ्चरूपाणि कुरुते। तत्र द्वे स्वासारौ कुण्डलिनीमातृके, एतच्छांभवं तन्त्रं षोढा विस्तीर्यमाणमयूखं सनातनं अनादिसिद्धपरम्परयाऽनुवर्तमानं वय़तः विस्तारयतः पृथिव्यादिस्थानेषु षट्पञ्चाशदादि भेदेन मयखजालं विस्तारयन्तीत्यर्थः। क्षितौ पार्थिवतत्त्वरूपा अष्टाविंशतिरश्मयः। पार्थिवतत्त्वानि तु पञ्च तन्मात्राः पञ्च भूतानि पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि अन्तःकरणचतुष्टयं कालः प्रकृतिपुरुषमहत्तत्त्वानीत्यष्टाविंशतिः। शिवशक्तिसंबन्ध भेदेन द्विविधानि; तेन षट्पञ्चाशत्। तेषां नामानि अग्ने वक्ष्यन्ते। आप्यतत्त्वानि षड्विशतिः— फञ्च भूतानि, पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि दश, तेषामर्था दश, मन इति। शैरशाक्त भेदेन द्विपञ्चाशत्। तैजसतत्वानि एकत्रिंशत्— पञ्चें भूतानि पञ्च तन्मात्राः ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि सार्थानि मन इत्येकत्रिशत्। शिवशक्त्योर्विभागेन द्विषष्टिः। वायव्यतत्त्वानि सप्तविंशतिः

महाताण्डवं चेति तत्र नटन्तं नटाकारानुकरिणं नृत्यन्तमिति वा। ताण्डवं तु उद्धतप्रयोगप्रधानत्वात् प्रायेण पुरुषकर्तृकं भवति। तदुक्तं— "तदुक्तमुद्धतप्रायप्रयोगं ताण्डवं मतम्।" तत्तु सर्वेषां रसानामभिव्यक्तिकारणं भवतीति नवरसम्। किंलक्षणमया समयया, लास्यपरया। लास्यं नृत्यविशेषं कुर्वन्त्या। लास्यं नाम सुकुमारांगं, यत् चतुर्विधाभिनयोपेतं नृत्यं, तत्प्रायेण स्त्रीकर्तृकमेव भवति। तदुक्तं "लास्यं तु सुकुमारांगं मकरध्वजवर्धनम्"। तत्परया तत्कुर्वाणया। उभाभ्यां नटनटीरूपाभ्यां स्वात्मानं मातापितृमन्तं मेने। यथा पितृभ्यां जननपालनपोषणादिना पोष्यमाणाः पुत्रादयः सुखेन क्रीडन्ति तद्वदिति। किंलक्षणाभ्यां जगदुदयविधिमुद्दिश्य जगदुदयानन्दं प्राप्त पितृभ्यां यथा पुत्रो जायते, आनन्देन पितरौ नृत्यतः, तथा चिरविनष्टं जगदुत्पन्नमित्यानन्दः, तेन नृत्यद्भ्यां, जगदुदयविधिमुद्दिश्य तव दयया सनाथाभ्यां सहकृताभ्यां सस्वामिकाभ्यां वा। महासंहारे जगति विनष्टे सति एतौ दुःखितौ भवत इति जगदुदयेन सुखिनौ भवेतामित्यनया तयोरुपरि दया जाता। परदुःखं दृष्ट्वा दुःखितस्य कारूणिकस्य तन्निदानच्छेदे तृष्णा भवतीति त्वद्दयापात्राभ्याम्। अथवा इदं जगच्चिरविनष्टं, पुनःकथमुत्पाद्यमिति शोकाकुलहृदयाभ्याम्। अस्मिन्पक्षे तव पदे न लगति। तदा परमेश्वर्या एव पञ्चमूतात्मकं षडाग्नायावच्छिन्नं शरीरं प्रकल्पितमेभ्यः मूलाधाराभिप्रायेण तवेति योजनीयम्। अत्र नवधा रस्यते, तेन नव तालाः, तैर्युक्तस्य महाताण्डवस्य नटं इत्यादिकं तु प्रमाणरहितत्वादुपेक्षणीयम्। अत्र नवाक्षरीविद्या श्रीशंकरस्वामिना गोपितास्ति, गुरुमुखादवगन्तव्या। तव स्वाधिष्ठान इत्यादि श्लोकत्रयेण मिथुनत्रयस्मरणेन, मिथुनत्रयमन्त्रस्य स्मरणं कर्तव्यं साधकैः इति शंकराचार्याणां हृदयं, मन्त्राक्षरबाहुल्यात्। एतत्त्रयस्मरणेन, मन्त्रजिज्ञासा भविष्यतीति भावः। एतावता ग्रन्थेन मन्त्रभागो विचारितः। इत आरभ्य परमेश्वर्याः श्रृंगारं वर्णयति।। इति आनन्दबारकृत्स्नश्रीशङ्कराचार्यस्याज्ञया श्रीआनन्दगिरिविरचितिसौन्दर्यलहर्यां मन्त्रोद्धारः।।४१।।

## तात्पर्यदीपिनी

अथाधारचक्रं निरूपयति-तवेति। हेमातः अहमाधारे मूले आधारचक्रस्य मूले भवात्मानं भवस्य आत्मानं सदाशिवं समयया सह वन्दे नमस्करोमि। कथंभूतया समयया। लास्यपरया लास्ये परा तया, नृत्यपरया। किंविधं भवात्मानं, नवरसमहाताण्डवनटं, नवो रसो यस्मिन्, एतादृशे ताण्डवे नटं, तथा सुकुमारीभिः स्त्रीभिर्नृत्यन्तं, अतः कारणादेताभ्यां उभाभ्यां शिवशक्तिभ्यां इदं जगत् जनकजननीमत् जज्ञे। किंविधाभ्यां उभयविधिमुद्दिश्य भगवत्या दयया सनाथाभ्यां, तयोस्तत्रैव कृपातरंगो बलवानभूदित्यर्थः। एवंरूपं षट्पञ्चाशच्छक्तियुक्तं आधारचक्रं निरूपितं भवति।।४१।।

## पदार्थचन्द्रिका

अथ षष्ठचक्रस्थं पार्वतीसहितं श्रीमहादेवं स्तौति। तवाधार इति। हे जननि, भवात्मानं भवदेहं समयया कालशक्त्या सह वन्दे। लास्यमत्र जगन्निर्माणमेव। यद्वा लास्यपरया समयवा शुभावहविधियुक्तया

महाताण्डवं चेति तत्र नटन्तं नटाकारानुकरिणं नृत्यन्तमिति वा। ताण्डवं तु उद्धतप्रयोगप्रधानत्वात् प्रायेण पुरुषकर्तृकं भवति। तदुक्तं— ''तदुक्तमुद्धतप्रायप्रयोगं ताण्डवं मतम्।'' तत्तु सर्वेषां रसानामभिव्यक्तिकारणं भवतीति नवरसम्। किंलक्षणमया समयया, लास्यपरया। लास्यं नृत्यविशेषं कुर्वन्त्या। लास्यं नाम सुकुमारांगं, यत् चतुर्विधाभिनयोपेतं नृत्यं, तत्प्रायेण स्त्रीकर्तृकमेव भवति। तदुक्तं ''लास्यं तु सुकुमारांगं मकरध्वजवर्धनम्''। तत्परया तत्कुर्वाणया। उभाभ्यां नटनटीरूपाभ्यां स्वात्मानं मातापितृमन्तं मेने। यथा पितृभ्यां जननपालनपोषणादिना पोष्यमाणाः पुत्रादयः सुखेन क्रीडन्ति तद्वदिति। किंलक्षणाभ्यां जगदुदयविधिमुद्दिश्य जगदुदयानन्दं प्राप्त पितृभ्यां यथा पुत्रो जायते, आनन्देन पितरौ नृत्यतः, तथा चिरविनष्टं जगदुत्पन्नमित्यानन्दः, तेन नृत्यद्भ्यां, जगदुदयविधिमुद्दिश्य तव दयया सनाथाभ्यां सहकृताभ्यां सस्वामिकाभ्यां वा। महासंहारे जगति विनष्टे सति एतौ दुःखितौ भवत इति जगदुदयेन सुखिनौ भवेतामित्यनया तयोरुपरि दया जाता। परदुःखं दृष्ट्वा दुःखितस्य कारूणिकस्य तन्निदानच्छेदे तृष्णा भवतीति त्वद्दयापात्राभ्याम्। अथवा इदं जगच्चिरविनष्टं, पुनःकथमुत्पाद्यमिति शोकाकुलहृदयाभ्याम्। अस्मिन्पक्षे तव पदे न लगति। तदा परमेश्वर्या एव पञ्चभूतात्मकं षडाग्नायावच्छिन्नं शरीरं प्रकल्पितमेभ्यः मूलाधाराभिप्रायेण तवेति योजनीयम्। अत्र नवधा रस्यते, तेन नव तालाः, तैर्युक्तस्य महाताण्डवस्य नटं इत्यादिकं तु प्रमाणरहितत्वादुपेक्षणीयम्। अत्र नवाक्षरीविद्या श्रीशंकरस्वामिना गोपितास्ति, गुरुमुखादवगन्तव्या। तव स्वाधिष्ठान इत्यादि श्लोकत्रयेण मिथुनत्रयस्मरणेन, मिथुनत्रयमन्त्रस्य स्मरणं कर्तव्यं साधकैः इति शंकराचार्याणां हृदयं, मन्त्राक्षरबाहुल्यात्। एतत्त्रयस्मरणेन, मन्त्रजिज्ञासा भविष्यतीति भावः। एतावता ग्रन्थेन मन्त्रभागो विचारितः। इत आरभ्य परमेश्वर्याः श्रृंगारं वर्णयति।। इति आनन्दबारकृत्स्नश्रीशङ्कराचार्यस्याज्ञया श्रीआनन्दगिरिविरचितिसौन्दर्यलहर्यां मन्त्रोद्धारः।।४१।।

## तात्पर्यदीपिनी

अथाधारचक्रं निरूपयति-तवेति। हेमातः अहमाधारे मूले आधारचक्रस्य मूले भवात्मानं भवस्य आत्मानं सदाशिवं समयया सह वन्दे नमस्करोमि। कथंभूतया समयया। लास्यपरया लास्ये परा तया, नृत्यपरया। किंविधं भवात्मानं, नवरसमहाताण्डवनटं, नवो रसो यस्मिन्, एतादृशे ताण्डवे नटं, तथा सुकुमारीभिः स्त्रीभिर्नृत्यन्तं, अतः कारणादेताभ्यां उभाभ्यां शिवशक्तिभ्यां इदं जगत् जनकजननीमत् जज्ञे। किंविधाभ्यां उभयविधिमुद्दिश्य भगवत्या दयया सनाथाभ्यां, तयोस्तत्रैव कृपातरंगो बलवानभूदित्यर्थः। एवंरूपं षट्पञ्चाशच्छक्तियुक्तं आधारचक्रं निरूपितं भवति।।४१।।

## पदार्थचन्द्रिका

*अथ षष्ठचक्रस्थं* पार्वतीसहितं श्रीमहादेवं स्तौति। तवाधार इति। हे जननि, भवात्मानं भवदेहं *समयया कालशक्त्या* सह वन्दे। लास्यमत्र जगन्निर्माणमेव। यद्वा लास्यपरया समयवा शुभावहविधियुक्तया

इति श्रीपदवाक्यप्रमाणज्ञातिरात्रयाजिमहाभट्टारकारविन्दलोचनाचार्यपुत्रश्रीरामकविडिण्डिम-मुकुटरायमहापात्रराशौ आनन्दलहरीभाष्यालोचने प्रथममुन्मीलनं सम्पूर्णम्।।

## गोपालसुन्दरी

क्रमप्रप्तौ पार्थिवरश्मिमुख्यौ देवदेव्यौ आह-तवाधार इति। तव त्वदधिष्ठिते मूले आधारे चतुर्दलमूलाधारचक्रे लास्यं शृङ्गाररसोचितनृत्यन्तं तत्परया समयया समयाख्यशक्त्या सह नवात्मानं नवकूटमहाविद्यात्मकं यद्वा पूर्वोक्तनवव्यूहरूपं नवखण्डनालात्मकं वा वस्तुतो नवरसरूपम्। 'रसो व सः' इति श्रुतेः। नवरसा अभिनेया यत्र तादृशं यन्महाताण्डवनृत्यविशेषं तस्य 'नटनाबिनायकं वन्दे'। मन्ये इत्यपि पाठः। एताम्यामुभाम्यां नटेश्वरीनटेश्वराभ्यामिदं जगत् जनकजननीमत् मातापितृयुक्तं जज्ञे जातम्। कीदृशाभ्यां? उदयविधिमुद्दिश्य दयया सनाथाभ्यां महासंहारानन्तरं जगदुत्पत्तिमनुसन्धाय दयया सनाथाभ्यां युक्ताभ्यामित्यर्थः, सिसृक्षोन्मीलितानुग्रहेण यथापूर्वं जगदुत्पन्नं विलोक्य सन्तोषेण लास्यताण्डवसमुत्सुकाभ्यां देवदेवीभ्यां जगदिदं मातापितृमज्जातं। मातापितरावपि पुत्रे जाते सन्तोषातिशयेन नृत्यत इति भावः। उभयविधमिति पाठे उभयप्रकारं स्थावरजङ्गमात्मकं चेतना चेतनात्मकं स्थूलसूक्ष्मात्मकं वा जगदुद्दिश्य या दया युक्ताभ्यामित्यर्थः। विष्णुपक्षेपि समानम्।।४१।।

इति श्रीमहाभागवतश्रीनरसिह्मस्वामिकृतं शक्तिविष्णुपरकं श्रीसौन्दर्यलहरीभाष्ये पूर्वो भागः।।

## आनन्दलहरीटीका

तवेति। तवाधिष्ठानभूते मूले आधारे मूलाधारचक्रे समयया समयानाम्न्या शक्त्या सह, कीद्दशा लास्यपरया नृत्यासक्तया, नव रसाः शृंगारादयो यत्र, तादृशे महाताण्डवे नृत्यविशेषे नट नर्तकं वन्दे। नव रसा तालाः। रसपदस्यात्र तालपरत्वमिति कश्चित्। मन्ये इति पाठे आराध्यताबुद्धिविषयीकरोमीत्यर्थः। कीदृशं नवात्मानं नवव्यूहात्मकभैरवस्वरूपं, नव व्यूहाश्च पूर्वं दर्शिताः। नवरसरूपं वा। 'रसो वै सः' इति श्रृतेः। नवकूटमहाविद्यात्मकमिति कश्चित्। एताभ्या मुपाभ्यां समयानवनटाभ्यां इदं जगत् जनकजननीमत् मातापितृयुक्तं जज्ञे जातम्। कीदृशाभ्यां, उदयविधिः उत्पत्तिविधानं, अर्थाज्जगत एव, उद्दिश्य स्थिताभ्यामिति शेषः। तेन क्त्वाप्रत्ययस्य स्थितिक्रियया सह समानकर्तृकत्वमक्षतम्। मत्प्रसूचिमनाराध्येत्यादिवत्। दयया निरुपधिपरदुःखप्रहाणेच्छया

## सौन्दर्यलहरी

सनाथाभ्यां युक्ताभ्यां अन्यावपि माता तरौ अपत्योत्पत्ताविव सदयौ हर्षान्नृत्यत इति भावः। उदयेत्यत्रोभयेति पाठे उभयं सृष्टिस्थितिरूपं बोध्यम्।।४१।।

इति श्रीगौडीयराढान्वयसच्छोत्रियवंशजगौरीकान्तसार्वभौमभट्टाचार्यविरचिता आनन्दलहरी-नामटीकायां पूर्वो भागः।।

## सौन्दर्यलहर्यामानन्दलहर्याख्यप्रथमभागस्थश्लोकानामनुक्रमणिका।।

**(प्रथमतः श्लोकसंख्या, अनन्तरं पृष्ठसंख्या)**



**।।श्रीसौन्दर्यलहर्या आनन्दलहर्याख्यः प्रथमो भागः समाप्तः।।**

श्री विद्यामहाणवः समाप्तः

"जगत्कृस्नम् वासुदेमयम्"

शुभमस्तु

"Parirakhniya Parivedika paramarthika"

# SRI VIDYA MAHARNAWAHA

## CHINTHAMANI

*(Special Super Deluxe Illustrated Edition)*

Volume -3




SRI VISHALAKSHIYAMBA
SRI CHIDHANANDA NATHA LAHARI




SRI VIDYA MAHARNAWAHA

3